# स्वायंभुवागमः

## स्वायंभुवसूत्रसंग्रहः
## विद्यापादः
## प्रथमः पटलः
## पशुविचारः

शिवं प्रणम्य परमं निधनेशमतः परम्
ज्ञानदीक्षे प्रवक्ष्यामि ते शृणुध्वं समाहितः १
अथात्ममलमायाख्यकर्मबन्धविमुक्तये
व्यक्तये च शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते २
तदेकमप्यनेकत्वं शिववक्त्राम्बुजोद्भवम्
परापरेण भेदेन गच्छत्यर्थप्रतिश्रयात् ३
एवमेतत्सुरेशानः शास्त्रसद्भावमुत्तमम्
सूत्रद्वयेन संगृह्य प्राह विस्तरशः पुनः ४
अथात्माविमलो बद्धः पुनर्मुक्तश्च दीक्षया
विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः ५
अचेतनो विभुर्नित्यो गुणहीनोऽक्रियोऽप्रभुः
व्याघातभागशक्तश्च शोध्यो बोध्योऽकलः पशुः ६
पूर्वं मायात्मकाद्बन्धादित्थमात्मा स्थितो मया
प्रोक्तो गुरुमुखोक्तेन श्लोकबन्धेन हे द्विजाः ७
भोक्ता भोजकभावेन नानाभोगविसर्पिणा
सांप्रतं प्रोच्यते बद्धो बन्धेनात्मा कलादिना ८
अत्यन्तमलिनस्यास्य प्रागुक्तस्याविकारिणः
कला संश्लेषमायाति शिवेच्छानुविधायिनी ९
कलोद्बलितचैतन्यो विद्यादर्शितगोचरः
रागेण रञ्जितश्चापि बुद्ध्यादिकरणैस्ततः १०
मायाद्यवनिपर्यन्ततत्त्वभूतात्मवर्त्मनि
भुङ्क्ते तत्र स्थितो भोगान्भोगैकरसिकः पुमान् ११

भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा
तां समर्थितचैतन्यः पुमानभ्येति कर्मतः १२
कर्मतश्च शरीराणि विषयाः करणानि च
भोगसंसिद्धये भोक्तुर्भवन्ति न भवन्ति च १३
एवं मायाञ्जनस्थोऽणुर्निजदोषतिरस्कृतः
याति तन्मयतां तेषु मायाभोगेषु रञ्जितः १४
संसारी विषयी भोक्ता क्षेत्री क्षेत्रज्ञ एव च
शरीरी चेति बद्धात्मा सकलश्चोच्यते बुधैः १५
शिवेच्छया पुरानन्ता शैवी शैवार्थदायिका
सा शक्तिरापतत्याद्या पुंसो जन्मन्यपश्चिमे १६
तन्निपातात्क्षरत्यस्य मलं संसारकारणम्
क्षीणे तस्मिन्नियियासा स्यात्परं निःश्रेयसं प्रति १७
स देशिकमनुप्राप्य दीक्षाविच्छिन्नबन्धनः
प्रयाति शिवसायुज्यं निर्मलो निरनुप्लवः १८
अनेन क्रमयोगेन परां केवलतां गतः
आनाद्यशुद्धिशून्यत्वात्प्राप्नोति न भवान्तरम् १९
इत्थमात्मा समाख्यातः सर्वावस्थास्ववस्थितः
साम्प्रतं प्रोच्यते ब्रह्मन् पाशजालमनन्तकम् २०
इति स्वायम्भुवसूत्रसंग्रहे पशुविचारपटलः प्रथमः

द्वितीयः पटलः

पाशविचारः

अथानादिमलः पुंसां पशुत्वं परिकीर्तितम्
तुषकम्बुकवज्ज्ञेयं मायावापाङ्कुरस्य तत् १
तत्सद्भाववशोऽज्ञादिपाशौघः पौरुषः स्थितः
तस्मात्तत्त्वतो ज्ञेयं मोक्षमक्षयमिच्छता २

पतिज्ञानैकगम्यं तदितरेषामगोचरम्
तेन तज्ज्ञानिभिर्मुक्तोऽशुद्धात्मा सोच्यतेऽबुधैः ३
यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृता
शुद्धे पुंसि न तद्भोगो जाघटीति विपश्चितः ४
अथ चेद्युक्तिमान्भोगः सा युक्तिर्नोपपद्यते
मुक्तसंसारवर्त्मस्थविशेषाप्रतिपत्तितः ५
तस्मादभ्युपगन्तव्यो विशेषः पुंमलात्मकः
यस्मिन्नसति मुक्तात्मा बद्धात्मा च सतीष्यते ६
तद्भावभाविनो भावाः सर्वे मायात्मकाः पशोः
द्विविधं साधयन्तीह पुरुषार्थं परापरम् ७
मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम्
विभ्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम् ८
तस्मात्कालकले रागविद्याव्यक्तं गुणान्धियम्
बुद्धितत्त्वादहंकारं तन्मात्राणीन्द्रियाणि च ९
तन्मात्रेभ्यश्च भूतानि सर्वं च क्रमशोऽसृजत्
विद्याविद्येश्वरेशानः शिवशक्तिसमर्थितः १०
भावान्प्रत्ययसर्गां श्च भूतानि भुवनानि च
सोऽसृजद्भगवानीशः सर्वं मायात्मकं जगत् ११
कर्मतः परिणामोऽस्य जगतस्त्रिगुणात्मकः
शान्तघोरविमूढात्मा नितान्तविषमस्ततः १२
कर्मतश्च शरीराणि विविधानि शरीरिणाम्
कर्मतः सर्वमेवेदं सुखदुःखात्मकं फलम् १३
तेन कर्म प्रकुर्वन्ति लब्धदेहाणवोऽसकृत्
पशुत्वादन्वितात्मानो भोगविप्लुतचेतसः १४
असद्भावे तयोः पुंसां बन्धमुक्ती न जातुचित्
भवेतां भवतस्ते वै प्रमाणात्प्रतिपत्तितः १५

कर्माशुद्धिशिवत्वानि तेषु सत्सु भवन्त्यमी
त्रयोऽर्थाः सर्वजगतो भोगभोक्तृत्वमुक्तयः १६
कर्म तद्द्विविधं भोग्यं धर्माधर्मात्मकं पशोः
आभोगस्थायि तद्विद्यात्फलद्वयविरोधि च १७
धत्ते लोकानिमान्सर्वान् प्रीतिं च पुरुषे पराम्
धर्मस्तेनोच्यते तज्ज्ञैरधर्मस्तद्विपर्ययात् १८
धर्मसाधनसंवित्तिराम्नायादेव जायते
तन्मूलत्वात्स्मृतेः चैव ताभ्यामेव परस्य च १९
उन्नत्यवनती यद्वत्तुलाकोट्योर्व्यवस्थिते
कर्मणोर्विलयोत्पत्ती तद्वदुत्तरपूर्वयोः २०
असंस्था मुक्तिपर्यन्ता द्विकर्मप्रतिरोधतः
प्रोच्यतेऽसावणोर्बन्धः सुकैवल्यनिरोधिका २१
अनादिः पौरुषी कारा मुक्त्यन्ताविकृता निजा
मायेया कार्मिकी नैव मुक्त्यन्तापि विधर्मतः २२
मायेयमाणवं कार्ममेतावदणुबन्धनम्
एतच्चोक्तं मया सर्वं संक्षेपात् कनकाण्डज २३
तस्मात्प्रविततात्बन्धात्परासंस्थानिरोधकात्
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि २४
शिवधामार्पितस्यास्य भोगभोक्तुर्न जातुचित्
भोक्तृत्वमधिकारित्वं पतिकृत्यानुकारिता २५
भवोद्भवपदातीतो निष्कम्पार्चिरिव स्थितः
मुक्तो व्यक्तशिवत्वोऽसौ कृतकृत्यो यतस्ततः २६

इति स्वायम्भुवसूत्रसंग्रहे पाशविचारपटलो द्वितीयः

## तृतीयः पटलः

## अनुग्रहशक्तिः

देवादिदेवस्य शिवस्यामिततेजसः
सर्वानुग्राहिका शक्तिरमोघा बलशालिनी १
एकानेकविभागेन संस्थितासौ शिवेच्छया
विद्याविद्येश्वरेशानी भाति सादिभवे पदे २
तयोद्बलितसामर्थ्याः सर्वस्य प्रभविष्णवः
अनन्तेशादिविद्येशा बभूवः कारणेच्छया ३
तेभ्योऽमितबलाश्चान्ये तेभ्यश्चान्ये नियोगिनः
भवन्ति विमलात्मानः सितासितफलप्रदाः ४
तेभ्योऽपि साञ्जनाश्चान्ये पतीच्छानुविधायिनः
येभ्यो निखिलमुत्पन्नं जगत्स्थावरजङ्गमम् ५
प्रभुशक्तेः समुत्पन्ना मन्त्राश्चामोघशक्तयः
शिवेच्छयैव चेष्टन्ते शिवान्ते विततेऽध्वनि ६
अध्वा यातव्यमार्गोऽत्र स च पत्युर्न विद्यते
न च यातुर्गतिः पुंसो विभुत्वमनयोर्यतः ७
विभुत्वे गतिमत्त्वं तु विभुता गतिमत्त्वतः
न जातु युज्यते यस्माद्वस्तुतोऽध्वा कुतस्तयोः ८
एवं संप्रश्निितेऽर्थेऽस्मिन्मया पूर्वं द्विजोत्तमाः
प्राह गम्भीरया वाचा प्रभुर्लोकेश्वरेश्वरः ९
पतिपुंसोर्विभुत्वेऽपि द्राघिष्ठोऽध्वा तयोर्यथा
तयोच्यते शृणु ब्रह्मन्नयनं पुरुषस्य च १०
दीक्षाकर्म क्रमेणोक्तं मायापरिणतौ यतः
सोऽध्वा परिणतिस्तस्माद्देशातिशयवर्तिनी ११
पुंबन्धभावमापन्ना क्रमशः पत्युरिच्छया
व्युत्क्रमेणापनेयासौ शिवाय गमनं प्रति १२
अन्तरङ्गतरा शोध्या बहिरङ्गतरापि च
बहिरङ्गेऽपनीते स्यादन्तरङ्गक्रियाक्रमः १३

एवमध्वा शिवस्योक्त उद्बन्धक्रमयुक्तितः
लोके चाध्वव्यवस्थेयं दृष्टा वस्तुनिबन्धने १४
दग्धसंसारबीजस्य या पुंसोऽपश्चिमा स्थितिः
सा गतिस्तस्य विज्ञेया न देशान्तरसंस्थितिः १५
धर्माद्धर्मान्तरव्यक्तौ सत्यां लोके गतं यथा
प्रोच्यते पटपर्णादि वस्तु तद्वत्पुमानपि १६
इति स्वायम्भुवसूत्रसंग्रहे तृतीय अनुग्रहशक्तिपटलः

चतुर्थः पटलः

अध्वा

अथात्मबन्धसंतानपशुत्वविनिवृत्तये
व्यक्तये च शिवत्वस्य षड्विधोऽध्वेह कीर्त्यते १
तत्त्वाध्वा च पदाध्वा च वर्णाध्वा भुवनात्मकः
मन्त्रात्मकः कलाध्वा च विशत्येकं शिवं पदम् २
अप्रमेयमनिर्देश्यमनौपम्यमनामयम्
सूक्ष्मं सर्वगतं नित्यं ध्रुवमव्ययमीश्वरम् ३
अप्रमेयमनन्तत्वादनिर्देश्यमलक्ष्यतः
अनौपम्यमसादृश्याद्विमलत्वादनामयम् ४
सूक्ष्मं चानुपलभ्यत्वाद्व्यापकत्वाच्च सर्वगम्
नित्यं कारणशून्यत्वादचलत्वाच्च तद्ध्रुवम् ५
अव्ययं परिपूर्णत्वात्स्वामिभावात् तथेश्वरम्
शिवतत्त्वमिदं प्रोक्तं सर्वाध्वोपरि संस्थितम् ६
ओंकारात्मतया भाति शान्त्यतीतः परः शिवः
बीजपङ्कजमध्यस्थः समस्ताध्वमुखः प्रभुः ७

Svayambhuvasutrasamgraha (book) typing complete.

# स्वायम्भुसूत्र

## स्वस्ति

### श्रीगणाधिपतये नमः

अथ वक्ष्यामि ते ब्रह्मन् सूत्रमुत्तरमुत्तमम्
कर्षणादिप्रतिष्ठान्तं शृणु प्रयतमानतः १
वास्त्वारम्भप्रशस्तस्य आदित्यश्चोत्तरामुखे
अप्रशस्तमिति ख्यातं अयनं दक्षिणं तथा २
पुष्यमासादिषण्मास देवानां तु दिवा स्मृताः
तस्मिन् काले कृतं सर्वं विभूत्यर्थमिति श्रुतम् ३
रात्र्याषाढादिषण्मासमयोग्यं सर्वकर्मसु
शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा ४
षष्ठी सु सप्तमी चैव दशम्येकादशी तथा
त्रयोदशी च तिथयः पौर्णमास्याभिशोभना ५
प्राजापत्याश्वयुग्याम्यतिष्यपौष्णोत्तरात्रयम्
मैत्रादित्यमघास्वातीहस्तार्द्राश्रवणास्मृताः ६
राशयोरथ वै वर्ज्या गाव्या धनुरशोभना
सोमभार्गवसौम्यार्या वारा श्रेष्ठतरा स्मृताः ७
एषामंशकद्रेक्काणहोरादर्शनमिष्यते
एषामेवोदयं शस्तं तत्र सोमोदयं विना ८
कु++षन्तु नक्षत्रं व्याधिपीडा करोति हि
सूर्यसौरारसौमाश्च त्रिषष्ठाय स्थितश्शुभाः ९
त एव लग्नगाः कुर्युः व्याधिशोकभयानिधि
अष्टमस्था ग्रहास्सर्वे तकर्तुं कुर्वन्ति दुस्थितम् १०
एकादशगतास्सर्वे क्षेमारोग्यकरा स्मृताः
भयकृद्भार्गवः प्रोक्ताः +++ षयप्त+दुमस्थिताः ११
द्विसप्तपञ्चनवमस्थिता जीवस्सुशोभनः

द्वितीयः पञ्चमे वापि सोमस्सौख्यं करोति हि १२
सूर्यवारशुभो युक्तो हस्तपौष्णत्रिरुत्तराः
मन्दवारे हितः प्रोक्ता रोहिणी स्वातियोगतः १३
उत्तराषाढनक्षत्रे सोमवारस्सुशोभनः
वर्जयेद्बुधवारेण हस्तं चाश्वयुजं तथा १४
गुरुवारेण वर्ज्यै तु तत्र सौम्योत्तरा शुभौ
श्रवणं चैव पुष्यश्च शुक्रवारेण वर्जयेत् १५
द्वितीया बुधयुक्ता च षष्ठी जीवसमायुतः
सोम एकादशीयुक्तः करोति प्राणसंशयम् १६
पौष्णास्तु सप्तमीयुक्तो दहत्यग्निरिव प्रजाः
खण्डस्थूणार्धनक्षत्रगुलिकाविष्टयस्त्यजेत् १७
भूमिकम्पे दिशादाहे दुर्दिने खण्डमारुते
अशनिध्वनिनियोगे च निन्दितं दिवसं स्मृतम् १८
अयने विषुवे चैव संक्रान्तौ ग्रहणे तथा
षडशीतिमुखे वापि कृतवास्तु विनश्यति १९
एवं परीक्ष्य कर्तव्यं यदिच्छेच्छ्रेय आत्मनः
कर्षणादिप्रतिष्ठान्तं कर्म कुर्याद्विचक्षणः २०
वास्तुपरीक्षा
अथ भूमि परीक्षेत पूर्वं कर्षणमारभेत्
श्वेता तु ब्राह्मणी भूमि रक्ता तु क्षत्रियस्तथा २१
पीता वैश्यस्तु कृष्णा तु शूद्रा भूमीरुदाहृताः
ब्राह्मणी मोक्षदा प्रोक्ता क्षत्रिया विजयप्रदाः २२
वैश्या तु धनदा भूमि शूद्रा पुत्रसमृद्धिदा
औषरात्क्रिमिभिर्जुष्टवल्मीकाभ्यां च वर्जयेत् २३
हस्तमात्रं खनित्वा तु पूरयेत्तेन पांसुना
अधिके पुष्कला भूमि न्यूने वर्ज्य समेऽधमा २४

त्रिरात्रेऽङ्कुरिता ग्राह्या भूमिर्वै नान्यथा तथा
एवं परीक्ष्य बहुधा कुर्यात्कर्षणमुत्तमम्
श्वेतो वा कपिलो वापि नाङ्गहीनौ वृषौ तथा २५
अवामनं नान्यवर्णा परो गौ बलषालिनौ
आराध्य वृषमन्त्रेण हेमशृङ्गपुरौ तथा २६
तीक्ष्णशृङ्गाय विद्महे देवपादाय धीमहि
तन्नो वृषभप्रचोदयात्
क्षीरवृक्षयुगं बद्ध्वा शमी शम्य यतन्तथा
असनं खदिरं वाथ हलं कृत्वा सुलोहकम् २७
यत्रयित्वा युगे वाथ गोचर्मकृतरज्जुना
आचार्ये नतवासस्तु सकलीकृतविग्रहः २८
कर्षयेन्मूलमन्त्रेण प्रागुदक्प्रणवं महीम्
आचार्यं पूजयित्वा तु दद्यात्तु सहलौ वृषौ २९
व्यप्यसिद्धार्थकान्यत्र तिलान् व्रीहीन्यनुक्रमात्
तेषु पक्वेषु ता खात्वा प्रासादं समविस्तरम् ३०
द्विहस्तं वा त्रिहस्तं वा चतुर्हस्तमथापि वा
पुण्याहं वाचयित्वा तु शल्योद्धारं समाचरेत् ३१
विसृज्य वृषभं तत्र गते सूर्यदिने तथा
कृत्वा समतलं तत्र गोमयेनानुलेपयेत् ३२
द्वादशाङ्गुलमायामं कृत्वा नाहं षडङ्गुलम्
शङ्कुं तत्रैव विन्यस्य तेन मानेन भाजयेत् ३३
तद्बहिर्भ्रामयेत्सूत्रं द्वयं तेनैव मानतः
पूर्वाह्णे चापराह्णे च शङ्कुच्छायां तु लङ्गयेत् ३४
तत्र सूत्रद्वयं प्राचीं पातयेच्छङ्कुमध्यमे
ह्रासयेदधिकार्धं तु न्यूने तावपि वर्जयेत् ३५
प्राचि तत्सूत्रमानेन मध्यं तेनैव कल्पयेत्

उदक्सूत्र भवेत्तत्र कृत्वा तु चतुरश्रकम्  ३६
पञ्चगव्येन संप्रोक्ष्य ब्राह्मणान् स्वस्तिवाच्य च
एकाशीतिपदं कृत्वा वास्तुदेवान् प्रकल्पयेत्  ३७
ईशानादि समारभ्य द्वात्रिंशत्पदभोगितम्
ईशानं चैव पर्जन्यो जयन्तश्च महेन्द्रकः  ३८
आदित्यस्सत्यकश्चैव भुवोऽन्तरिक्षपूर्वके
अग्निं पूषा च वितथो ग्रहभक्षयमौ तथा  ३९
गन्धर्वो भृङ्गराजश्च मृगं चैव तु दक्षिणे
पश्चिमे पितरश्चैव दौवारिकस्तथैव च  ४०
सुग्रीवः पुष्पदन्तश्च वरुणश्चारवस्तथा
शेषश्च वार्ययक्षा च ते चाष्टौ कथितास्तथा  ४१
उत्तरा च तथा वायुनागो मुख्यस्तथैव च
भल्लाटश्च तथा सोमो मृगादित्यादितिस्तथा  ४२
ब्रह्मा नवपदाद्भुक्ते वायुमध्ये विशेषतः
आर्यकश्च विवस्वाश्च विश्वामित्रमहीधरः  ४३
ब्रह्मणश्च चतुर्दिक्षु स्थितष्षट्पदभोगिनः
आपश्चैवापवत्सश्च सावित्रे त्र्यृच एव च  ४४
इन्द्र इन्द्रजयश्चैव रुद्र रुद्रजये तथा
एते द्विपदभोक्तारो विदिक्ष्वाष्टौ स्थितास्सुराः  ४५
चरकी च विदारी च पूतना पापराक्षसी
ईशानादिक्षु कोणेषु बाह्यस्थाः पदवर्जिताः  ४६
एवं विन्यस्य देवास्तु वास्तुदेहं प्रकल्पयेत्
ईशाने तु शिरो वास्तोः पादो निर्ऋृतिगोचरे  ५७
हस्तस्सवितरि ज्ञेया बाहुरग्ना उदाहृतः
आपे कण्ठ इति प्रोक्तो हृदयं चापवत्सके  ५८
नाभिस्तु ब्रह्मणि प्रोक्ता कुक्षिस्सवित्रीसंज्ञिके

इन्द्र इन्द्रजयो गुह्यो ऊरु रक्तो विवस्वती ५९
पार्श्वं तु दक्षिणं प्रोक्तं वाममेव प्रकल्पयेत्
शेते यस्तु भुवं प्राप्य वास्तुदेवस्त्वधोमुखम् ६०
उग्रस्सुभीषणो यस्मात् पूजयीयः क्रियार्थ भः
पुण्याहं वाचयित्वा तु प्रोक्षयेत् पञ्चगव्यकैः ६१
गन्धैः पुष्पैस्तथा धूपैर्दीपैश्चापि प्रपूजयेत्
नमस्कारादिसंयुक्तैः प्रणवान्तस्वनामभिः ६२
आपापवत्सद्वयसस्य बाहुं सावित्रसावित्रसुरान्यबाहुः
अवाङ्मुखश्चार्यकमस्तकस्सन् महीधराप्याख्यजपार्श्वयुग्मम्
६३
रुद्राख्य रुद्रजय इत्यथ वाम
पादमिन्द्रस्सुरेन्द्रजयनामवरोक पादः
मित्रस्य लिङ्गकमलासनमर्धकायं घर्मां शुवास्तुपुरुषस्य
कटि प्रदेशम् ६४
पूजान्ते संस्पृशेत्कर्ता यदहन्तन्निरीक्षयेत्
वास्तुदेहेऽपि तत्रैव शल्यं ब्रूयाद्विचक्षणः ६५
अस्मिन् शल्यं शिरस्पर्श तद्वास्तुद्वयमानतः
कण्ठस्पर्शे गले तद्वद्रोमशल्यमथापि वा ६६
ऊरुस्पर्शात्त्रिभिर्हस्तै शृङ्खलाशल्यमादिशेत्
हस्तमात्रे करस्पर्शात् खट्वा पादं समादिशेत् ६७
सबाहुस्पर्शनात्कर्तुः अङ्गारस्तु त्रिहस्तकः
गुल्फैश्च पादनिर्दिष्टं वितस्ति द्वयमानतः ६८
पादे कण्ठे लत्युक्तः सवितास्त्रिप्रमाणतः
कनिष्ठाङ्गुष्टयोस्पर्शात् कंसं तत्र करार्धतः ६९
करद्वये कटिस्पर्शात् लोहं तत्र समादिशेत्
नासिको भास्करं हस्ते जान् च स्पर्शनात्ततः ७०

शल्यं विशोध्य भूमिस्तां तळत्कृत्वास्समन्ततः
सिकतां पूरयेत्पूर्वं अस्थिलोष्टाश्च वर्जयेत् ७१
एकाशीतिपदं कृत्वा वास्तुदेवं तथा न्यसेत्
पञ्चगव्येन संप्रोक्ष्य वास्तुदेवान् प्रपूजयेत् ७२
ईशानं पूजयेत्पूर्वं अक्षतैस्तिलमिश्रितैः
नीलोत्पलोदकं दद्यात् पर्जन्याय विशेषतः ७३
जयन्तादापयेद्विद्वान् पताकापीतवर्णकान्
रत्नानि तु महेन्द्रस्य वितानं भास्करस्य च ७४
गोधूममण्डकस्सत्ये मत्स्यं दद्याद्भवस्य तु
शाकुनं तु तथा मांसं अन्तरीक्षाय दापयेत् ७५
अग्नये तु घृतं दद्यात् पूष्णे लाजान् तथैव च
दद्याद्धिरण्यं वितथामसुन्दद्याद्गृहक्षणे ७६
मांसोदनं यमस्याथ गन्धर्वे गन्ध उच्यते
भृङ्गे तु शाङ्कुना जिंहा मृगे तिलयवस्तथा ७७
पित्रे कृसरवं दद्या काष्ठं दौवारिके तथा
सुग्रीवे पायसं दद्यात् पुष्पदन्ते कुशं तथा ७८
पदां तु वारुणे दद्यादसुरे मधुमेव च
शेषे चाजघृतं दद्याद्यवान्ने पापयक्ष्मणे ७९
घृताक्तमण्डकं दद्या रोगाय तु विशेषतः
नागाय नागपुष्पाणि दद्यान्मुख्याय पुष्पिकाम् ८०
भल्लाटकाय मुद्गान्नं सोमाय मधुपायसम्
शाकुलं मृगदेवाय अदित्यै लोहितानि च ८१
दित्यैस्तु सुधियां दद्यात् क्रमशोक्तो बलिन्क्रमः
क्षीरं दधि कुशाश्चैव गुलान्नं च हरिद्रकम् ८२
शुद्धान्नं पक्वमांसान्नं आममांसं तथैव च
विदिक्ष्वावादिदेवानामष्टानां समुदाहृतम् ८३

लड्डुकां सक्तु लाजां च घृतान्नं मासमेव च
समरीचकपूर्वेभ्यो दद्याद्दिक्षु विशेषतः ८४
पञ्चगव्यकुशं चैव तिलाक्षतयवास्तथा
चरूणां सह दातव्यं ब्रह्मणे तु विशेषतः ८५
चरकी बृहतीनां तु मांसपक्वं निवेदयेत्
सर्वेषामथवा दद्यात् पृथक् शुद्धोदकं चरुम् ८६
दधिर्न्नवाज्यसंयुक्तां सर्वेषां चापि दापयेत्
सर्वेषामेव मन्त्रास्तु नमोन्त्याः प्रणवान्विताः ८७
गन्धादीनां नमोन्तास्तु बले स्वाहान्त उच्यते
कृत्वेवं बलिदानान्तु पुण्याहं तत्र कारयेत् ८८
पञ्चमृद्भिस्तु संप्रोक्ष्य पवमानमुदीरयेत्
ततो होमं प्रकुर्वीत पञ्चदिक्षु विधानतः ८९
सद्यादिभिश्चतुर्दिक्षु प्रत्येकं तु शताहुतिः
समिदाज्य चरूणां तु यथाविधि विशेषतः ९०
तिलैस्तण्डुलसंमिश्रैः विशेषेण घृतप्लुतैः
ईशानेन चतुर्दिक्षु जुहुयाच्च शताहुतिः ९१
शिवाङ्गैश्चैव विद्याङ्गैर्द्रव्याङ्गैर्जुहुयात् पृथक्
साधिताः पूर्वरात्रौ तु चत्वारः प्रथमेष्टकाः ९२
शिलामयैर्मृण्मयैर्वा कुर्याल्लक्षणसंयुतम्
शिलाण्रोषधिनिर्मुक्ता सुपक्ष्मा मृण्मयं तथा ९३
विस्तारेणाष्टका प्रोक्ता षट्पञ्च चतुरङ्गुलाः
उत्तरादि क्रमेणैव विस्तारापि गुणा च ताम् ९४
विस्तारार्धं घनं प्रोक्तं इष्टकास्तु प्रमाणतः
उत्तरे च तथा पार्श्वे चतुर्गात्रसमायुतैः ९५
मण्टपे स्थण्डिलं प्राक्त्वा शालिभिश्चतुरङ्गुलम्
शिवाङ्गसा तु संप्रोक्ष्या परिस्तीर्य कुशैस्ततः ९६

पुण्याहं वाचयित्वा तु प्रोक्षयेच्च कुशाम्भसा
होमैः कौतुकसूत्रैस्तु बन्धयेद्धृदयेन तु ९७
वस्त्रैः प्रत्येकमाच्छाद्य तदग्रैस्थण्डिले ततः
कलशान् स्थापयेद्विद्वान् सवस्त्रं नवसंख्यया ९८
विद्येश्वरसमायुक्तान् पूजयेद्गन्धपुष्पकैः
प्रभाते पूजयित्वाथ स्थापितं स्थापिकं तथा ९९
स्थापके मन्त्रयोग्यस्तु स्थरातिः कर्मयोग्यतम्
द्वारस्य दक्षिणे पार्श्वे स्थानमेतं प्रचक्षते १००
सुमुहूर्ते न्यसेत्पश्चादिष्टकांश्चतुरक्रमात्
विन्यसेच्च चतुर्दिक्षु सद्यादि ब्रह्मभिस्तथा १०१
तन्मध्ये विन्यसेत्कूर्मं गदां वज्रं त्रिशूलकम्
हरिणं चैव परशुं नं वृषभमेव च १०२
सौवर्णं कारयेद्धीमान् न्यसेत्तत्राष्टदिक्ष्वथ
तेषां मध्ये तथा गर्ते पूरयेत् कलशाम्भसा १०३
शुभं वै दक्षिणावर्ता वामवर्तमशोभनम्
वामावर्ते तथा कुर्यादीशाने तु तथाहुतीः १०४
तत्रैव नवरत्नानि विन्यसेदानुपूर्वशः
वज्रमौक्तिकवैडूर्यशङ्खस्फटिकपूर्वकाः १०५
चन्द्रकान्तं महानीलं माणिक्यं च क्रमान्न्यसेत्
गजदन्ते तथा सस्ये वल्मीके कर्कटायने १०६
वृषशृङ्गे ह्रदे नद्यास्तीर्थे वै पर्वतस्तथा
समुद्रे च मृदं ग्राह्य पूरदेवलटं ततः १०७
अत ऊर्ध्व प्रकर्तव्य प्रासादं गर्भसंयुतम्

इति स्वायम्भुसूत्रे उत्तरसूत्रे प्रथमेष्टकः पटलः
चतुर्विं शतिः

अथ वक्ष्ये विशेषेण गर्भन्यासविधिक्रमम्
प्रासादं गर्भसंयुक्तं कुर्वतस्सर्वसम्पदः १
तस्मादादौ प्रकर्तव्यं गर्भन्याससमृद्धिदम्
त्रयं प्रासादमूलास्तु पूर्वे तु प्रथमेष्टकाः २
उपानोपरे मध्यं स्यात् व्रतेरुपरि चान्ततः
भूगर्भं शूद्रजातीनां उपाने नृपवैश्ययोः ३
व्रतैरुपरि विप्राणामनुलोम्येन कारयेत्
सर्वेषां भूगतं कुर्यात्सर्वसिद्धिकरं शुभम् ४
इन्द्रपावकयोर्मध्ये प्राग्द्वारे तु प्रशस्यते
द्वारस्य दक्षिणे कुर्यात् पश्चिमेऽपि तथैव तु ५
कवाटार्गलयोर्गेर्वा व्यस्तव्यं गर्भभाजनम्
दृढताम्रमयी फेला स्फटिका वा प्रशस्यते ६
पादविष्कम्भविस्तारफेलं नवपदान्वितम्
शङ्खस्फटिकवर्ज्या सा स्तम्भमूलाकृतिस्तथा ७
घनं विंशतिभागैकास्तदर्धाः कोष्ठभित्तयः
विस्तारं च चतुर्भागं कोष्ठभित्त्युच्छ्रयं भवेत् ८
उत्तमं तु समोत्सेधं त्रिभागं मध्यमं भवेत्
अधमं चार्धमुत्सेधं त्रिविधं तत्प्रचक्षते ९
त्रिभागैकं विधानं स्यात् त्रिभागं भाजनं भवेत्
अन्तरे वाङ्गुलाधिक्यं भाजने भिन्नभित्तिकम् १०
संयोगर्थविहीनं स्याद्विधानाभ्यन्तरे तथा
प्रक्षाल्य पञ्चगव्येन सुशुद्धं गर्भभाजनम् ११
प्रासादपूर्वदिग्भागे मण्टपे समलङ्कृते
गोमयेनोपलिप्याथ पुण्याहं वाचयेत्ततः १२
पिष्टकेन समालिख्य भुजङ्गफणमण्डलम्
स्थण्डिलं कारयेत्तत्र शालिभिश्चतुरङ्गुलम् १३

स्थण्डिलैरभितं कुर्यात्सप्तद्वीपार्णवाकृतिः
वस्त्रान्तरे कुशास्तीर्य वस्त्रैर्लाजसमायुतैः १४
ध्यात्वा तु भुवनं सर्वं विन्यसेद्दर्भभाजनम्
ब्राह्मं तु मध्यमपदं अष्टौ तदभितस्सुराः १५
पाल्यस्थाः षोडश सुराः पदस्थानान् समर्चयेत्
ब्रह्मा मध्यपदस्थन्तु तमावृत्य स्थितास्सुराः १६
मरीचयश्च सावित्रो विवस्वाश्च तृतीयकः
इन्द्र इन्द्रजयश्चैव मित्र रुद्रा महीधराः १७
आपवत्सन्तु पूर्वान्त्य ईशान्यान्त्यास्तु बाह्यकाः
ईशे जयन्त आदित्यो भृशाग्नि वितथो यमः १८
भृङ्गराजस्तु निर्ऋतिस्सुग्रीवो वरुणस्तथा
खासो रोगश्च मुख्याश्च सोमादितिरिति स्मृताः १९
एषान्नामस्य अभ्यर्च्या पदास्थां स्थण्डिलोपरि
समर्च्य केन्यसेद्वज्रं पावित्रौ मौक्तिकं न्यसेत् २०
वैवस्वतेति वै सूर्यं ऐन्द्रेशं खन्न्यसेत्पदे
मैत्रे तु स्फटिकान् न्यस्य रौद्रे पुष्यन्न्यसेत्पृथक् २१
पृथ्वीकान् न्यस्य श्यामाकं नैर्ऋतं न्यसेत्
वारुणे माषबीजानि रोगे चैव कुलस्थकान् २२
न्यसेत् सौम्येषु निष्पावमीशाने तु यवास्तथा
मनश्शिलाञ्जयान्ते तु हरितालं भृशे तथा २३
अञ्जनं वितलं चैव श्याम वै भृङ्गराजनी
सुग्रीवे सीसकं प्रोक्तं शेषे सौराष्ट्रकं न्यसेत् २४
रोचनं च तथा मुख्ये गैरिकं चादितो न्यसेत्
कपालकूर्मखट्वाङ्गं परशुं वृषभं तथा २५
पिनालं हरिणं शूलं ब्राह्म्ये पूर्वादितो न्यसेत्
ततो होमं प्रकुर्वीत चतुर्दिक्षु विशेषतः २६

सद्यादिभिश्चतुर्दिक्षु समिद्भिस्सर्पिषा तथा
वरुणाञ्च तथा लाजैः प्रत्येकं तु तथाहुतीः २७
तस्य दक्षिणतो बह्यौ होमं कुर्यात् समाहितः
अष्टत्रिंशत्कलाभिश्च षडङ्गैश्च दशाक्षरैः २८
संपातविधिवद्धुत्वा मध्ये वै भाजनस्य तु
निधाय वस्त्रैराच्छाद्य गन्धाद्यैरर्चयेद्धृदा २९
ततोऽभ्युक्ष्य हृदा गव्यैर्गर्भस्थानं सुनिश्चिताम्
सामुद्रेण मुदा तत्र कुर्याच्च पृथिवीं समाम् ३०
पर्वते च तथा तीर्थैः नद्यस्तीर्थे तथा मृदः
पूर्वादिषु न्यसेद्दिक्षु मध्ये वृषविषङ्गजम् ३१
कुलीरवासवल्मीकशान्तस्वगजदन्तके
आग्नेयादिषु कोणेषु न्यसेदेतान् मृदः क्रमात् ३२
सुवर्णपूर्वतो न्यस्य राजतं दक्षिणे न्यसेत्
आयसं पश्चिमे भागे त्रपुकं चोत्तरे तथा ३३
उत्पलस्य च नीलस्य पद्मनीलोहितस्य च
कुमुदस्य च मूलानि न्यसेत्पूर्वादितः क्रमात् ३४
सत्रावारखण्डनक्षत्रमुहूर्ते ग्रहसत्पदि
सद्येन गृह्य फेलां तु न्यसेद्वामेन देशिकः ३५
अघोरेणावकुण्ठ्याथ दद्यादर्घ्यं मुखेन तु
पञ्चमे वाद्यगङ्गाद्यैः प्रासादं कारयेत्ततः ३६
काञ्चनालङ्कृतां धेनुं दक्षिणा स्थापकस्य तु ३७

इति स्वायम्भुसूत्रे सङ्ग्रहे उत्तरे सूत्रे गर्भन्यासपटलः
षड्विंशतिः

## प्रासादलक्षण

अथ वक्ष्ये विशेषेण प्रासादानां तु लक्षणम्

प्रासादं कुरुते येन प्रासादयिति कीर्तितम् १
त्रिविधं तु समाख्यातं अङ्गुलस्य प्रमाणतम्
मानाङ्गुलं तु प्रथमं मात्राङ्गुलमतः परम् २
तृतीयं तु समाख्यातं देहालब्धप्रमाणतः
त्रिसरेणाभिरष्टाभिरीक्षलूका यवैस्तथा ३
क्रमशोऽष्टगुणैर्वृद्धिमानाङ्गुलमिति स्मृतम्
मध्यमाङ्गुलमध्यं तु आदौ मात्राङ्गुलं स्मृतम् ४
प्रतिमाया विभागेन कालगण्डेन भाज्य तम्
अङ्गुलं तु समाख्यातं देहालब्धप्रमाणतः ५
प्रासादमण्टपानां च मानाङ्गुलविधानतः
यागोपकरणानां तु मात्राङ्गुलविधानतः ६
देहालब्धप्रमाणेन प्रतिमा कारयेत्तथा
अङ्गुलैः किष्कुमित्युक्तं चतुर्विंशतिभिस्तथा ७
पञ्चविंशतिभिश्चैव प्राजापत्यमुदाहृतम्
षड्विंशति धनुः षष्ठी सप्तविंशधनुर्गृहम् ८
हस्ताङ्गं लक्षणं प्रोक्तं मात्राङ्गुलमुदाहृतम्
त्रिहस्तादिसमारभ्य नवहस्तान्तमेव च ९
अयुग्मैरथ हस्तैस्तु कुर्यात्तु दशहस्तकैः
द्वितलं तु ततः कुर्यात् तत्रयो दशहस्तकैः १०
दशपञ्चाधिकैर्हस्तै प्रासादं स्यात्त्रिभूमिकम्
तलं प्रत्यधिकं कुर्याद्द्विहस्तं तु विशेषतः ११
आद्वादश तलादेवं कुर्याद्विस्तारमानतः
विस्तारद्विगुणोत्सेधमुत्तमं तु प्रचक्षते
विस्तारः सप्तधा कृत्वा द्वादशान्तममध्यमम् १२
एकादशांशमधमं विस्तारे सप्तधा कृते
आद्वादशतलादेवमुत्सेधं तद्विधीयते १३

प्राङ्मुखोदङ्मुखैस्सूत्रैः पदैः कुर्यात्तु षोडश
गर्भगेहं समाख्यातं मध्यमं तु चतुष्पदम् १४
बाह्यतो द्वादशपदं भित्त्यर्थमुपकल्पयेत्
षड्भि षड्भिस्तथा सूत्रैः पदं वै पञ्चविंशतिः १५
एतद्गर्भगृहं मध्ये भीत्यर्थं शेषमुच्यते
त्रिविधास्तु समाख्याताः प्रासादकृतयस्तथा १६
नागरं द्राविडं चैव वेसरं च त्रिधा भवेत्
स्थूलं तु चतुरश्रं स्या नागरं समुदाहृतम् १७
कण्ठान् प्रभृतिरष्टश्रं प्रासादं द्राविळं भवेत्
कण्ठात्प्रभृति वृत्तं स्यात् वेसरं तत्प्रचक्षते १८
लिङ्गं पूर्वस्थितं यत्र यत्र लिङ्गवशाद्भवेत्
यावल्लिङ्गस्य विस्तारं त्रिगुणं पीठ उच्यते १९
पीठस्य त्रिगुणं गर्भं गर्भार्धं भित्तिरुच्यते
गर्भगेहत्रिभागैकं भित्तिं वा तत्र कारयेत् २०
अग्रतो मण्टपं कुर्यात् प्रासादसमविस्तरम्
प्रासादे सममायामं विस्तारं वा त्रिपादतः २१
आयाममर्धमेवं स्यात् त्रिपादं विस्तृतं तथा
प्रासादस्याग्रतो द्वार कर्तव्यं लक्षणान्वितम् २२
व्रतेरुपरि सीमान्तं द्वारस्योत्सेधमुच्यते
कृत्वा नवांशकुम्भं तु भागैकं कुम्भमुच्यते २३
कुम्भं चतुर्भिराजैस्तु कण्ठं भागमुदाहृतम्
आस्यमेकांशमित्युक्तं शेषं कुर्याच्चंशकैः २४
एकेन पदमेकेन वृत्तमेकेन भीरुहौ
दुक्कण्ठौ स्थम्भविस्तारौ द्विगुणं कुम्भमुच्यते २५
अद्यर्धमस्य विस्तारं भीरुकौ मूलपादवत्
विस्तारमेवमुक्तं स्यात् मण्डेर्लक्षणमुच्यते २६

मण्डे स्त्रीपादमुत्सेधं विस्तारं तु चतुर्गुणम्
त्रिभागैका भवेत्पद्मं वेत्रमेकं तथैव च २७
भागं वै फलमाकारमावेत्रात्पादरूपवत्
पादाग्रकर्णमानेन स्तम्भं कुर्याद्विधानतः २८
स्तम्भाग्रसमविस्तारं विराकाण्डस्त्रिभागतः
तदूर्ध्वे येरकां कुर्याद्विस्तारं पादसम्मितम् २९
समं त्रिपादमर्धं वा पोतिकोत्सेधमुच्यते
त्रिदण्डमधमायामः चतुर्दण्डन्तु मध्यमम् ३०
उत्तमं पञ्चदण्डं स्यात् पोतिकायाममुच्यते
वल्लीपत्रयनेश्चापि तरङ्गैश्च सुशोभितम् ३१
एवं पादप्रमाणं स्यात् प्रस्तरं चोत्तराधिकम्
विष्कम्भ पादविस्तारे मुत्सेधं त्रिविधं भवेत् ३२
अधमं ह्यर्धमुत्सेधमुत्तमं स्याद्विधानतः
स्तम्भार्धस्य त्रिभागैकं तस्योर्ध्वे पट्टिका भवेत् ३३
द्विभागेन तदूर्ध्वे तु कर्तव्या पद्मपट्टिका
द्विदण्डे तु कपोतं स्यात् उपानासमनिर्गमम् ३४
शेषं प्रस्तरमानं तु कर्तव्यं पञ्चभागकम्
एतेन पट्टिकां कुर्यात् कळमेकेन कारयेत् ३५
द्वाभ्यामूर्ध्वे च कर्तव्यमेकांशेन तु पट्टिका
एवं प्रस्तरमाख्यातं तोरणं वक्ष्यतेऽधुना ३६
पार्श्वयोः पृष्ठतश्चापि कर्तव्यं तोरणं तथा
व्रतेरुत्तरसीमन्तं रोतणस्योच्छ्रयं भवेत् ३७
विस्तारं तु तदर्धं स्यात् विस्तारं पञ्च भागिकम्
मकरांशत्रिभागेन शेषं पाद इति स्मृतः ३८
पादान्तरार्धमथवा विस्तारं तोरणस्य तु
पूर्वोक्तमेव कर्तव्यं मकरांशप्रमाणतः ३९

प्रमाणं तोरणस्योक्तं नासीकायांस्तु लक्षणम्
वक्ष्यते तु प्रमाणेन यथाशास्त्रविनिश्चितम् ४०
गर्भगेहार्धविस्तारं महानासीति कीर्तितम्
निर्गमं तु तदर्धं स्यात् त्रिभागं सममेव वा ४१
शिखरेषु चतुर्दिक्षु कुर्याद्देवं तु नासिकम्
विस्तारं तु तदर्धं स्यात् कपोतेष्वष्टनासिका ४२
नासिकालक्षणं प्रोक्तं कूटशालं विधीयते
कृत्वा प्रासादषड्भागं कूटस्यादेकभागतः ४३
दिग्भागेन तु शाला स्याद्भागार्धं पञ्जरं भवेत्
चतुरश्रं भवेत्कूटं शाला स्याद्गोपुराकृतिः ४४
शालविस्तारमानेन पार्श्वयोर्नासिका भवेत्
अननासंतु तन्मध्ये कर्तव्यं तु सलक्षणम् ४५
कूटनामाकृतिं प्रोक्तं प्रासादाकृतिरेव हि
एकनासिकया युक्ता पञ्जरं समुदाहृतम् ४६
तत्तत्कण्ठार्धमानेन शिखरं वार्धयेत्ततः
कण्ठद्विदण्डमित्युक्तं शिखरस्य तु निर्गमम् ४७
निर्गमाद्वर्तनाद्बाह्यो वर्धमानं तदर्धके
स्यचीकुम्भसमायुक्तं कुर्याद्दण्डद्वयेन तु ४८
विस्तारं तत्प्रमाणेन शिखराकृति इष्यते
तदूर्ध्वे कण्ठमित्युक्तं तदर्धं फलका भवेत् ४९
क्रमेण कृशतां कुर्याद्यावदन्तं तु सूक्ष्मतः
चतुःकूटचतुश्शालायुक्तः कैलास उच्यते ५०
अष्टकूटचतुश्शालायुक्तो मन्दर उच्यते
अष्टकूटाष्टशालाभिर्युक्तो मेरुरिति स्मृतः ५१
अष्टकूटाष्टशालाभि युक्तो षोडशपञ्जरैः
हर्म्यवातीति विख्यातः प्रासादस्तु सलक्षणम् ५२

अष्टभिः पञ्जरैर्युक्तमष्टकूटसमन्विता
अष्टशालसमायुक्तं नीलपर्वतमुच्यते ५३
चतुःकूटश्चतुश्शालापञ्जरैरष्टभिर्युतम्
एवं लक्षणसंयुक्ते महेन्द्रो नाम पर्वतः ५४
प्रासादलक्षणं प्रोक्तं मणटपानामथोच्यते
नन्दी वृत्तचतुष्काद युक्तो मणटप उच्यते ५५
स्तम्भैष्षोडशभिर्युक्तो मणटपश्री प्रतिष्ठितम्
द्वादशस्तम्भसंयुक्तो वीरासन इति स्मृतः ५६
द्वात्रिंशद्गात्रसंयुक्तो जय भद्रस्तु कथ्यते
षट्त्रिंशद्गात्रसंयुक्तो नन्द्यावर्तः सुशोभनः ५७
चतुष्षष्टिसमायुक्तो स्तम्भाना मानिभद्रकम्
स्तम्भानां तु शतैर्युक्तो विशाला इति संज्ञिताः ५८
प्रासादवत्समाख्यातं प्रस्तरं तत्प्रमाणतः
वाजनोपरि कर्तव्या द्वारग्रास्तत्तुला भवेत् ५९
स्तम्भविस्तम्भमुत्सेधचतुर्भागेन विस्तृतम्
तुलाविस्तारमानेन जयन्ती स्यात् समोन्नता ६०
ततो दणडार्धबाहुल्यामनुमानं तदूर्ध्वतः
इष्टकाभिस्तदूर्ध्वे तु छादयेत्कुलकानितः ६१
पादाधिकमथाप्यर्धद्विगुणं पादहीनकम्
चतुर्विंशमथायामं कर्तव्यं मणटपस्य तु ६२
आयामेन यथायुक्तं स्तम्भाना विधिरुच्यते
द्विहस्तं वा त्रिहस्तं वा चतुर्हस्तमथापि वा ६३
स्तम्भान्तरं प्रकर्तव्यं यथायुक्त्या विशेषतः
मणटपस्याग्रतः कुर्याद्वृषभास्यालयं तथा ६४
कर्तव्यं स्यात् तदग्रे तु मध्यहारे प्रमाणतः
प्रासादसममुत्सेधं विस्तारं स्यात्त्रिपादतः ६५

अध्यर्धं द्विगुणं वापि कर्तव्यं दक्षिणोत्तरे
तस्मादध्यध्यमुत्सेधं कुर्यान्मध्यादिभित्तिके ६६
द्विगुणं तु समुत्सेधं महामर्यादभित्तिके
गोपुरादग्र तत्कुर्यात् बलिपीठं विधानतः ६७
एवं क्रमात् समाख्यातं प्रकारमधुनोच्यते
प्राकारं परितः कुर्यात् प्रासादस्य प्रमाणतः ६८
प्रासादस्य तु विस्तारं तस्य दण्डमिहोच्यते
अन्तर्मण्डलमित्युक्तं दण्डार्धेन कृतं तथा ६९
अन्तर्हारं तु दण्डेन मध्यहारद्विदण्डतः
चतुर्दण्डप्रमाणेन युक्तो मर्यादिभित्तिकः ७०
महामर्यादिभित्तिं स्यात् सप्तदण्डप्रमाणकम्
अर्ध्यर्ध्यं द्विगुणं वापि त्रिगुणं वा चतुर्गुणम् ७१
मुखायाममिति ख्यातं प्राकाराणां विशेषतः
कपोतान्तं समुत्सेधं भित्तिहस्तप्रमाणतः ७२
कूटशालयुतं वापि कूटशालान्तमेव वा
कुर्यात् प्राकारसंयुक्तां परिवारं विधानतः ७३
प्रासादगर्भमानेन परिवारालयं भवेत्
पुरतो गरुडस्थानं आग्नेयां तु महानसम् ७४
याम्ये मातृगणाश्चैव गणेशस्य तु नैरृते
सुब्रह्मण्यस्य वारुण्यं ज्येष्ठायां वायुगोचरे ७५
दुर्गायां सौम्यदिग्भागे सूर्यस्यैशानगोचरे
ईशगोपुरयोर्मध्ये वाद्यस्थानं प्रकीर्तितम् ७६
अग्निगोपुरयोर्मध्ये धनधान्यगृहं भवेत्
कुर्यान्मजनशालायां मातृपावकमध्यतः ७७
विघ्नेशमातृमध्ये तु पुष्पमण्टपमुच्यते
कुमारविघ्नयोर्मध्ये कूपस्थानमुदाहृतम् ७८

अन्तर्भरे तु चण्डेशं ईशान्या दिशि कल्पयेत्
मध्यस्थाने तु कर्तव्यमथाष्टपरिवारकम् ७९
मर्यादाभित्तिके कुर्या परिवाराणि षोडश
इन्द्रश्चाग्नियमश्चैव निर्ऋतिवरुणोऽनिलः ८०
कुबेरस्य तथेशानं पूर्वादिक्रमशो न्यसेत्
इन्द्र ईशनयोर्मध्ये आदित्या द्वादश स्मृताः ८१
इन्द्राग्नियमयोर्मध्ये अश्विनौ द्वौ तु विन्यसेत्
आग्नेययाम्ययोर्मध्ये रोहिणी सप्त विन्यसेत् ८२
याम्यनैर्ऋतयोर्मध्ये पितृस्थानं विधीयते
निर्ऋतिजलयोर्मध्ये अप्सरोगणमुच्यते ८३
वरुणानिलयोर्मध्ये ऋषिस्थानं विशेषतः
वायव्यसोमयोर्मध्ये वसवोऽष्टौ तु विन्यसेत् ८४
सोम ईशानयोर्मध्ये रुद्रा एकादशा स्मृताः
प्राकारयोर्द्वयोर्मध्ये बलिपीठं विधीयते ८५
द्वारविस्तारमानेन प्रथमं पीठमुच्यते
द्वितीयं द्विगुणं प्रोक्तं तृतीयं त्रिगुणं भवेत् ८६
विस्तारेण समोत्सेधं कर्तव्यं तु प्रमाणतः
तत्कृत्वा षोडशोत्सेधमेकेनोपानमुच्यते ८७
चतुर्भिर्जगती कुर्यात्कुमुदं तु त्रिभागतः
भागेन पट्टिका कुर्यात्कण्ठं कुर्यात्त्रिभागतः ८८
भागेनैकेन कर्तव्या त्कण्ठस्योर्ध्वेन पट्टिका
विस्तारार्धप्रमाणे तु पद्मं कुर्यात्तदूर्ध्वतः ८९
कर्णिका तत्र भागैकद्विभागं दलमुच्यते
ततो मूर्धेष्टकं कुर्याद्विधानेन विशेषतः ९०
इति स्वायम्भुसूत्र उत्तरसूत्रे प्रासादलक्षणपटलस्सप्तविंशतिः

अथ वक्ष्ये विशेषेण ऊर्ध्वकविधिवक्रमम्
प्रासादस्योत्तरे पार्श्वे मगटपे च सुसंस्मृते १
स्थगिडलं तत्र कर्तव्यं शालिभिश्चतुरङ्गुलम्
तगडुलै शोभितं कृत्वा दर्भैरपि परिस्तरेत् २
नवशक्तिसमोपेतं गन्धाद्यैरर्चयेत्क्रमात्
तस्य मध्ये न्यसेद्विद्वान् सुस्निग्धा निर्घृणा दृढान् ३
मूलमग्रं विदित्वा तु चतुरश्राष्टकान्यसेत्
किञ्चिदग्रं भवेन्निम्नं मूलं वै किञ्चिदुन्नतम् ४
अधोभाग भवेत्पृष्ठमूर्ध्वभागमुखं भवेत्
शालिपिष्टमयेनाथ रेचयेदक्षराणि तु ५
यकारं पुरतो लेख्यं रकारं दक्षिणे न्यसेत्
लकारं पश्चिमे लिख्य वकारं चोत्तरे न्यसेत् ६
लोहजं दारुणं वापि स्यूपं तत्रैव विन्यसेत्
आयामं दीर्घविस्तारं विस्तारं पादसम्मितम् ७
अग्रमङ्गमविस्तारमानुपूर्व्यानुशन्तथा
चतुरश्रं भवेन्मूलं त्रिभागैकं समानतः ८
वृत्तं तदूर्ध्वतः कुर्यात् शिखिपादमथो न्यसेत्
विस्तारं त्रिगुणायामं विस्तारं समविस्तृतम् ९
तद्पयेन समायोज्य सवह्नौ मथितं तथा
पञ्चमूर्तिसमायुक्तं गन्धाद्यैरर्चयेत् क्रमात् १०
आच्छाद्य पीतवस्त्रेण दर्भैश्चोपरि संस्तरेत्
ततः प्रभाते विमले नक्षत्रकरणान्विते ११
तदग्रे स्थगिडलं कृत्वा सुशुद्धैर्वालुकस्तथा
समिदाज्यचरून् लाजान् यवान् सद्यादिभिः क्रमात् १२
प्रत्येकं शतमर्धं वा स्पृष्ट्वा स्पृष्ट्वा तु होमयेत्
सुमुहूर्ते सुलग्ने स्यापथस्थापतितं तथा १३

शुक्लवस्त्रपरिच्छन्नौ शुक्लमालानुलेपनौ
हेमाङ्गुलीयकटककुण्डलाद्यैरलङ्कृतौ १४
अन्योन्यमनसावेतौ विन्यसेदिष्टका क्रमात्
सद्योवाममघोरं च तत्पुरुषं च स्मरेद्गुरुः १५
मध्यमे नवरत्नानि विन्यसेच्च यथाक्रमम्
ऐन्द्रे परतकं प्रोक्तं वैडूर्यं वह्निगोचरे १६
महानीलं तु याम्यायां मुक्ता नैर्ऋृतिगोचरे
वारुणे स्फटिक प्रोक्तं पद्मरागं तु वायवे १७
वज्रं तु सौम्यदिग्भागे ईशान्यं तु प्रवालकम्
माणिक्यं मध्यमं चैव न्यसेद्देवं क्रमात्ततः १८
नवबीजसमायुक्तं नवरत्नानि विन्यसेत्
ईशानेन तु मन्त्रेण व्यूपीं तत्रैव विन्यसेत् १९
स्थापको मन्त्रयोग्यस्तु स्थापतिः कर्मयोग्यकः
त्रिभागैकं भवेद्दृश्यं व्यूपी शेषं तु बन्धयेत् २०
इति स्वायम्भुसूत्रे उत्तरसूत्रे मूर्धकाष्टकः पटल अष्टविंशतिः

## लिङ्गलक्षण

अथ वक्ष्यामि ते ब्रह्मन् लिङ्गलक्षणमुत्तमम्
शैलजं रत्नजं चैव धातुजं दारुजं तथा १
मृण्मयं क्षणिकं चैव षडङ्गं लिङ्गमुच्यते
चतुर्विधं तु शैलं स्यात् सप्तधा रत्नजं तथा २
अष्टधा धातुजं प्रोक्तं दारुजं षोडशोच्यते
मृण्मयं द्विविधं प्रोक्तं क्षणिका सप्तधोच्यते ३
श्वेतं रक्तं तथा पीतं कृष्णञ्चेति चतुर्विधम्
शैलजं लिङ्गमाख्यातं तस्य लक्षणमुच्यते ४
गोक्षीरसन्निभा चैव शङ्खकुन्देन्दुसन्निभा

तिलाख्यातासमाश्वेता साप्यर्गप्रदायिका ५
जपाकुसुमसंकाशं शत्रुशोणितसन्निभा
बन्धूकपुष्पप्रतिमा जातलिङ्गेन्द्रगोपवत् ६
शिला रक्तसमाख्याता जयदा लक्षणान्विता
पीता सुवर्णसदृशा रजनीचूर्णसन्निभा ७
शिलालक्षणसंयुक्ता धनधान्यसुखप्रदा
माषगुग्गुलसङ्काशा महिषाक्षनिभा तथा ८
शृङ्गमुद्गसमाकारप्रजावृद्धिकरा मता
शिला कृष्णा तु सर्वेषां सर्ववृद्धिप्रदायिका ९
विप्रक्षत्रियवैश्यानां पीता धनसमृद्धिदा
द्विजानां च नृपाणां च शिला रक्ता जयप्रदा १०
श्वेता मोक्षप्रदा प्रोक्ता ब्राह्मणानां विशेषतः
चातुर्वर्णशिला या तु स्त्रीपुंनपुंसकं ज्ञितम् ११
चतुरश्रं तु पुल्लिङ्गं चतुरायतमेव च
स्त्रीलिङ्गे वृत्तरूपं च वृत्तायतममैव च १२
त्र्यश्रं नपुंसकं प्रोक्तं त्रिकोणायतमेव च
घण्टारवं तु सर्वेषां पुल्लिङ्गे शैलमेव च १३
कांस्यभाण्डध्वनिर्नारी निश्शब्दन्तानपुंसका
पुल्लिङ्गे लिङ्गमित्याहुः स्त्रीलिङ्गे पीठमुच्यते १४
कूर्मं नपुंसके कुर्यात् स्त्रीपुन्नपुंसकं भवेत्
स्त्रीलिङ्गं तु यथा लिङ्गं राजराष्ट्रविनाशनम् १५
पुल्लिङ्गे तु यथा पीठं स्त्रीणां गर्भविनाशनम्
स्त्रीलिङ्गे कूर्ममित्याहुः सर्वसस्यविनाशनम् १६
नपुंसके लिङ्गपीठे सर्वेषां तु नपुंसकम्
एवं परीक्ष्य बहुधा शिलाया लिङ्गकर्मणि १७
माणिक्यं च प्रवालं च वैडूर्यं स्फटिकं तथा

मरतकं पुष्यरागं च नीलं चैव तु रत्नजा १८
माणिक्यं श्रीप्रदं प्रोक्तं प्रवालं वश्यकारकम्
आकर्षणं तु वैडूर्यं स्फटिकं पुत्रवृद्धिदम् १९
द्वैषं मरतकप्रोक्तं स्तम्भनं पुष्यरागिकम्
नीलं तु मरणं कुर्यात् रत्नजानां फलं भवेत् २०
हैमं रौप्यं तथा ताम्रं कांस्यपीतं तथैव च
अयसा सीसकं चैव त्रपुकं चेति धातुजम् २१
हैमं मोक्षप्रदं प्रोक्तं रौप्यं राज्यप्रदायिकम्
ताम्रं पुत्रसमृद्ध्यर्थं कांस्यविद्वेषकारकः २२
प्रोच्याटनं मारकूटमायसं क्षयकारकम्
सीसकं रोगकरणं त्रपुषायुर्विवर्धनम् २३
एवं तु धातुजं प्रोक्तं ततो दारुजमुच्यते
देवदारुश्शमीवृक्षपिप्पलं चन्दनं तथा २४
असनं खदिरं चैव बकुलं सिंशवं तथा
मधूका पद्मबन्धूकं कर्णिकारं तथैव च २५
तिन्दुकं जातिका चैव प्लक्षमौदुम्बरं तथा
एते वर्णास्तु चत्वारो द्विजादिक्रमशो गतः २६
मृण्मयं द्विविधं प्रोक्तं क्वद्वाप्रक्वप्रभेदतः
सैकतं गोमयं चाणुं चैष्टं गोलफलं तथा २७
नवनीतं च सप्तैते क्षणिकास्समुदीरिताः
सैकतं मोक्षदं प्रोक्तं गोमयं रोगनाशनम् २८
अणुमन्नाद्यकामं स्यात् पैष्टं पुष्टिप्रदायकम्
गोलं प्रीतिप्रदं ज्ञेयं फलमिष्टप्रदायकम् २९
लाजतन्नवनीतं च क्षणिकानां फलं भवेत्
स्वयोनिरेव पीठ स्यात् सर्वेषामिति चोदितम् ३०
अथवान्यप्रकारोऽयं वक्ष्यते तदसंभवे

शैलाद्यनिष्टकाभिस्तु रितैर्ल्लैहस्तु कारयेत् ३१
इष्टकाभिस्तु दार्वा च कुर्याल्लक्षणतो बुधः
क्षणिकानां च लिङ्गानां न कुर्यात्पीठबन्धनम् ३२
अङ्गुल्यादिवितस्त्यन्तं कुर्याल्लिङ्गं तु रत्नजम्
एकाङ्गुलविवृद्ध्या तु कुर्यादाद्वादशाङ्गुलम् ३३
ततस्त्वङ्गुलवृद्ध्या तु कुर्याच्छैलं यथाक्रमम्
नवहस्तान्तरं लिङ्गं कुर्याच्छिवमयं बुधः ३४
आयामसदृशा नाहं शिरोवर्तनसंयुतम्
लिङ्गं कृत्वा त्रिभागं तु द्विभागं दृश्यमुच्यते ३५
पीठस्या वादमध्ये तु भागमेकं प्रवेशयेत्
शैलजे दारुजे वापि प्रस्थानं पूर्वमारभेत् ३६
यस्मिन् देशे शिलास्तीति गच्छेन्निश्चित्यमानसः
प्रयाणकाले शकुनाः शुभाशुभफलप्रदाः ३७
शुभवाक्योदकुम्भानां गजराजं द्विजोत्तमम्
छत्रमांसं दधिक्षीरं दुन्दुभिध्वनिरिष्यते ३८
अशोभनास्तथा वाचाः शपमाना अरातयः
विकीर्णकेशं विग्रन्थ्य मुण्डतैरात्मदर्शनम् ३९
रक्तकुम्भं निरोधोक्तिः तैलभाजनदर्शनम्
प्रयाणकाले नष्टास्तु विपरीतफलप्रदाः ४०
सुमुखे दुष्टशकुने स्थित्वा पक्षमशोभने
शिलां प्राप्य शुभे देशे खात्वा नूपहतान्तु तत् ४१
आयाम परिणामान्या शिला दोषविवर्जिता
अनूषरजलक्लिन्नामतप्तामर्करश्मिभिः ४२
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयेत्
गन्धपुष्पं ततोऽपूपंदीपनैवेद्यमेव च ४३
सद्यादिब्रह्मभिर्जप्त्वा दक्वा चास्त्रेण भूतलम्

पुरतस्तत्र कर्तव्यं होमं सविधिकं ततः ४४
समिदाज्यचरूणां तु प्रत्येकं तु शताहुतीः
हृदयेन समिद्धोमं सर्पिरीशानमन्त्रतः ४५
अघोरेण चरुं हुत्वा प्रत्येकं व्याहृतिस्ततः
ततस्स्विष्टकृतं हुत्वा परिषेकान्तमाचरेत् ४६
परितं कलशानष्टौ लोकपालाधिदेवतान्
संस्थाप्याभ्यर्च्य गन्धाद्यैस्त्मन्त्रेणैव देशिकः ४७
अभिषिच्य शिलं तैस्तु मुहूर्ते करणान्विते
अघोरास्त्रेण मन्त्रेण घृतैर्मधुयुतेन वा ४८
शिलादोषं परीक्ष्याथ कर्तव्यं लिङ्गमादरात्
अधोभागमुखं तस्यात् पृष्ठमूर्ध्वं प्रकल्पयेत् ४९
पूर्वतश्चोत्तरे वाथ शिरोभागं प्रकल्पयेत्
मुखं पृष्ठ तथा भागं पार्श्वं चैव शिरस्तथा ५०
लाञ्छयित्वाक्षराण्यत्र तत्र लक्षणमारभेत्
बाला तु यव्वने वृद्धा ज्ञातव्यं लक्षणैस्ततः ५१
स्निग्धा मृदुतला चैवं बाला क्षीणा स्वभा तथा
सुस्वराकात्रिसंयुक्ता यव्वना सा शिला मता ५२
सुस्निग्धा जयरारूक्षा वृद्धा सा निश्वरा शिवा
बाला क्षयकरा प्रोक्ता यव्वना सर्वसिद्धिदा ५३
कार्यनाशकरी वृद्धाग्राह्या ज्ञत्वा शिला तथा
अभितस्तत्क्षणं कृत्वा शिलादोषास्तु लक्षयेत् ५४
लिङ्गं प्रलिप्य क्षीरेण विषल्काससगैरिकैः
एवं रात्रौषितं लिङ्गं संप्रक्षाल्याम्भसा पुनः ५५
शिलादोषं परीक्ष्याथ कर्तव्यं विधिचोदितम्
रेखाबिन्दुतळर्कां च शिलादोषा प्रकीर्तिता ५६
मण्डलं तु भवेद्यत्र तत्र गर्भविनिर्दिशेत्

सिते तु मण्डले सर्परक्ते तु कृकलासता ५७
पीते तु मण्डले गोधा मञ्जिष्ठे दर्दुरो भवेत्
कपिलेमूषिका प्रोक्ता चित्रवर्णे तु मूषिकाः ५८
श्वेतरक्तविमिश्रे तु मण्डूको मण्डलो भवेत्
क्षाद्रवर्णे तु खद्योतं कपोते गृहगोळिका ५९
गुलवर्णे तु पाषाणे निस्त्रिंशाभे जलं भवेत्
वर्जयेद्गर्भसंयुक्तं विमलैरन्वितं तथा ६०
विमलोदमका संख्या लाभाख्यं तु त्रिधा मता
परीक्ष्येवं प्रकर्तव्यं लिङ्गगर्भप्रमाणतः ६१
प्रासादगर्भमानं तु सूत्रेण सुमितं ततः
गर्भं कृत्वा तु पञ्चांश त्र्यैंशेनैवोत्तमं भवेत् ६२
नवधा भाजिते गर्भे पञ्चांशैर्मध्यमं भवेत्
गर्भार्धमधमं प्रोक्तं त्रिविधा स्यात्प्रमाणतः ६३
अधमोत्तमयोर्मध्ये विभज्य नवधा पुनः
त्रीण्युत्तमानि चान्त्यानि त्रीणि मध्यानि मध्यतः ६४
अधमानि तथान्त्यानि त्रीणि कुर्याद्यदृच्छया
हस्तमानेन वा कुर्यात् पूर्वलिङ्गे कृते तथा ६५
एकहस्तद्विहस्तं वा त्रिहस्तमधमं भवेत्
मध्यमं स्याच्चतुर्हस्तं पञ्चहस्तं च षट्करम् ६६
उत्तमं सप्तहस्तं स्यात् नवहस्ताष्टहस्तकम्
कृत्वायामं चतुर्भागं प्रमाणैर्निश्चिताशिलाम् ६७
भागमेकं तु विष्कम्भं कृत्वा भागं त्रिधा पुनः
नवधा गर्भगारं च एकांशे लिङ्गविस्तरम् ६८
सूत्र्यंशे पीठमित्याहुः नवं गर्भगृहं भवेत्
अधोभागं भवेद्ब्राह्म्यं मध्यमं वैष्णवं भवेत् ६९
चतुरश्रं भवेद्ब्राह्म्यं अष्टाश्रं वैष्टवं तथा

तुर्यच्छैवं तथा वृत्तं क्रमेणैवायतं ततः ७०
एतत्सर्वं समं लिङ्गं सर्ववृद्धिकरं शुभम्
त्रिभागमष्टधा कृत्वा विष्कम्भं पञ्चभागिकम् ७१
सप्तांशं ब्राह्म्यमायाममष्टांशं वैष्णवं भवेत्
शैवं शेषं समाख्यातं लिङ्गमेतच्छिलाधिकम् ७२
यावल्लिङ्गस्य चोत्सेधा त्रयस्त्रिंशतिभागिकम्
आदित्याश्शिवभागं तु रुद्रा वैष्णवमुच्यते ७३
लोकत्पद्मोद्भवं चैव स्वस्तिकं लिङ्गमुच्यते
लिङ्गायामं तु यद्दीर्घमेकत्रिंशतिभागिकम् ७४
दशैव वैष्णवं चैव ब्राह्म रुद्रसमाहितम्
पुष्करं लिङ्गमित्युक्तं सर्वकामार्थमोक्षदम् ७५
ब्रह्मा विष्णुमहेशं च समं कुर्यात्त्रिभागिकम्
तुर्यश्रमष्टभागं तु अष्टाश्रं सप्तभागिकम् ७६
वृत्तं षड्भागमेवं तु तल्लिङ्गानाममेष तु
विप्राणां वर्धमानं तु नृपाणां स्वस्तिकं भवेत् ७७
वैश्यानां पुष्करं युक्तं शूद्रैस्सर्वसमं भवेत्
चातुर्वर्ण्यहितं प्रोक्तं लिङ्गं सर्वसमं भवेत् ७८
नवधा भाजिते लिङ्गे वृत्तं षड्भाग उच्यते
सप्तभागमथाष्टाश्रं चतुरष्टाश्रभागिकम् ७९
एतत्सुरार्चितं लिङ्गं लिङ्गशास्त्रविशारदाः
शिरसो वर्तनं तेषां तच्चतुर्विधमुच्यते ८०
प्रथमं त्रपुषाकारं ब्राह्मणां तु प्रशस्यते
अर्धचन्द्रनिभाकारं राज्ञा चैव द्वितीयकम् ८१
छत्राकारं नृपाणां तु वैश्यानां वर्तुलं तथा
कुक्कुटाण्डनिभं चैव शूद्राणां तु चतुर्थकम् ८२
कृत्वा भागं तु षड्भागं लिङ्गस्य तु शिरस्ततः

सार्धेन तु विभागेन वर्तीत त्रपुषाकृतिः ८३
विस्तारं तु त्रिधा कृत्वा द्विभागेन तु वर्तितुम्
अर्धचन्द्रमिति प्रोक्तं छत्रं स्यात् समवर्तितम् ८४
कुक्कुटाङ्ग भवेत्तत्र विस्तरार्धेन वर्तितम्
लिङ्गं तु प्रोक्तमव्यक्तं सुव्यक्तं मधुनोच्यते ८५
इति स्वायम्भुवे उत्तरसूत्रे लिङ्गलक्षणपटल एकोनत्रिंशत्

## प्रतिमालक्षण

अथ वक्ष्ये विशेषेण प्रतिमालक्षणं परम्
निष्कलं लिङ्गमित्युक्तं सकलं प्रतिमा भवेत् १
त्रिविधं तु समाख्यातमचलं मृण्मयं तथा
चलं लोहमयं प्रोक्तं शैलमुक्तं चलाचलम् २
मृण्मयप्रतिमायां तु शूलास्थापनमारभेत्
खदिरादेवदारूश्च सारसस्तञ्च एव च ३
कृसरं चन्दनं चेति सारैरेषां तु कारयेत्
दण्डं प्रोक्तं शैलमुक्तं अष्टबन्धमथापि वा ४
पदमेकोनपञ्चाशत्कृत्वैकं मध्यमं भवेत्
ब्राह्म्यं तदभितश्चाष्टौ दैविकं तस्य बाह्यतः ५
मानुषं षोडशाख्यातं शेषं पैशाचमुच्यते
मानुषे परभागे तु शूलस्थापनमारभेत् ६
तदग्रे मानुषे भागे कर्मार्चास्थापनं भवेत्
अधिवास्या ततो रात्रौ तण्डुले शालिसंभवेत् ७
गन्धादिस्समभ्यर्च्य सद्यादिब्रह्मभिस्ततः
अभितः कलशानष्टौ विद्येश्वरसमायुतान् ८
वस्त्राढ्यान् कूर्चसंयुक्तान् सहेमान्परिपूरिताः
गन्धादिभिस्समभ्यर्च्य ततो होमं समाचरेत् ९

समिधस्सद्यमन्त्रेण सर्पिर्वामेन होमयेत्
अघोरेण चरुं हुत्वा लाजान् तत्पुरुषेण तु १०
ईशानेन यवान् हुत्वा प्रत्येकं तु शताहुतीः
प्रभाते सुमुहूर्ते तु शूलस्थापनमारभेत् ११
शिलापादधरं स्थाप्य रत्नादि क्रमशो न्यसेत्
ऐन्द्रे तु विन्यसेद्वज्रं वैडूर्यं वह्निगोचरे १२
इन्द्रनीलं तु नैर्ऋत्यां याम्यामे पुष्यरागकम्
प्रवालं वरुणे भागे मौक्तिकं वायुदेशतः १३
सूर्यकान्तं तु सौम्यायामीशान्यां स्फटिकं तथा
माणिक्यं मध्यमे चैव नवबीजानि विन्यसेत् १४
ईशानेन तु मन्त्रेण शूलं संस्थापयेदथ
गन्धादिभिस्समभ्यर्च्य पुण्याहं वाचयेत्ततः १५
पूजयेद्वस्त्रहेमाद्यैस्थापकं स्थापितं तथा
प्रतिमां तु ततः कृत्वा संस्कृतेन मुदान्वितः १६
श्वेतां रक्तां तथा पीतां कृत्तिकां तु समाहरेत्
अतसीतैलसंयुक्तं घृतं क्षीरयुतं तथा १७
गोधूमयवमाषाणां पूर्णैः कपिसमायुतैः
सर्जगुग्गुलुनिर्यासं लाक्षश्रीवेष्टकं तथा १८
चूर्णैः क्वाथ समायोज्य क्षीरवृक्षत्वचं तथा
पिञ्जिलेन कषायेन समालोप्य सकृत्ततः १९
मासपक्षोषितेनाथ सुश्लक्ष्णेण मुदा सह
तदेव नालिकेरस्य फलं कोशेन संयुतम् २०
स्त्रक्षणेन समायुक्तं कर्तव्यममलं ततः
ब्रह्माविष्णुहरं चैव दशतालेन योजयेत् २१
अर्धतालविहीना स्युः तदेन्द्रादित्यवज्रिणः
अश्विश्चण्डेश्वरं चैव यमश्च वरुणस्तथा २२

वायुश्चापि कुबेरश्च नवतालेन कारयेत्
उमादुर्गा तथा लक्ष्मी ज्येष्ठा चापि तथा भवेत् २३
अर्धतालविहीना स्युः विद्येशा निर्ऋतिस्ततः
अष्टतालनरास्तत्र राक्षसाश्च गणेश्वराः २४
सप्ततालं पिशाचास्तु पञ्चतालगणाधिपम्
वामनस्तु तथैवा स्यात् चतुस्तालं तु भूतकाः २५
विभज्य प्रतिमायामं तालगुण्ये नवाङ्गुलम्
द्व्यङ्गुलात्तु कला ज्ञेयात् भागं विद्यात् कलात्त्रयम् २६
भागं द्वयं मुखं विद्यात् यमतालं च कीर्तितम्
द्वारमानेन कर्तव्यमचलं तु प्रमाणतः २७
उत्तमं तु समाख्यातमचलं द्वारसंमितम्
नवभागविहीनं तु मध्यमं समुदाहृतम् २८
अष्टभागैकहीनं यदधमं समुदाहृतम्
त्रिभागैकं भवेत्पीठमधमेन तु कल्पयेत् २९
स्थानके तु चतुर्भागं पञ्चभागैकमेव वा
गर्भमानेन तुर्यात्तु चलं चैव चलाचलम् ३०
गर्भं तु नवधा भज्य भवेदेकैकहीनकम्
प्रोक्तं तु नवधा नाममुत्तमादित्रयं त्रयम् ३१
अथ वक्ष्याम्यशेषेण मानोन्मानप्रमाणतः
मानमायाममित्युक्तं उन्मानं नागमुच्यते ३२
एषां चिह्नं प्रमाणं स्यात् वक्ष्यतेऽतः परं क्रमात्
उष्णीषमङ्गुलं प्रोक्तं त्र्यङ्गुलं शिर उच्यते ३३
भागमेकं ललाटं स्यात् नासिकां तु कलाद्वयम्
चिबुकं भागमेकं स्यात् कण्ठं भागप्रमाणतः ३४
कण्ठान्तु हृदयं तालं नाभिस्तस्मात्तथा भवेत्
तस्मान्मेढ्रं तु तालं स्यादूरुतालद्वयं भवेत् ३५

भागमेकं भवेज्ञानु जङ्घा तालद्वयं तथा
गुल्फं कलाद्वयं प्रोक्तं मानमेवं प्रकीर्तितम् ३६
एवं समानं सर्वेषामधिकं चाष्टभाजितम्
मूढात्कराठत्वजानू च गुल्फं हित्वाभिवर्जयेत् ३७
न्यूने चाप तथा न्यूनं कर्तव्यं तु विजानता
षट्त्रिंशदङ्गुलं प्रोक्तं शिरसो नाग एव तु ३८
कर्णयोरन्तरालं तु ललाटे तु दशाङ्गुलम्
मस्तकात्तु तथा कर्णं द्वादशाङ्गुलमुच्यते ३९
चतुरङ्गुलकर्णं स्याद्विस्तारं स्यात्तदर्धनः
ओष्ठमेकाङ्गुलं प्रोक्तमुत्तरोष्ठं तदर्धतः ४०
कलाद्वयं भवेदास्यं कर्णनाळं त्रियङ्गुलम्
कलायामं तथा नेत्रं विस्तारं स्यात्तदर्धतः ४१
त्रिभागैकं भवेत्तारं ज्योति स्यात् पञ्च भागकम्
विकलं नासिकायामं तलं चैव पुटद्वयम् ४२
कूटमध्ये यवं प्रोक्तं नासिकाग्रं तथा भवेत्
अग्रं तु द्व्यङ्गुलोत्सेधं मूलोत्सेधं तदर्धतः ४३
भ्रुवो नेत्रसमायामौ कलाविद्यात्तदन्तरम्
त्र्यङ्गुलं तु गलोत्सेधं द्विबुधं चतुरङ्गुलम् ४४
षड्भागं कराठनाहं स्यात् द्विभागं स्कन्दमुच्यते
उरौ नाभस्तथा प्रोक्तं पञ्चविंशत्कला भवेत् ४५
नाभिमध्ये तथा नाभौ द्विचत्वारिंशदङ्गुलम्
नाभिप्रदक्षिणावर्ण निम्नमर्धाङ्गुलं भवेत् ४६
कराठा स्तनं मुखं ज्ञेयं स्तनयोरन्तरं तथा
विस्तारेण समाख्याता कटिरष्टादशाङ्गुला ४७
ऊरुमूले तथा नाहौ द्वात्रिंशत्र्यङ्गुलानि तु
सप्तभागं तु तन्मध्ये पञ्चभागं तु जानुतः ४८

जनुनाभात् कलाहीनं जङ्घमध्ये प्रकीर्तितम्
कलाहीनं ततस्तस्मात् जङ्घाग्रे नाल उच्यते ४९
बाहुनाहौ नवकला कलाहीनं च बाहुकम्
कराग्रे षट्कलानाभौ मणिबन्धे कलानिधिः ५०
तदूर्ध्वं तु कलं ज्ञेयं सप्ताङ्गुलमुदाहृतम्
करमध्याङ्गुलायामं पञ्चाङ्गुलमुदीरितम् ५१
तस्मादर्धाङ्गुलग्रासोऽनामिकायाः प्रमाणतः
तर्जनी तत्समा ज्ञेया भागमङ्गुष्ठमुच्यते ५२
आयामं तत्प्रमाणेन कनिष्ठाङ्गुलसंमिता
अङ्गुलीनां तु सर्वं स्यात् पञ्चभागैकमूर्ध्वतः ५३
द्विभागं मध्यपर्वं स्यात् अधस्तात् तत्समं भवेत्
अङ्गुष्ठं तु द्विपर्वं स्यात् अधश्चोर्ध्वं समं भवेत् ५४
नखं स्यादग्रपर्वान्तमङ्गुलीनां प्रमाणतः
आयामसदृशानाभमङ्गुष्ठस्य विधीयते ५५
तस्मादर्धाङ्गुलग्रासो मध्यमायास्त्वनाहतः
त्र्यङ्गुलं च तथा प्रोक्तं तर्जनी नाभ उच्यते ५६
तत्समानामिका ज्ञेया कनिष्ठाष्टाङ्गहीनका
त्र्यङ्गुष्ठकं प्रदेनाहुः ++ पञ्चाङ्गुलो मताः ५७
तत्समानामिका ज्ञेया नाहुविद्याच्चदङ्गुलम्
षोडशांशैकहीनास्यादायामेनाहतस्तथा ५८
मध्यमानामिका ज्ञेयानामिकाया कनिष्ठिका
द्वाः पादशाङ्गुलमायामं मकुटं चाधमं भवेत् ५९
चतुर्दशाङ्गुलायामं मकुटं मध्यमं भवेत्
षोडशाङ्गुलमायामं मकुटं चोत्तमं भवेत् ६०
अष्टाङ्गमधिकं नाभं राक्षसाञ्चासुरास्तथा
भूतानां द्विगुणं नाभं विघ्नेशस्य तथा भवेत् ६१

पिशाचस्य मुखादन्यनाभमर्धमुदीरितम्
एवं प्रमाणमुद्दिष्टमधुनाकृतिरुच्यते ६२
सुखासनं तु प्रथमं द्वितीयमुमया सह
तृतीयं वृषभारूढं चतुर्थं त्रिपुरान्तकम् ६३
पञ्चमं नृत्तरूपं तु षष्ठं वै चन्द्रशेखरम्
अर्धनारीश्वरं तत्र कुर्याद्वै सप्तमं ततः ६४
अष्टमं हरिरधं स्याद् ईश्वरार्धं तु कारयेत्
चण्डेश्वरप्रमाणं तु नवमं कारयेत्ततः ६५
कुमारीं दशमं कुर्यात् कलानाशमतः परम्
द्वादशालिङ्गसंभूतं द्वादशप्रतिमस्तथा ६६
त्रिणेत्रं भुजचत्वारी बालेन्दुकृतशेखरम्
व्याघ्रचर्माम्बरं चैव हारकेयूरसंयुतम् ६७
यज्ञोपवीतं संयुक्तं कुण्डलाभ्यामलङ्कृतम्
एवं द्वादशमूर्तीनां सामान्यं समुदीरितम् ६८
अतः परं विशेषं तु वक्ष्यो त क्रमशोऽधुना
आसने तु सुखासीनं कृष्णं परशुधारिणम् ६९
देवं कुर्यात्सुखासीनमुमासहितमुच्यते
उमाशङ्करयोर्मध्ये स्कन्दं वै बालरूपिणम् ७०
सुखासीनं ततः कुर्यात्पूर्ववत्सर्व एव तु
तस्यैव वामपार्श्वे तु भवानीं श्यामला शुभाम् ७१
भुजद्वयसमायुक्तं प्रसारितकरान्वितम्
दक्षिणेऽब्जधरं देवीं सर्वाभरणभूषिताम् ७२
तप्तकाञ्चनसंकाशं गौरीं ध्यायेद्विचक्षणः
अष्टबाहुचतुर्मूर्ते शक्तिमेतां प्रकीर्तिताम् ७३
पाशाङ्कुशधरां देवीं वराभयधृतान्विताम्
सभोगसमते चैव प्रसारित करान्विताम् ७४

इत्थं भूतवरारोहां भावयेत्तं विचक्षणः
द्विरष्टहस्तमूर्तेस्तु शक्तिरेषां प्रकीर्तिताम् ७५
अघोरशक्तयः प्रोक्तं विकरालीति संज्ञितम्
भुजाष्टकसमायुक्तां ध्यायेत्ताघोररूपिणीम् ७६
वरं च फलकं चैव टङ्कं पाशं तथाङ्कुशम्
गदात्रिशूलचक्रं च पद्मं चेति यथाक्रमम् ७७
द्वात्रिंशद्धस्तमूलैस्तु शक्तयस्ताः प्रकीर्तिताः
नासान्तमुत्तमं प्रोक्तं कण्ठान्तं मध्यमं भवेत् ७८
स्तनान्तमधमं चैव त्रिविधा मूर्तिकल्पना
वृक्षारूढमथो वक्ष्ये वृषभं पृष्ठतस्थितम् ७९
उमेश्वरौ स्थितौ कृत्वा कोर्परं वृषमुच्यते
कृष्णापरशुसंयुक्तं कर्तव्यं वृषवाहनम् ८०
धनुर्बाणसमायुक्तं कृष्णापरशुधारिणम्
उमया सहितं देवं कुर्याद्वै त्रिपुरान्तकम् ८१
शूलं डमरूहस्ताभ्यां नृत्यन्तं शान्तरूपिणम्
जनाभिस्सविकीर्णं तु नृत्तरूपं तु कारयेत् ८२
रज्वागतस्मितं देवं कृष्णापरशुधारिणम्
जटामकुटसंयुक्तां कर्तव्यं चन्द्रशेखरम् ८३
ईश्वरं दक्षिणं पार्श्वं वामपार्श्वं तु पार्वती
प्रकोष्ठे शुकसंयुक्तं हरं परशुसंयुतम् ८४
अर्धनारीश्वरं प्रोक्तं हरिरर्धमथोच्यते
वामपार्श्वे हरिं कुर्याद्दक्षिणे परमेश्वरम् ८५
हरिश्चक्रधरं देवं ईश्वरे परशुस्थितः
पीताम्बरधरं विष्णुं व्याघ्रचर्माम्बरेश्वरम् ८६
विष्णुं किरीटसंयुक्तं जटामकुटमीश्वरम्
हरिरर्धमिदं प्रोक्तं श्यामं विष्णुशिवं तथा ८७

प्रत्यालीढस्य देवस्य चण्डेशं पार्श्वतो न्यसेत्
प्रकृष्टपरशुं कृत्वा हृदये तु कृताञ्जलिः ८८
चण्डेश्वरप्रसादं तु प्रोक्तमेवं विधानतः
कुमारीरुग्ररूपं तु कामपार्श्वेतिपाततः ८९
कुमारमेवं कुर्यात्तु कामनाशमतः परम्
दक्षिणे तु करे शूलं परशुं वामबाहुके ९०
कालस्य हृदये पादमेकपादस्थितं भवेत्
कालनाशमिति प्रोक्तं लिङ्गोत्पत्तिरथोच्यते ९१
लिङ्गं कृत्वार्धतो ब्रह्मन् पक्षयुक्तं तु कारयेत्
विष्णुं वराहयुक्तं तु लिङ्गस्याधः प्रकल्पयेत् ९२
हृदयेऽजलि संयुक्तो ब्रह्मा विष्णुश्च पार्श्वतः
लिङ्गमध्ये ततः कुर्यात्पूर्ववच्चन्द्रशेखरम् ९३
एवं द्वादशमूर्तीनामन्येषामधुनोच्यते
चतुर्मुखं चतुर्बाहुं कमण्डल्वक्षसूत्रिणम् ९४
रक्तवर्णजटायुक्तं कुर्याद्ब्रह्माणमुज्ज्वलम्
शङ्खचक्रधरं देवं श्यामं पीताम्बरं हरिम् ९५
कुर्यात् कुमारं रक्ताङ्गमक्षशक्तिधरं परम्
हस्तैर्द्वादशभिर्युक्तं द्विभुजं वा चतुर्भुजम् ९६
कथितं तु कुमारस्य गणेशस्य तु वक्ष्यते
गजाननं चतुर्बाहुं दन्तहस्तं त्रिलोचनम् ९७
लम्बोदरं बृहत्कुक्षिं व्यालयज्ञोपवीतिनम्
कुर्याद्गणेशमेवं तु दुर्गायामधुनोच्यते ९८
अष्टहस्ता भगवतीं महिषस्य शिरस्थितम्
शूलं खड्गं शरं चक्रं दक्षिणे तु चष्करौ ९९
खेटकं च तथा पाशं शङ्खं चापं च वामतः
श्यामला पीतवस्त्रां तु दुर्गामेवं तु संस्मरेत् १००

भास्करस्य तथा रूपं रक्ताभा रक्तकुण्डलम्
ज्येष्ठादेवि तथा कुर्याद्विभुजा श्यामरूपिणीम्  १०१
त्रपुकन्यां समायुक्ता कलिपत्नीं कुमारयेत्
द्विभुजं वामहस्तं तु कुर्यात्पत्रे तु संस्थितम्  १०२
ब्रह्माणीं ब्रह्मवत्कुर्यादीश्वरीमीश्वरोपमाम्
कुमारवश्च कौमारीं विष्णवाद्वैष्णवं तथा  १०३
हलायुधां तु वाराहवराहसदृशाननाम्
इन्द्राणीमिन्द्रवत्कुर्यात् चामुण्डीं च त्रिलोचनाम्  १०४
सुविकीर्णजटाधारीं श्यामवर्णां  चतुर्भुजाम्
कपालशूलहस्तां तु चामुण्डीं कारयेद्बुधः  १०५
चण्डेशं द्विभुजं कुर्यात् सुशान्तं चक्रधारिणम्
पुरन्दरस्ततः कुर्याद्द्विभुजं वज्रधारिणम्  १०६
श्यामवर्ण गजारूढ आवृतं चाप्सरोगणैः
अग्निं कुर्यादजारूढं सुरक्तं रक्तलोचनम्  १०७
ऊर्ध्वनाभिश्शिखाभिश्च युक्तं शक्तिधरं परम्
दण्डहस्तं यमं कुर्यान्महिषासनसंस्थितम्  १०८
करालवदनं वर्णं  ऋद्धं लोकभयङ्करम्
निर्ऋतिं खड्गहस्तं च श्यामवर्णं  सुलोचनम्  १०९
करालं राक्षसाकारं कुर्यात्सिंहासनस्थितम्
वरुणं पाशहस्तं च श्वेताङ्गं मकरासनम्  ११०
मृगासनं धूम्रवर्णं  कुर्याद्वायुध्वजायुधम्
श्यामवर्णं  गदाहस्तं हयारूढं द्विबाहुकम्  १११
रक्ताक्षरक्तवर्णं  तु कुर्याद्यक्षेश्वरं परम्
चतुर्भुजं त्रिणेत्रं च शूलपाणिं जटाधरम्  ११२
ईशानं वृषभारूढं कुर्याद्वीणाधरं परम्
द्विभुजाः पद्महस्तास्तु पद्महस्तासनस्थिताः  ११३

आदित्या द्वादश प्रोक्ता रक्तमण्डलसंयुताः
पुस्तकाभयहस्तेन सोत्तरीयौ सुरूपिणौ १९४
शुक्लवस्त्रधरोष्णीषावश्विनौ द्वौ तु कारयेत्
केशहारसमायुक्ता नानाभरणभूषितान् १९५
सुरूपा नागहस्तात्तु रोहिण्यस्सप्त उच्यते
छत्रदण्डधराश्चैव शुक्लवस्त्रसमन्विताम् १९६
पीतवर्णा सुवृद्धास्तु पितरस्त्रय उच्यते
सर्पाभरणसंयुक्ताः पुष्पमालासुशोभिताः १९७
पीताश्चाप्सरसप्रोक्ता पीनोरुजघनस्तनाः
सुमुखा दशहस्तात्तु जटावलकलधारिणः १९८
सप्त ते ऋषयः प्रोक्ता पीता पिङ्गललोचनाः
खड्गखेटकहस्तात्तु सर्वाभरणभूषितान् १९९
रक्तवर्णास्तथा वीरा अष्टौ वसव उच्यते
कपालशूलहस्तास्तु जटामकुटधारिणः १२०
रुद्र एवेषधराश्चैव रुद्र एकादशा स्मृताः
वक्ष्यतेऽथ विशेषेण वृषभस्य तु लक्षणम् १२१
चतुर्भागमुखं ज्ञेयं त्रिभागं नासिका तथा
द्व्यङ्गुलं तु भवेन्नेत्रं विस्तारं तु तदर्धतः १२२
शृङ्गमूलभवेद्भागं द्विभागं तदनन्तरम्
अक्षीवर्णान्तरं भागं शृङ्गमानं तथा भवेत् १२३
अष्टाङ्गुलभवेद्वक्त्रं विस्तारं तु चतुर्दश
कला तु कर्णमूलं स्यात् आयामं तु दाशाङ्गुलम् १२४
जङ्घा चाष्टाङ्गुला ज्ञेया तदर्धे तु चतुष्कला
षडङ्गुलं भवेद्गुल्फं तदर्धं खुरमुच्यते १२५
जङ्घात्तु पश्चिमा पश्चा कलार्धं तु कलाधिकम्
पुच्छं स्यादङ्घ्रिमूलं तु चतुरङ्गुलविस्तृतम् १२६

तन्मूला द्व्यङ्गुलं तारमग्रमेकाङ्गुलं भवेत्
वृषणो द्विकलायामौ विस्तारं स्यात्त्रियङ्गुलम्  १२७
वृषस्य लक्षणं प्रोक्तं पीठानामधुनोच्यते
त्रिगुणं लिङ्गविस्तारं पीठविस्तार उच्यते  १२८
अथवा पीठविस्तारं लिङ्गायाममथोच्यते
कृत्वा षोडशधोत्सेधं द्व्यंशकेन तु पट्टिका  १२९
तदूर्ध्वं  तु ततः कुर्यात् एकांशावृतमारुणीम्
पञ्चभागं तदूर्ध्वे तु पद्मदण्डमथोच्यते  १३०
द्व्यंशकेन तदूर्ध्वं  तु वृत्तं तत्र तु कल्पयेत्
वूर्ध्वपद्मं चतुर्भिस्तु द्वाभ्यामूर्ध्वे तु पट्टिका  १३१
तदूर्ध्वे तु ततः कुर्यात् एकांशावृतमारुणीम्
पीठोत्सेधं ततः कृत्वा नालोत्सेधं तथोत्तरे  १३२
बिलमार्गं  त्रिभागेन कुर्यात्तत्र विशेषतः
एवं तु पद्मपीठ स्यात् भद्रपीठमथोच्यते  १३३
पूर्ववत् षोडशांशस्तु कृत्वोत्सेधं विधानतः
भागेन वाममेकेन चतुर्भिर्जगती तथा  १३४
कुमुदं तु त्रिभिर्भागैर्भागेनैकेन पट्टिकाम्
कण्ठं कुर्यात्त्रिभिर्भागैरेकांशेन तु पट्टिका  १३५
द्वाभ्यां तु पट्टिका कुर्यादेकेन कृतवारुणीम्
भद्रपीठसमाख्यातं देवीपीठमथोच्यते  १३६
कृत्वोत्सेधमथाष्टांशमधश्चोर्ध्वं  तु भागतः
कृत्वा तु पट्टिकाशेषं समं वै चतुरश्रकम्  १३७
देवीपीठसमाख्यातं परिमण्डलमुच्यते
भद्रमेव हि वृत्तं स्यात् परिमण्डललक्षणम्  १३८
प्रतिमास्तु ततः पीठनालहीनमथोच्यते
प्रतिष्ठां तु ततः कुर्यादेवं कृत्वा सलक्षणम्  १३९

## इति स्वायम्भुवसूत्रे प्रतिमालक्षणपटलस्त्रिंशत्

अथ वक्ष्ये सुशैलानां लिङ्गस्थापनमुत्तमम्
प्रासादस्याग्रतः कुर्यान्मण्टपं नातिदूरतः १
दशद्वादशहस्तं वा विंशद्धस्तमथापि वा
स्तम्भैष्षोडशभिर्युक्तैर्द्वात्रिंशद्भिरथापि वा २
पादान्तं वा कपोतान्तं पङ्क्तिमानमथाच्छ्रयम्
कुर्याद्वारं चतुर्दिक्षु चतुर्भिस्तोरणैर्युतम् ३
प्लक्षौदुम्बरमश्वत्थवटाः पूर्वादितः क्रमात्
आयामं पञ्चहस्तं स्याद् विस्तारं तु तदर्धतः ४
हस्तमानं खनित्वा तु दृश्यं हस्तचतुष्टयम्
श्यामं रक्तं तथा कृष्णं धूम्रं श्वेतं च पीतकम् ५
बभ्रुः पाण्डरवर्णश्च पूर्वादिध्वजवर्णतः
हस्तमानं तु विस्तारं तदर्धं शिखरं भवेत् ६
मीनपुच्छाकृतिं कुर्याद्धस्तमानेन तस्य तु
अध्यर्ध्यं हस्तमायामं मध्ये शिखरपुच्छयोः ७
गजाजमहिषीसिंहमत्स्यकृष्णाश्वगोवृषान्
लाञ्छयित्वा यथान्यायं लोकपालानथार्चयेत् ८
भद्रमालाभिरावृत्य हस्तमानप्रलम्बकैः
अलङ्कृतवितानैश्च पुष्पमालाङ्कुरादिभिः ९
तस्योत्तरे तथा पार्श्वे कुर्या स्थापनमण्टपम्
आनयेत्तं रथारूढलिङ्गमण्टपमध्यतः १०
रथभङ्गे तथा कुर्यादीशानेन शताहुतीः
ईशाभिः कर्षणं कृत्वा दक्षिणद्वारमारभेत् ११
ब्रह्मघोषसमायुक्तं तूर्यघोषैस्समङ्गलैः
संपूज्य ++ हेमाद्यै स्थापकं स्थापितं तथा १२

ऊर्ध्वभागं विभज्याथ दश द्वादशदाष्टधा
एवमेतं विजानीयात्सर्वलिङ्गविधौ मतः १३
एवमत्र निमग्ना तु रेखा च परिकीर्तिता
भज्य षोडशधा पूजा भागाद्वयमथास्त्यजेत् १४
नवनालं तदूर्ध्वं तु मुकुलं भागमुच्यते
भागमेकं त्रिधा भज्य द्विभागं तार उच्यते १५
नालायाममधस्तीर्य कृत्वा तत्पार्श्वयो द्वयोः
तस्मादमुकुलाद्यावत् तेन सूत्रेण लम्बयत् १६
तयोस्तु सङ्गमङ्कार्यो यावत्पृष्ठान्तगोचरः
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु १७
भागमेकमधस्त्यक्त्वा दशांशं नाल उच्यते
दशांशं पुष्करं प्रोक्तं त्यक्त्वार्धं तु तुरीयकम् १८
लम्बलं संभ्रमं चापि कुर्यात्पूर्ववदेव ता
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षण शृणु १९
पूजाभागं समस्तं तु भज्य द्वादशधा समम्
ऊर्ध्वे भागे द्वयं त्यक्त्वा भागमेकमधस्त्यजेत् २०
अष्टभागं तु नालं स्यात् शेषं तु मुकुलं भवेत्
तृतीयं लक्षणं प्रोक्तं चतुर्थं लक्षण शृणु २१
पूजाभागं त्रिभागं तु कृत्वैकं तु त्रिधा भवेत्
अंशमेकमधस्त्यक्त्वा त्यक्त्वांशद्वयमूर्ध्वतः २२
शेषं तु पूर्ववत्सर्वं यथोक्तं कारयेद्बुधः
रेखाद्वयं तु नालं स्यात् मुकुलं पद्मसन्निभम् २३
दक्षिणे ब्रह्मरेखा स्यात् सव्ये वैष्णवमुच्यते
रौद्रं तु नालमित्युक्तं त्रिधैवं लक्षणं भवेत् २४
हिरण्यसूच्या तु लिखेदाचार्यो मन्त्रसंयुतः
ब्रह्मजज्ञानमन्त्रेण ब्रह्मरेखां समालिखेत् २५

अघोरास्त्रेण मन्त्रेण रुद्रलेखां समालिखेत्
मधुवाता ऋता एति मधना तर्पयेत्ततः २६
घृतं मिमिक्षे मन्त्रेण तर्पयेच्च घृतेन तु
कृशा सकृद्धस्ममृद्धि तस्योद्वर्त्य पुनः पुनः २७
प्रक्षालय पञ्चगव्येन पवमानमुदीरयेत्
लिङ्गं रथ स्थितं कृत्वा प्रवेश्याथ जलाशयम् २८
चतुर्गात्रसमायुक्तं वितानध्वजशोभितम्
व्योमव्यापिं समुच्चार्य ततो लिङ्गं स्पृशेद्गुरुः २९
त्रिरात्रं वा द्विरात्रं वा पञ्चरात्रमथापि वा
जलाधिवासितं लिङ्गमानयेच्च रथस्थितम् ३०
मण्टपस्योत्तरे भागे शुद्धिं कृत्वा तु मन्त्रतः
आवेष्ट्याहतवस्त्राभ्यां दर्भैरावेष्टयेत्ततः ३१
रक्तवस्त्रेण संवेष्ट्य लिङ्गं सर्वं समस्तकम्
कृत्वा रथस्थितं लिङ्गं नयेन्मण्टपमध्यतः ३२
अष्टद्रोणे शालीनां स्थण्डिलं कारयेत्ततः
तदूर्ध्वेऽष्टदलं पद्मं तण्डुलेन तु कारयेत् ३३
नवशक्तिसमायुक्तमर्चयेद्गन्धपुष्पकैः
शय्यं कल्प्य यथा न्यायमण्डजाद्यैरनुक्रमात् ३४
प्राङ्मस्तकमधः सूत्रं शयीत शयने तथा
वस्त्रेणाच्छाद्य तं लिङ्गं दर्भैः पुष्पैस्तथोपरि ३५
साधयेत्तु तथा पीठलिङ्गवल्लिङ्गमूलतः
गन्धादिकं ततो दत्वा सद्यादिब्रह्मभिस्तथा ३६
अर्घ्यं दत्वा यथान्यायं ईशानेन विशेषतः
कुर्युरध्ययनं दिक्षु चत्वारो वेदपारगाः ३७
ऋग्वेदं दिशि पूर्वायां यजुर्वेदं तु पश्चिमे
सौम्यायां साम ++ अथर्वेदं तु दक्षिणे ३८

श्रीसूक्तं पुरुषसूक्तं च रात्रिसूक्तं वृषा कपिम्
पवमानस्य वानीयो ऋग्वेदाध्ययनो भवेत्  ३९
शमापृच्च्युमाहानम्यं रुद्रं होतारमेव च
शान्तिद्वयं पा +++ रुणं नारायणं तथा  ४०
यजुषाध्ययनं कुर्यात् त्वरितं रुद्रमुच्यते
भरुण्डानि च सामानि ज्येष्ठसाम रथन्तरम्  ४१
देवव्रतं पुरुषव्रतमावो राजानमेव च
बृहच्चन्द्रं तथा सोमं सामध्ययनमिष्यते  ४२
अथर्वशिरसं चैव नीलरुद्रं तथैव च
विरूपाक्षं स्कन्दसूक्तं अथर्वाध्ययनं भवेत्  ४३
प्रत्यग्रे स्थण्डिलं कृत्वा शालिभिर्हस्तमानतः
पञ्चगव्येन संपूर्णं कलशं तत्र विन्यसेत्  ४४
विधायिकेन वस्त्रेण ध्यात्वा देवं त्रियम्बकम्
अकालमूलकलशा आढकद्वयपूरिताः  ४५
विधानवस्त्रकूर्चाढ्या हेमसूत्रसमायुता
अष्टविद्येश्वरे युक्तान् स्थापयेदष्टदिक्ष्वपि  ४६
गोमूत्रं गोमयं क्षीरं दधिसर्पिकुशोदकम्
गन्धोदकं मधुं चैव कलशेषु विनिक्षिपेत्  ४७
हृदयादिरथोभ्यर्च्य मन्त्री गन्धादिभिस्तथा
द्वारपार्श्वे तथा चाष्टौ कलशान् विन्यसेत् क्रमात्  ४८
भद्रं च विजयं चैव विजृम्भो लोहितस्तथा
पूर्वादौ स्थाप्य संपूज्य तोरणे कलशे तथा  ४९
ततो होमं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा
द्वात्रिंशद्वा चतुर्विंशत् षोडशाष्टावथापि वा  ५०
कुर्यादयतनान्यत्र ततो होमं समाचरेत्
पलाशौदुम्बराश्वत्थमयूरं च दिशासु च  ५१

शमीखदिरश्रीवृक्ष न्यग्रोधान् कोणदिक्षु च
द्वादशाङ्गुलमायाममेकैकं तु शतत्रयम् ५२
दिक्षु सद्यादिभिर्मन्त्रैर्विदिक्षु हृदयादिभिः
हुत्वा शतान्ते लिङ्गस्य दर्भैर्मूलादिसंस्पृशेत् ५३
ईशाने शिरसि स्थाने लिङ्गस्य जुहुयाद्गुरुः
आज्यं हृदयमन्त्रेण शिरसा च चरूस्तथा ५४
लाजांस्तु शिखया प्रोक्ता कवचेन यवास्तथा
अस्त्रेण सर्षपांश्चैव नेत्रेण तु तिलस्तथा ५५
स्पृष्ट्वा लिङ्गस्य मूर्धानां प्रत्येकं तु शताहुतिः
द्रव्यान्ते व्याहृतिहुत्वा स्रुचा पूर्णाहुतिर्हृदा ५६
आज्यं चरू मधुक्षीरं जुहुयाच्च तथा पुनः
पुण्याहं वाचयित्वाथ दद्यादर्घ्यं विशेषतः ५७
एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत्
गुरुपूजां ततः कुर्यात् मूर्तिपास्तु विशेषतः ५८
ब्राह्मणान् भोजयेत्तत्र यथाशक्त्या विधानतः
तपस्वीं पूजयेद्भक्त्या वस्त्रहेमाशनादिभिः ५९
अथ प्रभाते विमले रत्नन्यासं समारभेत्
श्वभृङ्गर्भगृहे कार्यं सूत्रेण सुषिरं तथा ६०
स्थाप्य ब्रह्मशिलां तत्र न निम्नं नोन्नतं तथा
गर्भाक्षयां चतुर्भागं तुयश्चात्सावटानिला ६१
प्रकाल्य पञ्चमृद्भिस्तु गोमूत्रेणाम्भसा ततः
हृदयेन तु मन्त्रेण चन्दनेन तु लेपयेत् ६२
ततो रत्नानि धातुं च बीजान्योषधयस्तथा
विन्यसेच्च क्रमात्तत्र नवबीजमनुस्मरन् ६३
वज्रं मरतकं नीलं पुष्पं स्फटिकशङ्खजम्
वैडूर्यं मौक्तिकं चापि शक्रादिक्रमशो न्यसेत् ६४

कालं शिलाजनं श्यामकरासीसंक्षिकं तथा
दरोदरा गैरिकां च पूर्वादिक्रमशो न्यसेत् ६५
गोधूमतिलनीवारसर्षपान् दिक्षु विन्यसेत्
विदिक्षु यवमुद्गाश्च श्यामाका व्रीहयस्तथा ६६
भारद्वयागरूश्चैव मूलकौ शिर एव च
विष्णुक्रान्ति सहायैव लक्ष्मणा च क्रमान्न्यसेत् ६७
वृषभ हेमसंभूतं कूर्मं वा मध्यमे न्यसेत्
प्रतिलिङ्गं तथा स्थाप्य क्षीरदारुमयं शुभम् ६८
ज्ञात्वारुजुस्थितं तत्र किञ्चिदीशानमाश्रितः
व्यपोह्य प्रतिलिङ्गं तु ततस्थापनमारभेत् ६९
शङ्खभेरीनिनादैश्च वेदमङ्गलवाचकैः
पुण्याहं जयशब्दैश्च नृत्तगेयसमाकुलैः ७०
आचार्यै मूर्तिपैस्सार्धं सहायैर्बलवत्तरैः
सद्येनोत्पाटयेर्लिङ्गं रथं वामेन शोधयेत् ७१
अघोरेणावकुण्ठ्याथ वक्त्रेणाराध्य यत्नतः
ईशानेन ततो दद्यात् अर्घ्यमष्टाङ्गमुत्तमम् ७२
प्रदक्षिणं ततः कृत्वा मूर्तिपैर्गुरुणा सह
पुत्रभ्रातृकलत्रं च यजमानो व्रजेदनु ७३
विश्राम्य द्वारदेशे तु दद्यादर्घ्यं विधानतः
प्रवेशयेत्ततो लिङ्गं गर्भगेहं समाकुलम् ७४
पायसेनानुलिप्याथ साज्यं ब्रह्मशिलावटम्
रथं सम्यक् निवेश्याथ लिङ्गावटसमं यथा ५
पञ्चमेन ततस्थाप्य गुरुर्वै मूर्तिपैस्सह
विन्यसेत्तत्र प्रासादं लिङ्गमध्ये समाहितः ६
सुस्थितं दुस्थितं वापि स्थापितं न तु पालयेत्
चलिते तु महादोषो राज्ञां राष्ट्रस्य वै भवेत् ७

पीड्येशान्यां स्थितं लिङ्गं सर्ववृद्धिकरं शुभम्
यत्किञ्चिदन्यदिक्पीड्यं स्थितं लिङ्गमशोभनम् ८
वालुकाभिस्समापूर्या वादिमातृकया न्यसेत्
विवाय दक्षिणं हस्तं गुरुर्लिङ्गस्य मूर्धनि ९
व्योमव्यापिं समुच्चार्य कलाङ्गानि न्यसेत्तदा
संकल्प्यासनमाराध्य बाह्यस्थापनमारभेत् १०
पूर्वोक्तैरेव मन्त्रस्तु मध्ये तारभिषिञ्चयेत्
स्वैर्मन्त्रैरेव कलशैः गुरुस्नापनमारभेत् ११
ततो विधिवदाराध्य चण्डयागं समारभेत्
इति स्वायम्भुवसूत्रे लिङ्गस्थापनपटल एकत्रिंशत्

अथ देवं सुरेशानमपृच्छ स्वयथार्थतः
तैर्लिङ्गैर्देशिके युक्तो को वा स्थापक उच्यते १
एवमुक्तो हरप्राह प्रस्फुरच्चन्द्रशेखरः
शैवं पाशुपतं सोमं लाकुटं चतुर्विधम् २
तंत्र भेदास्समाख्यातास्सङ्करं न समारभेत्
एकेन दीक्षितोऽन्येन कुर्या स्थापनसत्क्रिया ३
स्थापनार्चान्यतन्त्रेण तन्त्रसंकर उच्यते
तन्त्रसंकरदोषेण राज्ञा राष्ट्रा विनश्यति ४
तस्मात् सर्वप्रयत्नेन न कुर्यात्तन्त्रसंकरम्
अष्टाविंशतिभेदेन विभिन्नं देवमुच्यते ५
कामिकं योगजं चिन्त्यं कारणं च जितं तथा
दीप्तं सूक्ष्मं सहस्त्रं च अंशुमान् सुप्रभेदतः ६
नारसिंहं च निश्वासं स्वायम्भुवमतः परम्
आग्नेयं वीरभद्रं च रौरवं मकुटं तथा ७
विजयश्चन्द्रहासञ्च मुखबिम्बं तथैव च

प्रोद्गीतं सलिलं चापि देव्यां मतमतः परम् ८
तळोत्तरं वातुळं च सिद्धसंज्ञानसंज्ञकम्
शर्वानगीतं च परमं किन्नरं पारमेश्वरम् ९
शैवभेदास्समाख्याता अष्टाविंशतिसंज्ञकाः
सत्कारा ह्येषु भेदेषु न दोषाय प्रकल्पयेत् १०
एकस्यैव तु भेदत्वान्न भवेत्तन्त्रसंकरः
शैवतन्त्रार्हक प्रोक्ता आदिशैवा इति स्मृताः ११
कौशिकः काश्यपश्चैव भरद्वाजोऽत्रिरेव च
पराशरश्च पञ्चैते पञ्चवक्त्रेषु दीक्षिताः १२
कौशिकश्शिवमूर्धा तु दीक्षितश्शिवगोचरः
शिखागोचर इत्युक्तः काश्यपं त्वीश्वरेण तु १३
ईशानेन भरद्वाज दीक्षितो ज्योतिशेखरः
सावित्रीगोचरात्रिस्तु ब्रह्ममूर्द्ध्या तु दीक्षितः १४
पराशरे व्योमसंज्ञा ऊर्ध्ववक्त्रेण देशिकः
शिवश्शिखामथाज्योतिसावित्री व्योमसंज्ञिकाः १५
एते तु गोचरा प्रोक्ता गोचरं कुलमुच्यते
कुलेष्वेतेषु संज्ञातो आदिशैवा इति स्मृताः १६
आदिशैवा इति प्रोक्तास्सशिवब्राह्मणो गुरुः
देशिकस्थापकश्चेति परिर्यायेण चोदितः १७
आदावेव हि शैवत्वादादिशैव इति स्मृताः
शिवेन दीक्षितत्वा च शिवब्राह्मण उच्यते १८
सर्वेषां तु गुरुत्वा च गुरुरित्युच्यते बुधैः
देश आदिश्यते एन स देशिक इति स्मृतः १९
लिङ्गस्थापकयोद्ध्यात्वा स्थापको नाम कीर्तितः
शिखी मुण्डी जटी चैव भस्मोद्धूलितविग्रहः २०
दीक्षितः कर्मकुशलः सर्वागमविशारदः

अप्रमत्तो भवेन्नित्यं देवाग्निगुरुपूजनम् २१
ईदृग्लक्षणसंयुक्तमचोर्यस्समुदाहृतः
काणश्च मत्सरो धूर्णो दीर्घाङ्गो बधिरशठः २२
शिपिविष्टो दुराचारो दुष्कर्मकुनखी कृशः
खञ्जश्च श्यामदन्तश्च वामनं कृपनो जळः २३
सरोगो विकटाङ्गश्च बालो वृद्धस्तथैव च
एतैस्तु लक्षणैर्युक्ता स्थापको वर्जितो मताः २४
इति स्वायम्भुसूत्रे स्थापकः पटल द्वात्रिंशत्

अथ वक्ष्यामि ते ब्रह्मन् बलस्थापनमुत्तमम्
आयुरारोग्यदं चैव पुत्रश्रीकीर्तिवर्धनम् १
प्रथमं रत्नविन्यासं द्वितीयं नेत्रमोक्षणम्
तृतीयं प्रतिमाशुद्धिः चतुर्थं ज्ञानपर्यणम् २
जलाधिवासनं विद्यात् पञ्चमं तु प्रकल्पयेत्
षष्टे मण्टपसंस्कारं सप्तमे शयनक्रिया ३
अष्टमे होमकार्यं तु नवमे दक्षिणा तथा
दशमे स्थापने कार्या क्रममेषां प्रकीर्तितम् ४
रत्नन्यासं प्रवक्ष्यामि यथावदनुपूर्वशः
विचित्रे मण्टपे रम्ये वितानोपरि शोभिते ५
मङ्गलाङ्कुरसंयुक्ते पुष्पमालसमायुते
तत्र पीठं समास्थाय कृत्वा चैव दिशार्चनम् ६
पदानि नवकृत्वा तु रत्नानि विधिवन्न्यसेत्
ऐन्द्रे मरतकं प्रोक्तं वैडूर्यं वह्निगोचरे ७
इन्द्रनीलं तु याम्यायां मुक्ता नैर्ऋतिगोचरे
वारुणे स्फटिकं प्रोक्तं पद्मरागं तु वायवे ८
वज्रं तु सौम्यदिग्भागे ईशान्यां तु प्रवालकम्

माणिक्यं मध्यमे चैव न्यसेदेवं क्रमेण तु ९
नवबीजसमायुक्तं शिव ध्यानपरायणाः
ततो देवं समायोज्य सुस्निग्धं कारयेत्ततः १०
नवमं मोक्षणं कुर्यान्मोक्षद्वययुते दिने
प्रच्छन्नपटसंयुक्तो मण्टपे च सुसंस्कृते ११
पूर्वाभिमुखमास्थाप्य प्रतिमां स्थण्डिलोपरि
लोकपालाधिदैवत्यं कलशैरपि संवृतम् १२
कृत्वा दिनार्चनां तत्र गन्धपुष्पादिभिस्तथा
हेमसूचीं प्रभाराभ्यामाचार्या शिल्पिभिस्सह १३
लक्ष्मरेखां पुरा कृत्वा ततो वैष्णवमण्डलम्
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रसमायुतम् १४
सुवर्णदूर्व्यया विद्या मध्वाज्यां तु तर्पयेत्
तर्जन्यनामिकामध्ये सूर्यसोमानि देवता १५
हिरण्यनखसंप्रोक्तै न्यसेत्तद्बीजसंयुतम्
ताम्रपात्रे मधुप्रस्थे सहिरण्ये प्रदर्शयेत् १६
मधुवातादिमन्त्रेण मधुना तर्पयेत्ततः
घृतं मिमिक्षे मन्त्रेण कांस्यपात्रे घृतं तथा १७
गौर्धेनुभव्य मन्त्रेण सवस्त्राणां प्रदर्शयेत्
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान् वेदपारगान् १८
वेदादद्भिस्तु ते प्रोक्ष्य साक्षतं सकुशोदकम्
प्रच्छन्नपटमावर्ज्य जनान् सर्वान् प्रदर्शयेत् १९
जयशब्दादिसंयुक्तं तूर्यघोषैर्महारवैः
शुद्धिं कृत्वा महादेवं निर्मलं तु यथा तथा २०
पवमानं समुच्चार्य पञ्चगव्याभिषेचनम्
गत्वा नद्यास्तटाके वा देवखाते मनोहरे २१
तोयपूर्णे तथा पात्रे संपूज्य वरुणं पुनः

कृत्वा शुद्धोदकेनाथ शुद्धैरूक्षैरिति ब्रुवन्  २२
स्नाप्य देवान् ततो विद्वान् पुरायाहं तत्र कारयेत्
गीतवाद्यसमायुक्तं तूर्यवाद्यादिसंयुतम्  २३
ग्रामं प्रदक्षिणी कुर्यात् सर्वालङ्कारसंयुतम्
यस्तत्र नर्तनं कुर्याद्भक्तियुक्तस्सदा नरः  २४
अश्वमेधसहस्रस्य फलमाप्नोति मानवः
एवं प्रदक्षिणं कृत्वा जले चैवाधिवासयेत्  २५
वस्त्रयुग्मपरिच्छन्नं दर्भैस्तु परिवेष्टितम्
प्रतिमां कराटमग्ने तु जले चैवाधिवासयेत्  २६
चतुष्पादसमायुक्तं वितानध्वजसंयुतः
एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा  २७
ततो मराटपसंस्कारं कुर्याद्विभवविस्तरम्
दशहस्तस्तु विस्तारं दर्पणोदरसन्निभम्  २८
षोडशस्तम्भसंयुक्तं मङ्गलाङ्कुरशोभितम्
अष्टदिग्ध्वजसंयुक्तं वितानोपरि शोभितम्  २९
मराटपं तु त्रिधा भज्य भागमेकं तु वेदिका
रत्निमात्रसमुत्सेधं मुष्टिमात्रमथापि वा  ३०
अष्टदिक्षु च कुराडानि कारयेत्स्वप्रमाणतः
चतुरश्रं तु पूर्वायां आग्नेयां तु भगाकृतिः  ३१
अर्धचन्द्रं तु याम्यायां नैर्ऋत्यां सप्तकोणके
वारुणं वर्तुलं कुराडं वायव्यां पञ्चकोणके  ३२
त्रिकोणमुत्तरे चैवामीशान्यामष्टकोणकम्
ईशान्या शक्रयोर्मध्ये कुराडं वृत्तं तु कल्पयेत्  ३३
अरत्निमात्रं विस्तारं तावन् खातं त्रिमेखलाम्
चतुस्त्रिद्व्यङ्गुलोत्सेधं विस्तारं तावदेव हि  ३४
गोमयालेपनं कृत्वा शोषणप्लावनं तथा

शयनं कल्पयेद्विद्वान् वेदिकोपरि शालिभिः ३५
अर्धद्रोणसमायुक्तं तदर्धैस्तण्डुलैस्तथा
अण्डजैर्म्मण्डजैर्वापि रोमजैश्चर्मजैरपि ३६
नवशक्त्यादिभिर्युक्तं गन्धाद्यैः पूजयेत्पुनः
ततो देवं समुच्चार्य शुद्धिं कृत्वा तु पूर्ववत् ३७
शयने कल्पयेद्विद्वान् प्राक्शिरस्कं सपीठकम्
द्विगुणीकृत्य वस्त्रेण परिधाय सवस्त्रकम् ३८
अभितः कलशानष्टौ त्रिसूत्रे परिवेष्टितान्
हैमशस्त्रसमायुक्तान् सकूर्चान् सापिधानकम् ३९
द्रोणार्धवारिसंपूर्णान् वस्त्रयुग्मसमावृतम्
अष्टविद्येश्वरैर्युक्तान् गन्धाद्यैः पूजयेत्पुनः ४०
ईशानशक्रयोर्मध्ये शिवाख्यं कलशं न्यसेत्
उमाख्यं वर्धनीं चापि स्थापयेत्तस्य वामतः ४१
उमाख्यात्पञ्चरत्नाम्बु शिवाख्यं हेमसंयुतम्
आवाहनादिकं कृत्वाराध्य गन्धादिभिस्तथा ४२
अर्घ्यं दत्वा यथान्यायं ततो होमं समारभेत्
अग्न्याधानमुपस्थानं परिस्तरणमेव च ४३
पात्राणां साधनं चैव प्रोक्षणी प्रोक्षणं तथा
कूर्चाधानं प्रणीतां च घृतसंस्कारमेव च ४४
स्रुक्साधनपरीधानं परिषेकं समारभेत्
इध्मप्रवेशनं चापि तत्तन्मन्त्रेण देशिकः ४५
आघारमाज्यभागं तु व्याहृत्यग्निमुखक्रमम्
समिधाज्यचरून् लाजान् सर्षपांश्च यवान् तिलान् ४६
होमद्रव्याणि सप्तैते कल्प्यन्ते विधिपूर्वकम्
अश्वत्थं चैव पूर्वायां आग्नेय्यां वह्निरुच्यते ४७
उदुम्बरं तु याम्यायां खादिरं नैर्ऋते तथा

प्लक्षं तु वारुणे भागे वायव्यां बिल्वमेव च ४८
न्यग्रोधं चैव सौम्यायां ईशान्यां तु पलाशकम्
पालाशं तु प्रधानं स्यात् सर्वेषामिध्ममुच्यते ४९
सहस्त्रं वा तदर्धं वा तदर्धार्धमथापि वा
अष्टोत्तरशतं वापि प्रत्येकं जुहुयात् क्रमात् ५०
सद्योजातं तु पूर्वायामाग्नेयां हृदयं तथा
वामदेवं तु याम्यायां नैर्ऋत्यं शिव उच्यते ५१
अघोरं वारुणे भागे वायव्यां तु शिवं तथा
सौम्ये तत्पुरुषं प्रोक्तं ईशान्यां नेत्रमुच्यते ५२
ईशानं तु प्रधानं स्यात् मन्त्रमेवं प्रकल्पयेत्
भवरुद्रस्तु पूर्वायां शर्वमाग्नेयमेव च ५३
याम्ये पशुपतिं चैव उग्रं नैर्ऋतिगोचरे
रुद्रं तु वारुणे भागे भीमो वै वायुगोचरे ५४
महादेवं तु सौम्यायामीशान्यामीशमुच्यते
प्रधानं तु शिवः प्रोक्तं तत्तद्ध्यानपरायणः ५५
स्वाहान्तेनैव मन्त्रेण जुहुयाच्च विधानतः
आज्यादिभिस्तथा षड्भिर्जुहुयाद्धृदयादिभिः ५६
द्रव्यान्ते चैव मन्त्रेण व्याहृतीर्जुहुयात्पुनः
प्रतिद्रव्यं कुशै स्पृष्ट्वा घृतेनैवाहुतिर्भवेत् ५७
त्रियम्बकेति मन्त्रेण समिधाज्यमुखाहुतिः
घृतं मिमिक्षे घृतस्येति अन्नप्राणं चरेस्तथा ५८
विरूपाक्षद्वयं चापि लाजसर्षपयोस्तथा
आवो राजानमन्त्रेण यवहोमस्य कीर्तितः ५९
यत्ते वयं तिलस्यापि प्रत्येकं जुहुयात्ततः
वेदादिश्च ततो हुत्वा प्रत्येकं तु शताहुतीः ६०
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरेत्

स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ६१
अथ ब्रह्मषडङ्गैस्तु कुर्यादाच्याहुतिः पुनः
प्रभाते दक्षिणां कुर्यात् यथाशास्त्रार्थ चोदितः ६२
आचार्यं पूजयेत्पूर्वं वस्त्रहेमाङ्गुलीयकैः
अधमं पञ्चनिष्कं तु द्विगुणं मध्यमं भवेत् ६३
उत्तमं त्रिगुणं प्रोक्तमाचार्यस्य तु दक्षिणा
दशभागैकभागं तु मूर्तिधारकदक्षिणा ६४
द्विगुणं वास्तुहोमस्य दैवज्ञस्य तथैव तु
अर्धं वै मूर्तिधारस्य दक्षिणाध्ययनस्य तु ६५
अस्त्रजप्य यथाशक्त्या शास्त्रज्ञानं च योगिनाम्
भक्तानां परिवाराणां यथाशक्त्या तु दक्षिणा ६६
एवमुक्तप्रमाणेन कृत्वा कालं परीक्षयेत्
मुहूर्तान्नाडीकां पूर्वे सर्ववाद्यसमन्विते ६७
उत्थाप्य शयनाद्देवमाचार्यो मूर्तिपैस्सह
जयशब्दसमायुक्तस्नानं वेद्युपरि न्यसेत् ६८
स्मृतेश्शिरोर्पणं कुर्याद्धेमदूर्वाङ्कुराक्षतैः
सघृतैस्सद्यमन्त्रेण मूर्ध्नि मध्ये च पादयोः ६९
शुद्धोदकेन संस्नाप्य षडङ्गं च ततो न्यसेत्
ततो मुकुलमुद्रां च पद्ममुद्रां च दर्शयेत् ७०
सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्न्यसेत्
ध्यात्वा तत्प्रतिमाकारं सकलीकृतविग्रहः ७१
प्रासादबीजप्रतिमान्न्यसेत्प्रियतमानसः
जयादि प्रतिपद्याथ स्विष्टान्तं कारयेत्तथा ७२
अग्निकार्यविधानोक्तिं ततस्सर्व समाचरेत्
ततः स्नानममन्त्रेण कलशानभिषेचयेत् ७३
शिवकुम्भं तु सद्यादि पञ्चवक्त्रेण सेचयेत्

उमागायत्री मन्त्रेण वर्धन्यस्थापयेत्ततः ७४
अथार्चनविधिं सम्यक् कुर्यात्सर्वं यथोदितम्
सप्ताहमुत्सवं कुर्यात् पश्चात्स्नपनमारभेत् ७५
इति स्वायम्भुसूत्रे स्थापनपटल त्रयस्त्रिंशत्

अथ गौरीप्रतिष्ठां तु प्रवक्ष्यामि विशेषतः
त्रिविधं तु समाख्यातं वीरं योगं क्रमं तथा १
केवलं यत्र गौर्यास्तु स्थापनं वीरमुच्यते
पूर्वं देवं प्रतिष्ठाप्य गौर्यास्तु स्थापनं ततः २
ततो विवाहभेदेन योगं तत्परिकीर्तितम्
उमाशङ्करयोरैक्यस्थापनक्रममुच्यते ३
लोहजं योगमाख्यातं वीरं वै मृण्मयं स्मृतम्
लोहजेन तथात्सश्चैत्सर्वथा क्रममुच्यते ४
रत्नन्यासं न कर्तव्यं लोहाच्च स्थापनक्रमे
जलाधिवासनं नोक्तं मृण्मये तु कदाचन ५
समानमन्यत्सर्वेषां यथायुक्ति विधीयते
चित्रशास्त्रविधानेन उमाया प्रतिमा करोत् ६
ग्रामे चतुर्भुजं कुर्यान्नगरे षड्भुजं तथा
गृहान्तरे द्वयं कुर्यात् पर्वताग्रे तु षोडश ७
त्रिणेत्रं श्यामवर्णं तु सर्वलक्षणसंयुताम्
यथोक्तं प्रतिमां कृत्वा ततो नयनमोक्षणम् ८
कारयेद्विधिवत्सम्यक् मण्टपे संस्कृते शुभे
स्थण्डिलं तत्र कृत्वा तु शालिभिर्विमलैस्तथा ९
तण्डुलैः शोभितं कुर्यादष्टपत्रं सुकर्णिकम्
ततो मध्ये न्यसेद्देवीं शुद्धिं कृत्वा विशेषतः १०
ततोऽहतेन महता पटेनाच्छाद्य सर्वतः

पुण्याहं जयशब्देन स्तोत्रमङ्गलवाचकैः ११
सुस्वर्णसूच्या तत्खात्वा मधुनाप्लावितेन तु
गौरीबीजमनुस्मृत्य मण्डलानि क्रमाल्लिखेत् १२
कृष्णमङ्गलमालिख्य ततो वै दृष्टिमङ्गलम्
ज्योतिर्मण्डलमालिख्य मधुना प्लावयेदथ १३
घृतेन च तथा प्लाव्य नेत्रबीजान् तथा न्यसेत्
हिरण्येन च युक्ताभ्यामङ्गुलीभ्यां न्यसेत्ततः १४
चतुरीयं तु तर्जन्यां सान्त वै मध्यमाङ्गुलौ
तर्जन्यां दक्षिणं नेत्रं मध्यमाङ्गुलवामतः १५
एवं विन्यस्य बीजे तु मधुमन्त्रैर्घृतं तथा
क्षीरे सवत्सधेनौ च नेत्रमन्त्रेण दर्शयेत् १६
प्रच्छन्नपटमावर्ज्य स्नानवेद्यां न्यसेत्ततः
शुद्धिं कृत्वा ततो देवीं पञ्चगव्यकुशाम्भसा १७
ग्रामं प्रदक्षिणं कृत्वा तूर्यशङ्खादिभिर्ध्वनैः
ततो जलाशयं प्राप्य तीरे समतले पुनः १८
संज्ञाप्य देवीं तत्रस्थां कूर्चां शिरसि धारयेत्
आपादलम्बितं सूत्रं कूर्चेन सह वेष्टयेत् १९
मूर्धादिपादपर्यन्तं सहवस्त्रेण वेष्टयेत्
चतुर्गात्रसमायुक्तं वितानोपरिशोभिते २०
जलमध्ये न्यसेद्देवीं हृदयेन विचक्षणः
परितः कलशानष्टौ लोकपालाधिदैवतम् २१
सकूर्चसापिधानं च ससूत्रान् साधिदैवतत्
विन्यसेद्रक्षणार्थं तु स्वनाम्ना तु यथाक्रमम् २२
पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा
प्रासादं पुरतः कृत्वा मण्टपं विधिपूर्वकम् २३
वेदिकां च ततः कृत्वा कुर्यादायतनानि तु

योन्याकाराणि कुण्डानि चतुर्दिक्ष्वष्टदिक्षु वा २४
मेखलत्रयसंयुक्तं कुर्यादालेपनादिकम्
जलाधिवासितां देवीमानीय स्नानमण्टपे २५
व्यपोह्य वस्त्रकूर्चं च स्नापयेच्छुद्धवारिणा
श्वोभूते पूर्वरात्रौ तु कर्तव्यमधिवासनम् २६
पुण्याहं तत्र कुर्वीत कृत्वा घृतशिरोर्पणम्
हैमकौतुकसूत्रं तु बन्धयेद्दक्षिणे करे २७
गौरीगायत्रिमन्त्रेण सर्वालङ्कारसंयुताम्
सदशाहतवस्त्रेण देवीमावेष्टयेत्ततः २८
शालिभिस्स्थण्डिलं कृत्वा वेदिमध्ये विधानतः
तण्डुलैश्शोभितं कृत्वा गन्धाद्यैश्च दिशार्चयेत् २९
शयनं तत्र कर्तव्यमण्डजाद्यैर्विशेषतः
हृदयेन तथाभ्युक्ष्य नवबीजं न्यसेत्पुनः ३०
शयीत शयने देवी शिरोमन्त्रेण संस्मरेत्
प्राक्शिरस्कां ततः कृत्वा नववस्त्रेण वेष्टयेत् ३१
अकालमूलकलशान् त्रिणेत्रं परिवेष्टितान्
सकूर्चान् हेमसंयुक्तान् प्रत्येकं वस्त्रवेष्टितान् ३२
द्रोणार्धतोयसंपूर्णा विन्यसे स्थण्डिलोपरि
वामीं पूर्वे तु विन्यस्य ज्येष्ठीमाग्नेयगोचरे ३३
रौद्री तु दक्षिणे भागे काली नैर्ॠतिगोचरे
कलपूर्वां विकलिनीं वारुणे विन्यसे घटे ३४
बलिविकलिनीं देवीं वायव्ये विन्यसे घटे
बलप्रमथिनीं देवी उत्तरे विन्यसेत्ततः ३५
सर्वभूतदमनन्ये तु ईशान्या विन्यसेत्ततः
मध्ये मनोन्मनीं देवीं विन्यसेद्दक्षिणाश्रयः ३६
पञ्चरत्नेन संयुक्तं विन्यसेत्तु मनोन्मनीम्

वस्त्रयुग्मसमायुक्तं देवीबीजमनुस्मरन्  ३७
अर्चयित्वा तु गन्धाद्यैस्तत्तन्मन्त्रेण देशिकः
ततो होमं प्रकुर्वीत चतुर्दिक्ष्वष्टदिक्षु वा  ३८
पालाशोदुम्बराश्वत्थवदा पूर्वोदितः क्रमात्
प्लक्षबिल्वार्कमायूरमाग्नेयादिक्रमान्न्यसेत्  ३९
गौरीगायत्रीमन्त्रेण प्रत्येकं तु शताहुतीः
आज्यं तु हृदयेनाथ शिरसा चरुरुच्यते  ४०
शिखामन्त्रेण लाजान् वै कवचेनाथ सर्षपान्
अस्त्रेण तु यवांश्चाथ नेत्रेण तु तिलाहुतिम्  ४१
प्रत्येकं तु शतं हुत्वा व्याहृतीर्जुहुयात्ततः
ततो मुहूर्तमन्वीक्ष्य प्रज्वाल्याग्निं विशेषतः  ४२
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
मूर्तिपान् पूजयेत्तत्र यथाविधि विशेषतः  ४३
सुलग्ने सुमुहूर्ते च नक्षत्रकरणान्विते
शिवादिमूर्तिसंयुक्तं सवस्त्रान् सहिरण्यकान्  ४४
गन्धादिभिस्समभ्यर्च्य ततो होम समारभेत्
कुण्डे वा स्थण्डिले वापि चतुर्दिक्षु च होमयेत्  ४५
पालाशोदुम्बराश्वत्थप्लक्षवृक्षसमुद्भवैः
समिद्भिस्सद्यमन्त्रेण जुहुयाच्च शताहुतीः  ४६
स्पर्शहोमं घृतेनाथ प्रत्येकं तु शताहुतीः
आवो राजानमन्त्रेण पत्रं स्पृष्ट्वा तु मध्यतः  ४७
इदं विष्णिवति मन्त्रेण स्पृष्ट्वा दक्षिणपत्रकम्
ब्रह्मजज्ञानमन्त्रेण पत्रं स्पृष्ट्वा तु चोत्तरम्  ४८
फलकां तु ततः कृत्वा गौरीगायत्रिमन्त्रतः
अयं कुमारमन्त्रेण कुम्भं स्पृष्ट्वा तु होमयेत्  ४९
दण्डाग्रं त्वथ संस्पृष्ट्वा गणानां त्वेति मन्त्रतः

उदुत्येन तु मन्त्रेण स्पृष्ट्वा दण्डस्य मध्यमः ५०
दण्डमूलं ततः स्पृष्ट्वा चण्डमन्त्रेण होमयेत्
पादमूल तत स्पृष्ट्वा पातालानां स्वमन्त्रतः ५१
चरुणा च तथा लाजैस्तण्डुलैश्च यवैस्तथा
प्रभाते सुमुहूर्तेऽपि स्नानवेद्यं तु विन्यसेत् ५२
आद्यक्षराणि सर्वेषां स्वस्थाने विन्यसेत्ततः
भवादि सादितै चापि कलशै स्नापितै ततः ५३
नैवेद्यं च ततो हुत्वा कुर्याद्ग्रामप्रदक्षिणम्
एवं यः कुरुते शूलविधिपूर्वेण स्थापितम् ५४
भुक्त्वा तु विपुलान् भोगान् रुद्रलोके महीयते
इति स्वायम्भुसूत्रे शूलस्थापनपटल पञ्चत्रिंशत्

## परिवारस्थापन

अथाष्टपरिवाराणां नाम वर्णालयं तथा
मन्त्राणि स्थापनं चैव तत्रार्थं कथ्यते शृणु १
वृषभं पूर्वतः प्रोक्तं आग्नेय्यां तु महानसम्
याम्ये मातृगणाश्चैव नैर्ऋत्यां तु विनायकः २
सुब्रह्मण्यस्तु वारुण्यां ज्येष्ठायां वायुगोचरे
दुर्गा तु सौम्यदिग्भागे ईशान्यां भास्करं तथा ३
विमानमेषां कर्तव्यं गर्भविस्तारमानतः
पूजाभागसमायुक्तं तेषां लक्षणमुच्यते ४
द्वारमानेन वा कुर्याद्गर्भमानेन वा पुनः
वृषभस्यालयं कुर्याच्चतुर्द्वारसमायुतान् ५
आग्नेयां गोपुराकारं मातृणां तु तथैव तु
हस्तिपृष्ठं गणेशस्य नन्द्यावर्तं गुहस्य तु ६
ज्येष्ठायां चतुरश्रं तु दुगायां तु गुहस्यवत्

वेसरं भास्करस्योक्तं विमानाकृतिरुच्यते ७
पुरतो मराटपं कुर्यात् परिवारालयस्य तु
कुराडानि कारयेत्तत्र चतुर्दिक्षु विधानतः
चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम् ८
नवकुराडानि मातृणां यथोक्तं च विधानतः
कृत्वा सव्यं यथेदेष्टं गोमयालेपनं ततः ९
ततस्सर्वं यथोक्तं तु संस्कारं मराटपस्य तु
मातृणां लक्षणं प्रोक्तं सर्वेषां च यथाविधि १०
वृषभस्य वकारस्थं जकारो जायते सदा
हकारो वीरभद्रस्य गणेशस्य ग एव च ११
यकारादिसकारान्तं मातृणामक्षरं भवेत्
कुमारस्य ककारं तु ज्येष्ठायाश्चाद्यमक्षरम् १२
दुर्गायास्तु दुकारस्याद्धकारो भास्करस्य तु
एवं बीजं समाख्यातं मन्त्राणयेते प्रकल्पयेत् १३
ह्रस्वांत्सद्यादयं प्रोक्तं दीर्घास्तु हृदयादयम्
सविसर्ग भवेदस्त्रमनुस्वारभवर्जिकम् १४
सानुस्वार भवेनेत्रां सर्वेषां समुदाहृतम्
आदौ नामं समुच्चार्य मध्ये बीजं सरेण च १५
अन्त्ये समुच्चरेन्मन्त्रं चतुर्थ्यन्तं विशेषतः
यस्य नामानि तद्बीजं सर्वेषां समुदाहृतम् १६
एवमेवं तु सर्वेषां ततो मन्त्राणि कल्पयेत्
यदुक्थं स्थापनायां च चले चैवाचलेषु च १७
रत्नन्यासादिसर्वं तु यथोक्तं कारयेत्ततः
होमं ध्यानप्रतिष्ठां च समानं सर्वमेव च १८
मन्त्रैरेतैस्तथा कुर्यात् पूजाहोमक्रियादयः
सर्वेषामालयालाभे पीठमेव प्रकल्पयेत् १९

विस्तारं तु द्विकालं स्यान्मेखलात्रयसंयुतम्
प्रमाणेन ततः कुर्यादेकैकचतुरङ्गुलम् २०
कर्तव्यं पद्मपीठं वा शिलायामिष्टके तु वा
तावदेवं तु विस्तारं त्रिभागैकं तु कर्णिका २१
पत्रं श्येनदलं कुर्याद्विस्तारोत्सेधमानतः २२
इति स्वायम्भुसूत्रे परिवारस्थापनः पटल षट्त्रिंशत्

## बाल्यस्थान

अथ वक्ष्ये विशेषेण बाल्यस्थानविधिक्रमम्
प्रासादे पतिते भिन्ने वल्मीके चोत्थिते तथा १
विश्लेषे च तथा पीठे लिङ्गे तु चलिते तथा
शिल्पकर्मान्तरे चैव बालस्थानक्रमान्वितः २
प्रासादस्याग्रतो वाथ अग्रवामेऽग्रदक्षिणे
कृत्वा विमानं वेदाङ्गं तेन यच्चाद्यवादितः ३
चतुरश्रे कृते क्षेत्रे वास्तुरूपं तु कल्पयेत्
विस्तारस्यार्धमुत्सेधं समं मण्टपसंयुतम् ४
शिलादारुमयो वाथ लिङ्गं दारुमयस्य तु
पूजाभागसमायामं नाहं तेन प्रकल्पयेत् ५
विस्तारोत्सेधमानं तु पीठिकालिङ्गमानतः
नालपट्टसमायुक्तं यथा तथ्य प्रकल्पयेत् ६
बाल्यस्थानस्य पुरतो मण्टपं दशहस्तकम्
सर्वालङ्कारसंयुक्तं यथाविधिपुरस्सरम् ७
तत्राष्टौ चतुरश्राणि कुण्डं कृत्वा विधानतः
पुण्याहं वाचयित्वा तु वास्तुहोमं तु कारयेत् ८
यात्राहोमं तु कर्तव्यं प्रासादस्य ततोऽन्तिके
सर्वं कृत्वा निसंस्कारं ततो यजनमारभेत् ९

आयाहिसंपुटं कृत्वा कालाङ्गैर्जुहुयात् क्रमात्
अङ्गारकाद्यैवारैश्च तिथिभि प्रथमादिभिः  १०
नक्षत्रैरश्वयुक्पूर्वैर्मासैर्मेषादिभिस्तथा
जुहुयादेवमेवं तु वत्सरस्य विशेषतः  ११
आद्वादशाब्दो देवं स्यात्तस्मादूर्ध्वं  न कारयेत्
ततो देवस्य पुरतो शिवकुम्भं तु वर्धनीम्  १२
स्थण्डिलोपरि विन्यस्य वर्तयेदाननत्रयम्
लिङ्गादेवं समावाह्य सम्यङ्मन्त्रं समुच्चरन्  १३
वामदेव संस्थाप्य प्रासादसमनुस्मरन्
गन्धाद्यैरर्चयित्वा तु पद्ममुद्रां प्रदर्शयेत्  १४
उमादेवीं समावाह्य वर्धन्युपरि विन्यसेत्
गणाम्बिकायै संपूज्य मुकुलं तत्र दर्शयेत्  १५
वहित्वा शिरसं कुम्भं कृत्वा चैवं प्रदक्षिणम्
वेदिकापरि संस्थाप्य कृत्वा स्थण्डिलपूजनम्  १६
विन्यसेत्तस्य वामे तु वर्धनीं तु विशेषतः
वस्त्रेणावेष्टितं लिङ्गं वायवे दक्षिणं ततः  १७
अर्चयित्वा तु गन्धाद्यैरभितोऽष्टौ घटान् न्यसेत्
हैमैर्दिगायुधैर्युक्तं विद्येश्वरसमायुतम्  १८
सम्पूज्य विधिवत्सर्वान् होमकर्म समारभेत्
कुर्यात्सर्व यथोद्दिष्टं प्रोक्षणं सकलं ततः  १९
सुमुहूर्ते तथा लिङ्गं स्थापयेत्पञ्चमेन तु
शर्करासर्जपूर्णं  तु समं कृत्वा विशेषतः  २०
माहिषं नवनीतं च यथायुक्त्या नियोजयेत्
मुखलेपममक्ष्युभ्य यथा स्निग्धान्तरं तथा  २१
वज्रबन्धमिति ख्यातं विवरे तस्य योजयेत्
स्थापनं स्नपनं चाथ निर्दिष्ट प्रोक्षणं तथा  २२

लक्षणोक्ताधिकं न्यूने दिशाहोमं तो कारयेत्
कुर्यात् संवत्सरं होमं पूर्वोक्तानुक्रमेण तु २३
पुण्याहं वाचयित्वा तु स्नपनं तत्र कारयेत्
ब्राह्मणान् भोजयित्वा तु प्रोक्षणं कारयेदथ २४
न्यूने सा वत्सराद्धोममर्धं सर्वं तु कारयेत् २५
इति स्वायम्भुसूत्रे बालस्थापनपटलसप्तत्रिंशत्

## प्रोक्षणविधि

अथ वक्ष्ये विशेषेण प्रोक्षणस्य विधानतः
द्विविधं प्रोक्षणं प्रोक्तं भद्रं योगं तथैव च १
प्रासादकरणे चैव पीठबन्धविधौ तथा
बालस्थानमथो कृत्वा प्रोक्षणं भद्रमुच्यते २
पतितै दूषिते लिङ्गे चण्डालैश्शिल्पिभिस्तथा
पूजाहीनं तथा मासं प्रोक्षणं योगमुच्यते ३
यात्राहोमयुतं भद्रं योगं वै तद्विहीनकम्
भद्रेण योगमाख्यातं तस्माद्भद्रं समुच्यते ४
प्रासादस्याग्रतः कुर्यात् मण्टपं चतुरश्रकम्
दशद्वादशहस्तं वा दर्पणोदरसन्निभम् ५
स्तम्भैष्षोडशभिर्युक्तं चतुर्द्वारसमायुतम्
अलङ्कृत्वा वितानैश्च तोरणैश्च ध्वजैस्तथा ६
दीपैः पुष्पैः फलैस्सार्धमङ्कुरैरष्टमङ्गलैः
कृत्वा नवपदं मध्ये पदमेकं तु वेदिकाम् ७
रत्निमात्रसमुत्सेधं मुष्टिमात्रमथापि वा
कुर्यात् कुण्डानि परितो दिशासु विदिशासु च ८
चतुरश्रानि कुण्डानि दिशानि विदिशासु च
मेखलात्रयसंयुक्तं एकैकं तु त्रिरङ्गुलम् ९

ऐन्द्रस्येशनयोर्मध्ये प्रधानं तत्र कल्पयेत्
गोमयालेपनं कृत्वा शोषणं पाचनं तथा  १०
पुण्याहं वाचयित्वा तु पर्यग्निकरणं तथा
चन्दनागरुकर्पूरकुष्ठैलावरकैस्सहैः  ११
लिङ्गमालिप्य वस्त्रेण वेष्ट्य पीठं च यत्नतः
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन्  १२
शुद्धैरद्भिस्तथा प्रोक्ष्य रुद्धैरुद्धैरिति ब्रुवन्
लिङ्गदर्भैरथावेष्ट्य हृदयेन विचक्षणः  १३
होमकौतुकसूत्रैस्तु बन्धयेल्लिङ्गमस्तकम्
बालस्थानं ततो गत्वा पूजयित्वा विधानतः  १४
तत्र होमं प्रकर्तव्यं बालस्थानस्य चाग्रतः
स्थण्डिलं तत्र कर्तव्यं निर्दोषैः सिकतैस्सितैः  १५
अग्न्याधानादिकं कृत्वा शिवाग्निं कल्पयेत्ततः
अथ ब्रह्मै षडङ्गैश्च प्रत्येकं तु शताहुतीः  १६
स्पृष्ट्वा स्पृष्ट्वा तु जुहुयात् तदर्धं वार्धमेव वा
ईशानेन चरुं हुत्वा स्पृशेल्लिङ्गस्य मस्तकम्  १८
तस्याग्रे शिवकुम्भं तु संस्थाप्य स्थण्डिलोपरि
पञ्चरत्नं समायुक्तं सकूर्चं वस्त्रवेष्टितम्  १९
पञ्चमूर्तिसमायुक्तमष्टत्रिंशत्कलायुतम्
षडङ्गैरपि संयुक्तं वृषारूढं वृषध्वजम्  २०
चतुर्भुजं त्रिणेत्रं तु सद्येनावाहयेत्ततः
वामदेवेन संस्थाप्य अघोरेणावकुण्ठयेत्  २१
बीजमुद्रां ततो बध्वा मुकुला पद्ममुद्रिकाम्
नमस्काराख्यमुद्रां च वध्वास्त्रं दिक्षु योजयेत्  २२
पद्ममुद्रां ततो वध्या राध्य गन्धादिभिः क्रमात्
पञ्चगव्येन संप्रोक्ष्य वेदिकां हृदयेन तु  २३

स्थण्डिलैः शालिभिः कुर्यादष्टद्रोणैर्विशेषतः
तण्डुलै शोभितं कृत्वा अष्टपत्रं सकर्णिकाम् २४
नवशक्तिसमोपेतं गन्धाद्यैः पूजयेदथ
आवेष्ट्याहतवस्त्रेण शिरसा वेष्टयेद्धटम् २५
शक्तिभिर्मूलमन्त्रैश्च जप्त्वा ध्यात्वा यथाविधिः
वषट् वश्यं फटोच्चाटे हुं स्तम्भे चे च मारणे २६
स्वाहा पुष्टि स्वधा तुष्टिरित्येते मन्त्र पल्लवाः
प्रदक्षिणत्रयं कृत्वा प्रासादं घोषसंयुतम् २७
वेदिकोपरि संस्थाप्य वामदेवमनुस्मरन्
तस्योत्तरे न्यसेन्मन्त्री वर्धनीं सहिरण्यकाम् २८
गणाम्बिकेति मन्त्रेण पूज्यते मन्त्रवित्तमैः
अभितः कलशानष्टौ न्यसेद्विद्येश्वरैर्युतम् २९
हेमं चात्र समायुक्तं प्रत्येकं वस्त्रवेष्टितम्
सकूर्चं सापिधानं च पूजयित्वा स्वनामतः ३०
दिशि स्वाध्यायनं कुर्युर्विधिवद्वेदपारगाः
पटेन महतावेष्ट्य ततो होमं समारभेत् ३१
मथित्वाग्निं समादाय सूर्यकान्तोद्भवं तु वा
अग्न्याधानादिकं चैव यथावदनुपूर्वशः ३२
शिवाग्निं कल्पयेत्तत्र षडङ्गैरपि संयुतम्
हुत्वा च ब्रह्मभिर्यस्तद्व्याहृत्या च तथा पुनः ३३
प्रणीताग्निं समादाय स्वैर्मन्त्रैर्मूर्तिपारगाः
सद्यमन्त्रं तु वारुण्यां वामदेवं तु दक्षिणे ३४
अघोरमुत्तरे चैव वक्त्रमैन्द्रे तथैव च
आग्नेयां हृदये चैव नैर्ऋत्यां तु शिरस्तथा ३५
शिखा वायव्यदिग्भागे ईशान्यां कवचं तथा
पञ्चब्रह्म प्रधानं स्यान्मन्त्राण्येवं प्रकल्पयेत् ३६

समिदाज्यचरून् लाजान् सर्षपांश्च यवान् तिलान्
पालाशोदुम्बराश्वत्थप्लक्षं चेति दिशासु च ३७
शमीखदिरबल्वार्कविदिक्षु क्रमशस्तथा
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा ३८
शतमष्टोत्तरं वापि प्रत्येकं जुहुयुः क्रमात्
घृतमीशानमन्त्रेण पुरुषेण चरुं तथा ३९
लाजानघोरमन्त्रेण सद्योजातेन सर्षपान्
तिलान् पाशुपतास्त्रेण कवचेन यवास्तथा ४०
द्रव्यान्ते व्याहृतिर्हुत्वा स्पृशेल्लिङ्गं स्वमन्त्रतः
हव्यवाहं समुच्चार्य सर्वद्रव्यसमन्वितम् ४१
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम्
प्रतिद्रव्यस्वमन्त्रेण दत्वा पूर्णाहुति स्तुवैः ४२
ब्रह्मजज्ञानमन्त्रेण जुहुयात्तु शताहुतीः
इदं विष्णिवति मन्त्रेण आवो राजानमेव च ४३
वेदादिभिश्च होतव्यं प्रत्येकं तु शताहुतीः
लिङ्गस्य मूलमध्यान्तं स्पृष्ट्वा स्पृष्ट्वा तथोपरि ४४
पूजा प्रभाते कृत्वाथ रात्रिबन्धं व्यपोहयेत्
सद्यादिपञ्चमन्त्रेण पञ्चगव्याभिषेचनम् ४५
कृत्वा शुद्धिमथाद्भिस्तु लिङ्गपीठस्थलं क्रमात्
हैमपङ्कजसंयुक्तं पुष्पं शिरसि धारयेत् ४६
आचार्यं पूजयित्वा तु वस्त्रहेमाङ्गुलीयकैः
कटकं कुण्डलं चैव यज्ञसूत्रं सहैमिकम् ४७
यथाशक्त्या च दातव्यं ग्रामं भूमिं च गास्तथा
सुमुहूर्तं ततो ध्यात्वा देवदेवं त्रियम्बकम् ४८
आत्मानं सकलीकृत्य गन्धाद्यैरर्चयेदथा
लिङ्गे वै मूर्तिपस्थाय कलाङ्गा विन्यसेत्क्रमात् ४९

शिवकुम्भं ततो नीत्वा विधानं तु व्यपोह्य च
तस्मात्तु स्थापयेल्लिङ्गं प्रासादं समनुस्मरन् ५०
सान्तयान्तसमायुक्तं षष्ठस्वरसमायुतम्
त्रयोदशान्तु संभिन्नं बिन्दुनादसमायुतम् ५१
प्रासादमिति वव्यातं बीजं शिवमयं तथा
साक्षात्सदाशिवं मन्त्रं तैव्याप्तं सकलं जगत् ५२
ध्यानेन ध्येयमालोक्य न्यसेदेवं सदाशिवः
स्वैस्वैर्मन्त्रैस्तु कलशैरभिषिच्य यथाविधिः ५३
गन्धाद्यैरर्चयेद्देवं यथोक्तं मन्त्रवित्तमः
पञ्चावरणमभ्यर्च्य परिवारं तु पूजयेत् ५४
निवेद्यं च बलिं दद्यात् नृत्तगेयसमाकुलम्
सर्वोपकरणं तत्र आचार्याय निवेदयेत् ५५
एवं यः कुरुते मर्त्यः स पुण्यं गतिमाप्नुयात्
मोक्षदं मोक्षकामानां विजयं जयकामिनाम् ५६
अप्रजानां प्रजावृद्धिं धनदं धनकामिनाम्
उत्सवं कारयेत्पश्चादङ्कुरार्पणपूर्वकम् ५७
इति स्वायम्भुसूत्रे प्रोक्षणपटल अष्टत्रिंशत्

## अङ्कुरार्पण

अथाङ्कुरार्पणं वक्ष्ये सर्वकामसमृद्धिदम्
उत्सवे स्नपने चैव प्रोक्षणे स्थापने तथा १
अन्यस्मिन् मङ्गले कार्ये मङ्गलाङ्कुरमुच्यते
योगपूर्वेषु सर्वेषु नवमे सप्तमे तथा २
पञ्चमे वा शिवं पूज्य सर्वबीजनिवापयेत्
बीजानामधिपस्सोमस्तस्माद्रात्रौ तु रोपयेत् ३
ग्रामं प्रदक्षिणं कृत्वा शङ्खभेर्यादिनिस्वनैः

वितानच्छत्रसंयुक्तं गजाश्वच्छत्ररोहणैः ४
बीजचामरसंकीर्णैर्ध्वजैश्च परिशोभितैः
शिरोवस्त्रेण संवेष्ट्य वहित्वाथ महेश्वरम् ५
नदीतीरे तटाके वा केदारे वा विशेषतः
शुद्धस्थानमनुप्राप्य शुद्धिं कृत्वा तु भूतलम् ६
हृन्मन्त्रेण समभ्युक्ष्य तेन गन्धादिभिस्तथा
अभ्यर्च्य भूतलं सम्यक् खानयेदस्त्रमन्त्रतः ७
मृदं संगृह्य वामेन प्रविशेदालयं प्रति
आलयस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् ८
गोमयेनोपलिप्याथ सर्वालङ्कारसंयुतम्
पुण्याहं वाचयित्वाथ षडन्तैः प्रोक्ष्य भूतलम् ९
प्राची च दशसूत्राणि दशोदीचीं ततः परम्
मध्यमे च चतुर्दिक्षु तद्वयावृतवर्जितम् १०
आदित्यपार्श्वयोर्द्वे द्वे यमे चैव जलाधिपे
सोमे च लेखयेदेवं पञ्चविंशतिसंख्यया ११
मध्यमे तु पदं कृत्वा द्रोणकैरपि शालिभिः
तण्डुलैः शोभितं कृत्वा स परिस्तीर्यकुशस्ततः १२
स्थण्डिलं विधिना कृत्वा अष्टपत्रं समालिखेत्
पूर्णकुम्भं तथा स्थाप्य सोमराजाधिदैवतम् १३
सकूर्चसपिधानं च सहिरण्यं सवस्त्रकम्
गन्धाद्यैरर्चयेत्सोमं स्वनाम्ना तु विधानतः १४
पालिका घटिका चैव शरावं तु यथाक्रमम्
सौवर्णं राजतं वापि ताम्रं वा मृण्मयं तु वा १५
कर्तव्यं लक्षणैर्युक्तं शास्त्रदृष्टेन वर्त्मना
पालिकावक्त्रविस्तारमयं पञ्चादशाङ्गुलम् १६
षोडशाङ्गुलविस्तारमध्यमं समुदाहृतम्

विंशत्यङ्गुलविस्तारमुत्तमं तु प्रकल्पयेत् १७
विस्तारेण समुत्सेधं तदर्धं पादविस्तृतम्
विस्तारस्य तु षड्भागं परितश्चोष्टसंयुतम् १८
विस्तारस्य त्रिभागैकं दण्डविस्तार उच्यते
कटिका कलशाकारां पालिकासमवेदिकाः १९
पालिका दण्डवत्कुर्याच्चतुरङ्गुलमानतः
तस्योदरस्य विस्तारमधमं द्वादशाङ्गुलम् २०
एकाङ्गुलविवृद्ध्या तु मध्यमं चोत्तमं ततः
वक्त्रं पञ्चकसंयुक्तं विस्तारस्य त्रिभागतः २१
शरावावक्त्रविस्तारमष्टाङ्गुलमुदाहृतम्
तदर्धं पादविस्तारं तयोरर्धं समुच्छ्रये २२
अधमं चैवमुद्दिष्टं मध्यमोत्तममेव चा
मध्यमाङ्गुलवृद्ध्या तु कर्तव्यं सुमनोरमम् २३
विष्णुश्चतुर्मुखेशाद्याः पालिकाद्याधिदैवताः
प्रत्येकं स्थण्डिलं कृत्वा स्थापयेत् स्थण्डिलोपरि २४
स्थण्डिलं शालिभिः कुर्यात् प्रत्येकं प्रस्थसंमितम्
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं भवेत् २५
तण्डुलैः शोभितं कृत्वा गन्धाद्यैरर्चयेद्बुदा
स्थण्डिलं विधिवत् कृत्वा स्थापये स्थण्डिलोपरि २६
आदित्यस्सम्बरीयश्च विवस्वांश्च यमस्तथा
जलाधिपोऽथ मित्रश्च सोमश्च पृथिवीधरः २७
घटिकानां विशेषेण स्थानमेवं प्रचोदितम्
हुताशनस्तथा पूषा पितृदौवारिकस्तथा २८
रोगो नागो दितिश्चैव ईशाश्चाष्टौ प्रकीर्तिताः
तेषां स्थाने शरवान्नी स्थापये स्थापकोत्तमः २९
शेषांश्च पालिकाश्चाष्टौ स्थाप्य बीजानि वापयेत्

कलुषाभिस्समापूर्य मृद्भिस्सद्भिस्तथोपरि ३०
मुद्गमाषकुलस्थाश्च सर्षपां सतिलांस्तथा
निष्पावशल्यपामार्गशिग्रूव्रीहिस्तथैव च ३१
आढकी च तथा श्यामगोधूमयववैणवा
वर्गेषु त्रितयेष्वेषु प्रथमेणाधमं भवेत् ३२
आद्यद्वयेन मत्स्यं स्यात्तृतीयं चोत्तमं भवेत्
पयसा क्षालयित्वा तु निर्वपेद्धृदयेन तु ३३
ततो वै सोमराजस्य पयसं तु निवेदयेत्
सोमाधिदैवतान् कुम्भान् परिषिच्य ततो जलैः ३४
तथैव सितवर्णास्तु वर्धतेऽथ यथाविधिः
विधाय सुविधाने तु गुप्तस्थाने तु धापयेत् ३५
ततः प्रतिदिनं कुर्यात् प्रोक्षणं हृदयेन तु
तेषां तु लक्षणं वक्ष्ये शुभाशुभफलोदयम् ३६
सितान्येवं कोमलानि सम्यगूर्ध्वग्रतानि च
शुभान्येतानि सर्वाणि अङ्कुराणि विशेषतः ३७
अपूर्णानि च कृष्णानि श्यामलानि तथैव च
सुधूम्राणि च कृष्णानि तथा तिर्यग्गतानि च ३८
अङ्कुराण्यशुभान्याहुस्तद्दोषविनिवृत्तये
पञ्चब्रह्मषडङ्गैश्च प्रत्येकं तु शताहुतीः ३९
एवं कृते महाशान्ति कर्तुं कारयितुस्तथा
पद्मे कुम्भमधोमुखं निशित धीस्संस्थाप्य वर्माणुना
धूपामोदपटीरलेपनशुचैः पश्चात्यकूर्चक्षिपेत् ।
तत्स्वाभ्यग्रतरान्प्रपूज्य विधिवत् संशोध्ययादित्रिभिः
कृत्वोत्तानकमक्षरात्मकवसून् क्वाथोदकान् पूरयेत् ४०
सारसयवकसन्निभतन्तुभि प्रसृतचन्द्रकलादलराजितम्
तुहिनदीधितिकुम्भनुस्नपोद्भवकलेन्दुशीखामणिराजिते ४१

यथा द्विजातिः परमेष्टिसूत्रां ततो विभातीन्दुधरोऽष्टबन्धान्
तुषारबन्धान् कृतदेशिकेशान् खराण्डजामान्तरभातिशूली
४२
रक्तचन्दनकर्पूरबोधिवृक्षश्च पट्पदः
सद्योदीक्षादिकं पूर्ववह्निबीजसमन्वितम् ४३
वीरभद्रपदं न्दे महाबलपदं तथा
होमकाले द्विठान्तस्यादर्चने च नमोन्तिका ४४
बिससितविवृतश्रीतन्तुशुभ्राभ्रशुभ्रैत्रिगुणितगुणजालाव्याप्त
वर्माभिरामैः ।
दशशतदलरूपैश्रीनिवासैस्साक्षात् कमलजकलशं
तद्दर्शयत्सिद्धा स्युः ४५
समुद्यत्सहस्रारवृत्तेन रूपं कलापञ्च वृत्तं तदिन्दुस्वरूपम्
ततो दिग्दलाम्भोजमग्निस्वरूपं तदेतत्सरोजं
त्रयीकुम्भकोष्ठाः ४६
नीलतन्तुवृतकावृतपत्रव्याप्तिदिक्परिमितानलकुम्भे
तरिकलाभिरभितन्त्रिततोयादाभिषेकभवसंहृतिरूपाः ४७
इति स्वायम्भुसूत्रे अङ्कुरार्पणपटलः एकोनचत्वारिंशत्

## उत्सवविधिः

अथोत्सवविधिं वक्ष्ये यथावदनुपूर्वशः
शैवं गौणं विभूतिं च भौवनं दैविकं तथा १
एकाहमुत्सवं शैवं त्रिदिनं गौणमुच्यते
पञ्चाहं हौत्रिकं प्रोक्तं सप्ताहं भौवनं तथा २
नवाहं दैविकं प्रोक्तमुत्सवः पञ्चधोच्यते
ध्वजारोहणपूर्वं तु भेरीताडनपूर्वकम् ३
अङ्कुरार्पणपूर्वं च त्रिविधास्ते भवन्ति हि

ध्वजमारोपयेदह्नि भेरीं रात्रौ तु ताडयेत् ४
उत्सवस्यादिरात्रौ तु बीजनिर्वाप उच्यते
ध्वजारोहणपूर्वं तु प्रोक्त एवं विधिस्मृतम् ५
भेरीं तु ताडयेच्चादौ ध्वजमारोपयेत्ततः
एवं विधिस्तथा प्रोक्तं भेरीताडनपूर्वकम् ६
कृत्वाङ्कुरार्पणं पूर्वं ततो भेरीं तु ताडायेत्
ध्वजारोपणमन्त्रे तु कर्तव्यं प्रथमं निशि ७
एवं समासः प्रोक्तमङ्कुरार्पणपूर्वकम्
आदौ तत्त्रितयेष्वेषु न ध्वजारोपणक्रिया ८
भौवने दैविके चापि ध्वजारोपणमारभेत्
नवाहत्रितये चापि सप्ताहत्रितयेऽपि वा ९
प्रासादं पुरतो विद्वान् मण्टपे संस्कृते शुभे
गोमयालेपनं कृत्वा प्रोक्षयेत् पुरुषेण तु १०
स्थण्डिलत्रितयं कुर्यात् शालिभिर्विमलैस्तथा
तण्डुलैश्शोभितं कृत्वा दलाष्टकसमन्वितम् ११
परिस्तीर्य ततो दर्भैः लोकपालान् समर्चयेत्
अन्तिके स्थण्डिले स्थाप्य ध्वजं लक्षणसंयुतम् १२
षड्ढस्तमधमं प्रोक्तं मध्यमं सप्तहस्तकम्
उत्तमं चाष्टहस्तं स्यात्पञ्चभागैकविस्तृतम् १३
विस्तारेण समुत्सेधं तदर्धं शिखरं भवेत्
वृषभं चामरं छत्रं तन्मध्ये लाञ्छयेत्ततः १४
एवं लक्षणसंयुक्तमर्चयेद्वृषमन्त्रकैः
तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि
तन्नो वृषभ प्रचोदयात् १५
एतन्मन्त्रं जपित्वा तु गन्धाद्यैर्वृषमर्चयेत्
तदग्रे स्थण्डिले सम्यक्कलशा सादये नवा १६

विद्येश्वरसमायुक्तान्मध्ये वृषभदेवताम्
सकूर्चं सापिधानं च सहिरण्यं सवस्त्रकम् १७
गन्धाद्यैरर्चयित्वा तु स्वैस्स्वैर्मन्त्रैर्विशेषतः
तदग्रे स्थण्डिले स्थाप्य भेरीवस्त्रसमायुतम् १८
दक्षिणे विष्णुमभ्यर्च्य वामे शैवस्तथार्चयेत्
मध्ये प्रजापती पूज्य प्रहरे स्कन्ददैवताम् १९
अर्चयित्वा तु गन्धाद्यैर्वाद्यं गायत्रि मन्त्रतः
आचार्यं पूजयेत्कृत्वा वाद्यकं पूजयेदथा २०
हृन्मन्त्रेण समभ्यर्च्य पुष्पं हस्ते विधापयेत्
पुष्पं तत्र विनिक्षिप्य वाद्ये तालवितालके २१
स्नपनं तत्र कर्तव्यं स्वैर्मन्त्रैर्वृषभं ततः
ध्वजारोपणपूर्वे तु स्थण्डिलद्वितयं भवेत् २२
कलशस्थापनस्यैकं ध्वजस्यैकं विधीयते
शङ्खदुन्दुभिनिर्घोषैर्गीतवाद्यसमायुतम् २३
पिञ्छचामरसंकीर्णं धूपदीपसमाकुलम्
सर्वालङ्कारसंयुक्तं त्रिशूलेन समन्वितम् २४
ग्रामं प्रदक्षिणं कुर्यात् साधिदैवान् समर्चयेत्
अष्टादशगणाश्चैव त्रयत्रिंशच्च देवताः २५
आहूय लोकपालां च बलिं दद्याद्विशेषतः
आश्राव्य तीर्थदिवसमाचार्यप्रीतमानसः २६
मार्गशीर्षं च मासे तु आर्द्रान्तस्तु शिवोत्सवम्
पुष्यमासे तु पुष्यान्तमाघमासे मघान्तिकम् २७
फल्गुने चोत्तरान्तस्तु चैत्रे चित्रान्त उच्यते
वैशाखे तु विशाखान्तं मूलान्तो ज्येष्ठमासके २८
आषाढे चोत्तराषाढं श्रावणे श्रवणान्तिकम्
तथा भाद्रपदे मासि उत्तराभाद्रिकावधिः २९

अश्विन्यान्तेऽश्वयुङ्मासे कार्तिके कृत्तिकान्तिकः
सर्वमासे तु कर्तव्या आर्द्रान्तस्तु शिवोत्सवः ३०
उत्सवं तु प्रतिष्ठायां यावत्सप्तदिनान्तरम्
राज्ञा जन्मदिनान्तश्च मरणान्तोऽथव भवेत् ३१
पीठगोपुरयोर्मध्ये पुरतो वृषभस्य वा
अध्यर्धरत्निमात्रं तु खात्वा लिप्यावटं बुधः ३२
कूर्मं वा वृषभं वाथ हैमं तत्र विनिक्षिपेत्
वेणुदण्डमृजुं स्थाप्य प्रासादसमदीर्घकम् ३३
वृषगायत्रिमन्त्रेण ध्वजघण्टासमायुतम्
आरोपयेत्ततो मन्त्री यजुमन्त्रेण वित्तमः ३४
चम्पको देवदारुश्च सालस्तबक एव च
क्रमुकं चन्दनश्चेति ध्वजदण्डाः प्रकीर्तिताः ३५
गन्धादिकं ततो दत्वा मुद्गान्नं तु निवेदयेत्
तस्य मूले तु कर्तव्यां वेदिं पद्मसमावृतम् ३६
रत्निमात्रसमुत्सेधद्विगुणं चैव विस्तृतम्
एवं प्रत्यहमभ्यर्च्य सघृतं गुलसक्तुकम् ३७
मुद्गान्नं दापयेद्धीमान् स्वमन्त्रैर्हृदयेन तु
ततोऽङ्कुरार्पणं कुर्यादुत्सवस्य दिने ततः ३८
प्रत्यग्रे मण्टपं कुर्यादीशान्या पावके तथा
नवहस्ताष्टहस्तं वा सप्तहस्तमथापि वा ३९
तत्र ब्राह्म्यपदं कुर्यां वेदिकारत्निमात्रतः
कलशान्वेदिकामध्ये न्यसेद्वै स्थण्डिलोपरि ४०
विधाने वस्त्रकूर्चाढ्या सहेमापल्लवैर्युतान्
शिवकुम्भं न्यसेन्मध्ये वर्धनी तस्य वामतः ४१
परितोऽष्टौ न्यसेत्तत्र विद्येश्वरसमायुतान्
अर्चयित्वाथ गन्धाद्यै स्वस्वमन्त्रैर्विधानतः ४२

दशायुधानि परितः पूजयेत्साधिदेवताः
अष्टमङ्गलरूपाणि वेदिबाह्ये तु तान् क्रमात् ४३
तोरणानि ध्वजान्यत्र पूजयेच्च विधानतः
दर्भमालासमायुक्तं सर्वालङ्कारसंयुतम् ४४
कुर्यादायतनान्यत्र नव पञ्चैकमेव चा
वृत्तं वा चतुरश्रं वा सर्वकुण्डानि कारयेत् ४५
पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत्
गन्धाद्यैरर्चयित्वा तु होमं कुर्याद्विधानतः ४६
समिधाज्य चरून् लाजान् वेणुबिल्वयवस्तथा
प्रत्येकं शतमर्धं वा जुहुयात् क्रमशः पुनः ४७
समिधं पञ्चमेनाथ वस्त्रेणाज्यं तथैव च
अघोरेण चरुं हुत्वा लाजान् होमेन वामयेत् ४८
सद्येन वेणुबीजानि बिल्वपत्रं तथा हृदा
वक्त्रेण तु यवान् हुत्वा प्रत्येकं व्याहृतिस्तथा ४९
पूर्णाहुतिस्तु शिरसा प्रतिद्रव्यं विधानतः
सर्वद्रव्यसमायुक्तं हव्यवाहान् समुच्चरन् ५०
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम्
जयादिरभ्यातानानि राष्ट्रभृच्च यथाक्रमम् ५१
हुत्यन्तेति यदस्येति जुहुयात्तु विशेषतः
सायं प्रातर्बलिं दद्याद्धोमान्ते तु विधानतः ५२
तालकाहल तूर्यैश्च ध्वजैश्च परिशोभितम्
बलिपात्रे ततः कुर्यादन्नलिङ्गं विधानतः ५३
द्वादशाङ्गुलमुत्सेधं नाभं तद्द्विगुणं भवेत्
अग्रं तु द्व्यङ्गुलं तारं दधिमालिप्य सर्वतः ५४
अस्त्रराजाधिदैवत्यं पूजयित्वा तु देशिकः
शिरसावाहयेत्तं तु दशायुधसमायुतम् ५५

प्रथमं विघ्नराजस्य द्वितीयं ब्राह्म्यमुच्यते
भूतान्तु तृतीयं स्याद्गन्धर्वाणां चतुर्थकम् ५६
ऐन्द्रं तु पञ्चमं प्रोक्तमृषीणां षष्ठ उच्यते
सप्तमे वैष्णवं प्रोक्तमष्टमं राक्षसं तथा ५७
नवमं शैवमित्युक्तं दिवसानां तु देवताः
भूतानां दिवसादिस्तु भौवनं समुदाहृतम् ५८
ऐन्द्राद्यास्तु विभूति स्या गौणं तद्वैष्णवादिकम्
देवं तु शैवमित्युक्तं दिवसा संप्रकीर्तिता ५९
लड्डुकं मोदकं चैव मुद्गान्नं गुलसक्तुकम्
प्रथमेऽहनि दातव्यं विघ्नमन्त्रमनुस्मरन् ६०
पद्मपुष्पं सरजनीं पायसं लाजसंयुतम्
द्वितीयेऽहनि दातव्यं ब्रह्ममन्त्रमनुस्मरन् ६१
हरिद्रान्नं ससर्पिष्कं नालिकेरफलैर्युतम्
तृतीयेऽहनि दातव्यं गन्धर्वं मन्त्रमुच्यते ६२
इन्द्रवल्लीसमायुक्तं प्रियङ्गुघृतसंयुतम्
चतुर्थेऽहनि दातव्यं ऐन्द्रमन्त्रमनुस्मरन् ६३
वेणवन्नं दधिसंयुक्तं पनसस्य फलैर्युतम्
पञ्चमेऽहनि दातव्यमृषीणां मन्त्रमुच्चरन् ६४
घृतक्षारसमायुक्तं शर्करोदनसंयुतम्
षष्ठेऽहनि तु दातव्यं वैष्णवं मन्त्रमुच्यते ६५
माषान्नं घृतसंयुक्तं आढकी मांससंयुतम्
सप्तमेऽहनि दातव्यं राक्षसं मन्त्रमुच्चरन् ६६
शुद्धान्नं दधिसंयुक्तं लाजापूपसमायुतम्
अष्टमेऽहनि दातव्यमैश्वरं मन्त्रमुच्यते ६७
नवमेऽहनि दातव्यं तदेवान्नं शिवं स्मरन्
ब्रह्माद्येशानपर्यन्तं गन्धपुष्पादिभिः क्रमात् ६८

विघ्नराजादिमन्त्रैस्तु प्रणवादिनमोन्तिकैः
पूजयित्वा यथान्यायं स्वाहान्तेन्नबलिं क्षिपेत् ६९
प्रतिमां बलिदानान्ते कुर्याद्ग्रामप्रदक्षिणम्
एकं वापि द्वयं वापि त्रयं वा सर्वमेव वा ७०
वाञ्छां तु विद्यते यत्र द्वादशप्रतिमास्तथा
कौतुकं बन्धयेद्विद्वान् उत्सवार्थं हृदा ततः ७१
ग्रथितं कौतुकं यस्मिन् तत्कौतुकमुदाहृतम्
सर्वालङ्कारसंयुक्तं सर्वाभरणभूषितम् ७२
अङ्के वा शिबिकायां वा तथैवारोप्य भक्तितः
कौतुकं बलिदानान्ते कुर्याद्ग्रामप्रदक्षिणम् ७३
उत्सवान्ते तु तेनैव कारयेदुत्सवं ततः
राक्षसे दिवसे चैव युद्धारम्भे प्रवाहयेत् ७४
धनुर्धारास्तथा केचित् केचित् खड्गधरास्तथा
केचिदश्वसमारूढा भीताः केचित्तथा स्मृताः ७५
एवं कृत्वा तु दिवसे रात्रौ कौतुकबन्धयेत्
नद्या वापि तटाके वा ह्रदे वाप्यमथापि वा ७६
पूर्वेद्युरेव कर्तव्यं शूलं कौतुकबन्धनम्
सौवर्णमूर्णासूत्रं वा सूत्रं कार्पासमेव वा ७७
पुण्याहं वाचयित्वा तु कौतुकं बन्धयेद्धृदा
आहूय सर्वदेवां स्तु गन्धाद्यैरर्चयेत्क्रमात् ७८
तीर्थसङ्ग्रहणं चापि कर्तव्यं विधिपूर्वकम्
साधितैः कलशैस्तत्र शूलं वै स्नपयेत्ततः ७९
चूर्णोत्सवं ततः कुर्यात् शैवे तु दिवसे ततः
प्रासादस्याग्रतो वापि याम्ये वा पावकेऽपि वा ८०
कृत्वा तु मण्डलं सम्यक् गोमयालेपनं तथा
संस्नाप्य शूलं तत्रैव अघोरेणासनोपरि ८१

तदग्रे स्थरिडलं कुर्यात् शालिभि व मलैस्ततः
विन्यसेदस्त्रमन्त्रेण लूखलं वस्त्रवेष्टितम् ८२
दूर्वां च सहदेवीं च बन्धये लूखला हृदा
पवमानेन संप्रोक्ष्य पुरयाहं वाचयेत्ततः ८३
अर्चयित्वा तु गन्धाद्यैस्त्रिशूलं लूखलं तथा
घृतं शिरोऽर्पणं कुर्यात् लूखलं मुसलं तथा ८४
सघृतैस्सद्यमन्त्रेण हेमदूर्वाङ्कुराक्षतैः
आठकद्वितयं ग्राह्य ग्राह्यमाढकमेव वा ८५
चूर्णयेद्देशिकस्तत्र हृदयेन तु मन्त्रतः
जयशब्दसमायुक्तं भेरीशब्दसमाकुलम् ८६
गीतवाद्यसमायुक्तं स्तोत्रमङ्गलवाचकैः
ततो भक्तजनैस्सार्धं चूर्णकेन तु देशिकः ८७
प्लावयेच्छिवमन्त्रेण शिवमभ्यर्चयेत्ततः
तैलेनाभ्यज्य शूलं तु चूर्णेन स्नापयेदथा ८८
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
ग्रामं प्रदक्षिणं कृत्वा ततः शीघ्रं समारभेत् ८९
कलशान् सादयित्वा तु सहिररयान् सवस्त्रकान्
प्रासादस्याग्रतस्सम्यक् विद्येश्वरशिवात्मकान् ९०
संभ्रम्य कलशांश्चैव पालिकाभिस्तथैव च
गन्धादिकं च संगृह्य गीतवाद्यसमायुतम् ९१
गच्छेद्भक्तजनैस्सार्धं ततस्तीर्थं तु देशिकः
तीले समतले सम्यक्कृत्वा तु स्थरिडलद्वयम् ९२
स्थरिडले स्थाप्य शूलं तु तस्याग्रे कलशं न्यसेत्
अर्चयित्वा यथान्यायं शूलं वै कलशास्तथा ९३
शूलस्य मध्यमे पत्रे शिवमावाहयेत्ततः
दक्षिणे विष्णुमावाह्य वामे पत्रे प्रजापतिः ९४

पार्वतीपालिकायास्तु कुम्भे चैव तु षरामुखम्
विघ्नेशं तदधस्तत्र दराडमध्ये तु भास्करम् ९५
चराडेशं दराडमूले तु दराडाग्रे मदनं तथा
श्रीदेवीं पूर्वदिग्भागे दक्षिरो मातरस्तथा ९६
ज्येष्ठां तु पश्चिमे चैव दुर्गादेवी तथोत्तरे
लोकपालान् तथाष्टौ तु त्रयस्त्रिंशस्तु देवताः ९७
पातालानि तथा सप्त शूलमूले समावह्येत्
अनन्तादिशिखराड्यन्तान् कलशेष्वभितो न्यसेत् ९८
गङ्गे च यमुने चेति निर्मदा च सरस्वती
सिन्धु गोदावरी चेति कावेरी चेति सप्तधा ९९
आवाह्य कलशे चैव मध्यमे देशिकोत्तमः
तन्मन्त्रेरा ततस्नाप्य स्नानं तत्र समाचरेत् १००
सह स्नानं तु यः कुर्यात्सर्वपापैः प्रमुच्यते
दिनैष्वेतेषु सर्वेषां दीपैश्च बलिभिस्तथा १०१
विशेषां पूजनं कुर्याद्विभवस्यानुरूपतः
स्नपनं तु ततः कुर्यान्मूलबिम्बे विशेषतः १०२
कौतुकं प्रतिमां चापि स्नपनं कारयेदथ
साधिकान् वेदिकामध्ये स्नपनं कारयेच्छिवे १०३
पुरयाहं वाचयेत्तत्र प्रोक्षयेच्च शिवाम्भसा
ध्वजमारोहणं कुर्याद्वृषभस्थं विसर्जयेत् १०४
ग्रामं प्रदक्षिरां कुर्यात् बलिं दत्वा विशेषतः
विसर्जनं ततः कुर्याद्ब्रह्मादीन् परितस्थितान् १०५
एवं यःकुरुते मर्त्यः उत्सवं विधिपूर्वकम्
कुलैकविंशमुद्धृत्य रुद्रलोके महीयते १०६
इति स्वायम्भुसूत्रे उत्तरसूत्रे उत्सवपटलश्चत्वारिंशत्

## शङ्करस्नपन

अतः परं प्रवक्ष्यामि स्नपनं शङ्करस्य तु
प्रासादस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् १
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा
दशहस्तं तु विप्राणां विंशद्धस्तं नृपस्य तु २
अष्टहस्तं तु वैश्यानां शूद्राणां सप्तहस्तकम्
पङ्क्तित्रयसमायुक्तं पङ्क्तिमानमथोच्छ्रयम् ३
द्वितालनाभं स्तम्भानां अधौ भूमौ तु हस्तकम्
गोमयालेपनं कृत्वा प्रोक्षयेद्धृदयेन तु ४
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम्
अष्टस्तम्भचतुष्कोणे स्थापयेदधिदैवतम् ५
बाह्यानां द्वादशानां तु द्वादशादित्यसंयुतम्
पूजयित्वा स्वनाम्ना तु पूजयेत्तोरणस्ततः ६
तोरणं पञ्चहस्तं स्याच्छूलं वै हस्तमानतः
विस्तारं पञ्चहस्तार्धं भूमौ हस्तं निखानयेत् ७
भद्रं च विजयं चैव विजृम्भो लोहितस्तथा
पूर्वादिक्रमयोगेन स्वनाम्ना पूजयेत्पृथक् ८
दर्भमालां समावृत्य समन्तान्मण्डपस्य तु
त्रिचतुः पञ्चभिर्दर्भैर्वैकहस्तप्रलम्बितैः ९
एकाङ्गुलपरीणाहं रज्जुं कुर्यान्मनोहरम्
अष्टदिक्षु ध्वजान्यष्टौ लम्बयेत्तु प्रदक्षिणम् १०
पूर्वायां नीलवर्णं तु रक्तमाग्नेयगोचरे
कृष्णवर्णं तु याम्यायां नैर्ऋत्यां पिङ्गदीधितिः ११
वारुण्यां धूम्रवर्णं तु वायव्यां श्वेतवर्णकम्
हरिद्रां चैव सौम्यायामीशान्यां चित्रवर्णकम् १२
पूजयित्वा यथान्यायं लोकपालाधिदैवतम्

वितानमूर्ध्वमाच्छाद्य पुष्पमाल्यै प्रलम्बयेत् १३
द्वारपार्श्वेषु कोणेषु पालिकादीनि विन्यसेत्
पालिका भावयेद्विष्णूः घटिकासु चतुर्मुखः १४
शरावेषु भवेदीशो गन्धाद्यैस्तां प्रपूजयेत्
मङ्गलाष्टकरूपाणि पूर्वाद्या स्थापयेत्क्रमात् १५
दर्भणं पूर्णकुम्भं तु वृषभं युग्मचामरैः
श्रीवत्सं स्वस्तिकं शङ्खं दीपो देवाष्टमङ्गलम् १६
याज्ञिकं वृक्षमादाय कारयेत्स्वप्रमाणतः
षोडशाङ्गुलमायामं विस्तारं तु तदर्धकम् १७
अधस्तात्पद्मपीठं तु चतुरङ्गुलमानतः
तदूर्ध्वे दर्पणादीनि कारयेदथ लेखयेत् १८
दर्पणे दर्शन्नं चैवा पूर्णकुम्भे तु कुम्भकम्
वृषभे वृषभश्चैव व्यजने युग्मचामरैः १९
श्रीवत्से चैव श्रीदेवी स्वस्तिके तु सरस्वती
शङ्खे तु विमल प्रोक्तो दीपे तु ज्वलनस्मृताः २०
स्वस्वनाम्न समभ्यर्च्य सूत्रं पात्रं तु कारयेत्
चतुर्दश च सूत्राणि प्राङ्मुखानि समर्पयेत् २१
उदङ्मुखानि सूत्राणि तावदेव हि निर्दिशेत्
एवं कृते पदानि स्युः नवषष्ठीपदान् न्यसेत् २२
पञ्चविंशतिमध्ये तु कृत्वैकमभितस्त्यजेत्
दिक्षु पङ्क्ति दशा प्रोक्तो नवकोणेषु संस्थिताः २३
तेषु पञ्चदशस्वैवा त्रीणि मध्येऽन्तरे त्यजेत्
एवं कृते शिवपदं त्यक्त्वाष्टशत ++ २४
पञ्चमृत्पञ्चगव्यैश्च प्रोक्षयित्वा हृदा पुनः
स्थण्डिलं कारयेत्तत्र शालिभिर्विमलैस्तथा २५
प्रत्येकमाढकश्चैव शालिभिश्चोत्तमं भवेत्

त्रिः प्रस्थार्धं तु मध्यं स्यात्त्रिः प्रस्थमधमं भवेत् २६
द्रोणं तु शिवकुम्भस्य वर्धन्यास्तु तदर्धकम्
कलशस्य प्रमाणं तु एवमेव सलक्षणम् २७
सुवृत्तं द्रोणपूर्णं तु शिवकुम्भं भवेत्ततः
तस्यार्धैः परिपूर्णां तु वर्धनी समुदाहृता २८
अलङ्कृत्य तु सर्वत्र तदर्धैस्तण्डुलैस्ततः
जपापुष्पतिलैर्दर्भैर्विकिरेत् समलङ्कृते २९
व्यूहेषु नवसु प्रोक्तो शिवव्यूहेति मध्यतः
ऐन्द्रेत्वधर्ममित्युक्ता आग्नेयां धर्म उच्यते ३०
अज्ञानं दक्षिणे चैव ज्ञानं वै निर्ऋतेन्तथा
पश्चिमे तु अवैराग्यं वैराग्यं वायुदेशके ३१
अनैश्वर्यं तु सौम्यायामैश्वर्यं चेशगोचरे
गन्धाद्यैरर्चयेद्व्यूहा स्वस्वनाम्ना विशेषतः ३२
प्रोक्षयेद्धृदयेनैव सर्वत्र सकुशोदकैः
ब्रह्मघोषसमायुक्तं शङ्खभेरीरवैस्सह ३३
गीतवाद्यरवैर्युक्तं ततस्नपनमारभेत्
तन्तुना चित्रयेत् कुम्भान् एकद्वित्रिकतन्तुभिः ३४
एकद्वित्रितयान्तर्यं रुद्रोमाशिवकुम्भकान्
बाह्यतः कलशान् सर्वान् प्रक्षाल्याधोमुखांस्तथा ३५
ऊर्ध्वाधो दर्भसंयुक्तान् प्रोक्षयेत्पुरुषेण तु
पूरयेद्गन्धतोयेन शिवकुम्भं तु वर्धनीम् ३६
ततः शिवाख्यं कलशं वस्त्रयुग्मसमावृतम्
पञ्चरत्नसमायुक्तं सकूर्चं सापिधानकम् ३७
पञ्चविंशाङ्गुलायामैर्दर्भैर्विं शतिपञ्चभिः
दक्षिणावर्तग्रान्थिस्तु उत्तमं कूर्चमुच्यते ३८
द्श पञ्चाङ्गुलायामैर्दर्भैस्तु दशपञ्चकैः

कूर्चं तु मध्यमं प्रोक्तं कथितं तु प्रमाणतः ३९
द्वादशाङ्गुलमायामं सप्तदर्भैः कनीयसा
उत्तमं शिवकुम्भस्य वर्धन्यां मध्यमं भवेत् ४०
अधमं चैव शेषाणां कलशानां तु कूर्चकम्
उत्कूर्चं पौष्टिकं चापि अधःकूर्चं तु शान्तिकम् ४१
अन्तः कूर्चं न कर्तव्यं मारणं तेन जायते
आचार्यङ्गुलमानेन सर्वकर्माणि कारयेत् ४२
अष्टहस्तायनं चैव विस्तारं तु द्विहस्तकम्
श्लक्ष्णं मनोहरं चैव वस्त्रमुत्तममुच्यते ४३
अष्टर्द्व्यहस्तविस्तारं मध्यमं सप्तहस्तकम्
षड्स्तायामविस्तारमेकहस्तं सविस्तृतम् ४४
वस्त्रं तु कन्यसं प्रोक्तं यथाविभवमुच्यते
माणिक्यमुक्तावैडूर्यमिन्द्रनीलप्रवालकम् ४५
पञ्चरत्नमिति प्रोक्तं ग्राह्यालाभे हिरण्मयम्
षडङ्गुलसुविस्तीर्णं विधानकमिति स्मृतम् ४६
एवं संस्कृत्य विधिवत् सद्यमन्त्रसमुच्चरन्
सकलं शिवरूपं तु ध्यात्वा तु सकलीकृतम् ४७
सङ्गृह्य वामदेवेन स्थापयित्वा विचक्षणः
अघोरेण ततो विद्वान् अस्त्रेणैवावकुण्ठयेत् ४८
तालमुद्रां ततः कृत्वा बीजमुद्रां तथैव च
पद्ममुद्रां ततो बध्वा शिखराख्यं तथैव च ४९
हृदयेणैव मन्त्रेण स्थापये स्थण्डिलोपरि
गन्धाद्यैरर्चयित्वा तु स्थाप्यमष्टोत्तरं शुभम् ५०
सकूर्चं सापिधानं च सद्रव्यं सापि दैवतम्
पञ्चावरणमार्गेण स्थापयेत्तु प्रदक्षिणम् ५१
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्

क्षीरं दधि घृतं चैव प्रथमावरणे तथा ५२
मधुलाजसकृच्चूर्णं लाजचूर्ण हरिद्रकम्
भस्ममिक्षुरसं चैव कदलीफलमेव च ५३
तिलं वै सर्षपं चैव पनसं नालिकेरकम्
नारङ्गद्वितयं चैव मातुलङ्गं च डाडिमी ५४
एतानि षोडशा प्रोक्ता द्वितीयावरणे तथा
पूजितं कलशा ह्येतैः यथालाभेन वा पुनः ५५
प्रक्षिप्य जलसंपूर्णान् कलशान् विन्यसेत्क्रमात्
चन्दनं लघुकोष्ठं च खचोरं पुष्पपत्रकम् ५६
कर्पूरहिरिवेरं च दान्तमांसी मुरं तृणाम्
तृतीयावरणे ह्येते द्वादशः परिकीर्तितः ५७
चम्पकं सहदेवीं च शतपत्री च रोपहा
बिल्वं शमी यवा दूर्वा तक्कोलं मेघमेव च ५८
धात्री शौचफलैला च लक्ष्मीं स्थूलारविन्दकम्
रास्ना चा व्यापलाशं च श्वेतार्कं करवीरकम् ५९
धातकी च तथा द्रोणा धुत्तूरं लोध्रमेव च
अपामार्गं च पार्थं च प्लक्षं वै हस्तिपिप्पली ६०
विष्णुक्रान्ती तथा चैव अश्वत्थं नागकेसरम्
चतुर्थावरणा ह्येते पूर्वाद्याश्च प्रदक्षिणम् ६१
तुलसी तगरुं चूर्णा तुरुष्कं ते ते गजी तथा
विलङ्गं जीरकं चैव करवी च हरेणकम् ६२
श्रीवेष्टकं गन्धरसं फलनी रक्तचन्दनम्
सौरीयकं व्याघ्रनखं वल्लकी चतुरङ्गुलम् ६३
दर्वी शुक्तिनखी चारु सिता चैव कुटन्नटम्
गुग्गुलुं चैव मुद्गा चा श्रीसिरोगिरिकर्णिका ६४
पटशृङ्गे द्वयावाभ्यां वर्णजम्बू मनश्शिला

शङ्खिनी भृङ्गराजश्च नीवारं गैरिकं तथा ६५
आम्रमोजरसं चापि जाजीपाटलिमर्जुनम्
पञ्चमावरणे ह्येते प्रोक्ताः पूर्वादितः क्रमात् ६६
एवं द्रव्यं समाख्यातं देवता वक्ष्यतेऽधुना
अधर्मादी च धर्मादिप्रथमावरणे तथा ६७
विद्येशान् लोकपालांश्च द्वितीयावरणे तथा
लोकपालास्तथा दिक्षु विद्येशास्तु विदिक्षु च ६८
तृतीयं द्वादशादित्यं वास्तुबाह्ये चतुर्थके
पञ्चमावरणे प्रोक्तमनुपूर्वक्रमेण तु ६९
भवोऽनन्तो महेशं च यज्ञो वामस्तथैव च
पूर्वे पञ्चदशा प्रोक्ता पूर्वायां दिशि संस्थिताः ७०
शर्वश्चैव त्रिमूर्तिश्च पावकः शक्तिमेव च
ज्येष्ठा च पञ्चमः प्रोक्ता आग्नेयां दिशि संस्थिताः ७१
पशोः पतिस्तथा सूक्ष्मा यमो दण्डस्तथैव च
रुद्रास्तु पञ्चमः प्रोक्तो याम्यायां दिशि संस्थिताः ७२
उग्रश्चैव तु श्रीकण्ठो निर्ऋृती खड्ग एव च
कालस्तु पञ्चमः प्रोक्तो निर्ऋृत्यां दिशि संस्थिताः ७३
रुद्रश्शिवोत्तमश्चैव वरुणः पाश एव च
कलविकरणश्चैव वारुण्यां दिशि संस्थिताः ७४
भीमश्चैव शिखिण्डी च वायुश्चाथ ध्वजस्तथा
बलप्रमथनश्चैव सौम्यायां दिशि संस्थिताः ७५
ईश्वरश्चैव रुद्रश्च ईशानश्शूल एव च
मदनस्सर्वभूताद्यामीशान्यां दिशि संस्थिताः ७६
गन्धाद्यैरर्चयित्वा तु स्वनाम्ना देशिकोत्तमः
अर्घ्यं दत्वा यथान्यायं तत स्नपनमारभेत् ७७
लिङ्गपीठस्थलानां तु शुद्धिं कृत्वा विचक्षणः

देवतानामधेयेन स्नाप्य लिङ्गं परावरम्  ७८
व्योमव्यापि समुच्चार्य आवृतोऽन्तेऽभिषेचयेत्
अथार्चनविधिप्रोक्तं सर्वमन्त्रैस्तु कारयेत्  ७९
पञ्चाथावरणैर्वाथ चतुर्भिर्वास्त्रिभिस्तु वा
बाह्यमावरणाद्य वा प्रथमावरणेन वा  ८०
देवताद्रव्यसम्बन्धमेवमेव प्रयोजयेत्
यथालाभैर्बुधः कुर्यादात्मा वित्तानुसारतः  ८१
हविर्दद्याद्विशेषेण शुद्धान्नं पायसं तथा
गुलान्नं चेति मुद्गान्नं हरिद्रं चेति पञ्चधा  ८२
आचार्यं पूजयित्वा तु यथावद्विधिपूर्वकम्
पूजानान्तः क्रियाः सर्वा यथावद्विधिपूर्वकम्  ८३
देवार्चनरतः कुर्युः सफलत्वमवाप्नुयुः
क्रिया पूजनया हीना निष्फलत्वं सदा भवेत्  ८४
क्रिया शरीरमित्युक्तः पूजना जीवमुच्यते
क्रिया पूजनया हीना निर्जीवं तु स निष्फलम्  ८५
क्रिया वैकल्प्यता चापि पूजायां सकलं भवेत्
अङ्गहीनो यथा मर्त्यः चिरं जीवति जीवन्  ८६
एवं कृते महाशान्ति राज्ञो राष्टस्य निश्चया
धनधान्यप्रवृद्ध्यर्थं भोगमोक्षप्रदायका  ८७
इति स्वायम्भुसूत्रे एकचत्वारिंशतितमः पटलः

## नैवेद्यप्रमाण

अथ वक्ष्ये प्रमाणं तु नैवेद्यस्य विधानतः
भक्त्या वित्तानुसारेण नैवेद्यं तु प्रकल्पयेत्  १
पूर्वं पक्वं तु यद्द्रव्यं भोज्यं दत्वा शिवस्य तु
वर्धते तस्य तद्धान्यं फलपुष्पादयस्तथा  २

अदत्वा तु शिवस्याथ यद्भुक्तं क्षीयते धनम्
आपेल भवति वा तुल्यं फलमप्यदरिद्रयोः ३
दत्वा शिवस्य नैवेद्य कल्याणं कारयेद्बुधः
अदत्वा तु कृतं यत्तु कल्याणमशुभाय वै ४
कल्याणं नैव कल्याणं कृतं चापि विनश्यति
कर्तव्यं सकलं नृणां नैवेद्यं विधिपूर्वकम् ५
शालीनां तण्डुलश्रेष्ठं यवं वेणु भवस्तथा
अलाभे चैव सर्वेषां व्रीहीणां तण्डुलैस्तथा ६
शतद्वयं पञ्चविंशद्व्रीहिभिः पूरितं तु यत्
शुक्तिमात्रमिति ख्यातं मानं तेनैव कल्पयेत् ७
तद्वयं तलमित्युक्तं प्रकुञ्च स्यात्तलद्वयम्
प्रसृतिस्तु द्वयं प्रोक्तं कुडुपं प्रसृतिद्वयम् ८
अञ्जलिस्तु द्वयं प्रोक्तं प्रस्थ स्यादञ्जलिद्वयम्
पात्रं प्रस्थद्वयं प्रोक्तमाढकं तद्वयं भवेत् ९
तद्वया शिवमित्युक्तं द्रोणं विद्याच्छिवद्वयम्
द्रोणद्वयं भवेत्खारी भारं स्वा त्रयं भवेत् १०
उत्तमं स्याच्छतद्रोणं तण्डुलैः कथितं हविः
तदर्धं मध्यमं प्रोक्तमधमं तु तदर्धकम् ११
एवं विशेषतः प्रोक्तं नित्यानामधुनोच्यते
उत्तमोत्तममित्युक्तमष्टद्रोणैस्तु तण्डुलैः १२
अधिकं यद्भवेत्तस्मात् प्रोक्तं सर्वं महाहविः
षड्द्रोणैस्तण्डुलं प्रोक्तं हविरुत्तममध्यमम् १३
द्रोणं हीनं हविस्तस्मादुत्तमाधममिष्यते
द्रोणेन तण्डुलेनाथ नैवेद्यमधमोत्तमम् १४
तस्य मध्यममित्युक्तमाढकद्वयसंमितम्
आढकेन तु संस्निग्धमधमाधममुच्यते १५

तण्डुलैराढके हीनं नैवेद्यन्नं प्रकल्पयेत्
चरुप्रस्थद्वयं प्रोक्तं हविराढकमुच्यते १६
प्रस्थं कुडुपसंयुक्तपिशाचानां बलिर्भवेत्
गन्धवर्णरसैर्दुष्टा अग्राह्या तण्डुलास्तथा १७
प्रक्षाल्य तण्डुलान् सम्यक् निष्पी च मुहुर्मुहुः
सकृत् प्रक्षालयेत् सम्यक् षडङ्गेन तु मन्त्रतः १८
ज्ञात्वा तु युक्तितस्सम्यक् सद्येन प्रक्षिपेज्जलम्
उद्धृत्य वामदेवेन तण्डुलानर्चयेद्धृदा १९
विन्यस्याग्निमघोरेण अस्त्रेणाग्निं प्रदीपयेत्
पिपीलिकाश्रितैश्चापि क्रिमिकोटरसंयुतैः २०
विष्फुलिङ्गयुतैश्चापि काष्ठैरग्निर्न दीपयेत्
धूम्रवर्णपरिक्लिन्नमतिपक्वं च शीतलम् २१
केशकीटोपविद्धं च त्यजेत् पर्युषसिस्तथा
एवमुक्तस्तु शुद्धान्नं पायसं चाधुनोच्यते २२
तण्डुलद्विगुणं क्षीरं मुद्गं स्यात्तण्डुलार्धकम्
पाचितं पायसं प्रोक्तं गुडान्नमधुनोच्यते २३
पायसं पूर्ववत्कृत्वा चतुर्भागं गुडं क्षिपेत्
गुडार्धं प्रक्षिपेदाज्यं गुडान्नमिति कीर्तितम् २४
तण्डुलार्धं तु मुद्गा स्युः मुद्गान्नमिति कीर्तितम्
मरीचरजनीयुक्तं जीरकं सर्षपं तथा २५
आलोड्य पाचितं ह्येतत् हरितालं प्रकीर्तितम्
हविषा भेद इत्युक्तः प्रवक्ष्याम्युपदंशकः २६
मुद्गं शिम्बकुलस्थं च राजमाषाढकी तथा
कदलीपनसं चाथ कूश्माण्डं बृहती तथा २७
त्रपुषोर्वारुकं चाथ कालिङ्गन्तं विशेषतः
कन्दमूलफलं चान्ये रासाढ्या उपदंशकान् २८

गुडखण्डसमायुक्तमाज्ययुक्तं दधीघृतम्
हविः कृत्वा चतुर्भागमूर्ध्वभागं निवेदयेत् २९
सौवर्णराजते पात्रे कांस्यो वापि निवेदयेत्
पञ्चब्रह्म समुच्चार्य नैवेद्यं तु निवेदयेत् ३०
वामदेवेन मन्त्रेण दद्यादाचमनीयकः
तदर्धं बलिदानार्थमन्नं गन्धादिकं तथा ३१
गृहीत्वा द्वारपार्श्वे च महाकालाय दापयेत्
नन्दिं समर्च्य ते तस्य बलिं दद्याद्वृषादिकम् ३२
अक्षिद्वयप्रमाणं तु बलिदानं प्रकीर्तितम्
द्वारस्य दक्षिणे पार्श्वे नन्दीशाय प्रदापयेत् ३३
द्वारस्य वामपार्श्वे तु महाकालाय दापयेत्
वृषभाय ततो दद्यात् पुरतोऽग्नौ तु सौत्रिकम् ३४
याम्ये मातृगणानां तु विघ्नेशाय तु नैर्ऋते
स्कन्दाय वारुणे भागे ज्येष्ठायै वायुगोचरे ३५
दुर्गायै सौम्यदिग्भागे ईशान्यां भास्कराय तु
ततः पुरस्थिते पीठे बलिं दत्वा विशेषतः ३६
यक्षराक्षसपैशाचाभूतगन्धर्वकिन्नराः
पितृदानवनागाश्च ब्रह्माद्यैशानमन्त्रिकम् ३७
प्रणवाद्यं चतुर्थ्यन्तं स्वनामपदमध्यगम्
स्वाहान्तं बलिनिर्देशं सर्वेभ्य इति योजयेत् ३८
ततो गर्भगृहं गत्वा दद्यादाचमनीयकम्
निर्माल्यं तु समादाय चण्डेशाय निवेदयेत् ३९
चण्डस्याचमनं दद्यान्निर्माल्यं तु विसर्जयेत्
ततोऽग्निकार्यमाग्नेय्यं कुर्याद्धृतसंप्लवम् ४०
परिस्तीर्य ततो दर्भैः कृत्वा तु परिषेचयेत् ४१

अथ वक्ष्येऽर्चनान्ते तु विधानं बलिकर्मणा
सौवर्णमुत्तमं प्रोक्तं सजतं मध्यमं भवेत् १
अधमं ताम्रपात्रं तु त्रिविधं बलिपात्रकम्
त्रिकालमुत्तमं प्रोक्तं द्विकालं मध्यमं भवेत् २
विस्तारेण समाख्यातं तयोर्मध्यममध्यमम्
तस्य मध्ये त्रिभागैकं कर्णिकाङ्गुलमुच्छ्रितम् ३
परितोऽष्टन्ततः कुर्यात् कर्णिकोच्छ्रयमानतः
शिवाग्रे स्थण्डिलं कृत्वा दद्यात्पुष्पासनं ततः ४
सर्वशक्तिसमोपेतं कर्णिकादलसंयुतम्
गन्धादिभिस्समभ्यर्च्य पात्रं तत्रैव विन्यसेत् ५
पात्रमध्ये तु कर्तव्यं बलिलिङ्गं विधानतः
पुष्पलिङ्गं तु पूर्वाह्णे प्रदोषार्घ्यं विशेषतः ६
अन्नलिङ्गं तु मध्याह्ने कारयेत् स्वप्रमाणतः
षोडशाङ्गुलमुत्सेधमुत्तमं तत्प्रचक्षते ७
द्वादशाङ्गुलमुत्सेधं मध्यमं समुदाहृतम्
अधमं तु समाख्यातमष्टाङ्गुलसमुच्छ्रितम् ८
उत्सेधं द्विगुणं नाभं मूलं तत्परिकीर्तितम्
अग्रमङ्गुलविस्तारं कृत्वा सम्पूजयेत्ततः ९
अस्त्रराजानमावाह्य हृदयेनैव मन्त्रतः
चतुर्भुजं त्रिणेत्रं च शिखाकोटिसमुज्ज्वलम् १०
अभयं दक्षिणं चैव वरदं वामहस्तकम्
गृहीत्वा शूलदण्डाग्रं दक्षिणेन करेण तु ११
त्रिशूलं दण्डमूलाग्रं वामेनैव करेण तु
गृहीत्वा रौद्रदृष्टिस्तु कुर्यात्पाशुपदास्त्रकम् १२
ईशानादि समभ्यर्च्य सद्येनार्घ्यं तु कल्पयेत्
गन्धादिभिस्समभ्यर्च्य ततो घण्टां प्रहारयेत् १३

सोष्णीषस्सोत्तरीयस्तु सर्वदेवमनुस्मरन्
बलिपात्रं समादाय धारयेच्छिरसा हृदा १४
प्रदक्षिणं ततः कृत्वा तूर्यशङ्खरवैर्युतम्
वितानच्छत्रसंयुक्तं पिञ्छचामरसंयुतम् १५
धूपदीपसमायुक्तं शनैः कुर्यात् प्रदक्षिणम्
किङ्किणीतालवाद्यं तु प्रथमे तु प्रदक्षिणम् १६
ततोऽष्टपरिवाराणां द्वितीये तु प्रदक्षिणम्
वृषस्य वृषतालं तु सोमस्याथ च ढङ्किणी १७
मातृणां चन्द्रवाद्यं च विघ्नेशस्य तु ढङ्करी
षण्मुखस्योत्कटं चैव ज्येष्ठायां कुन्त्रितालकम् १८
तलप्रहारं दुर्गायां विषमं छिन्नचण्डके
साङ्करी बलिपीठस्य प्रविश्याह्यन्तरं ततः १९
इन्द्रस्य समतालं तु अग्नेर्मन्त्रापणं तथा
यमस्य भृङ्गिनीतालं नैर्ऋत्यामुल्लतालकम् २०
वारुणे नवतालं तु वायव्यां बलितालकम्
सौम्ये तद्धोटरागं तु ईशान्यां चैव ढङ्करी २१
एवं वाद्यविशेषेण त्रिः कृत्वाथ प्रदक्षिणम्
ततः प्रदक्षिणं कुर्यात् प्रसादेन्द्रादिदैवतम् २२
प्रविश्य गर्भगेहं तु तच्चार्घ्यं पुरुषेण तु
हृदयेणास्त्रराजानं ततो मन्त्रविसर्जयेत् २३
ततोपहारं चण्डायां चण्डमन्त्रेण दापयेत्
यदा प्रदक्षिणे काले लिङ्गं पतति यत्र तु २४
तत्र होमं प्रकर्तव्यं तन्मन्त्रेण शताहुतीः
त्रिकालदिवसे हीने स्नपनं कारयेत्ततः २५
बलिवाद्यं ततः कृत्वा भूता नागाश्च राक्षसाः
सिद्धविद्याधरश्चैव यातुधानाश्च किङ्कराः २६

ग्रामबाह्यं ततो गत्वा धनधान्यसमृद्धिदम्  २७
इति स्वायम्भुसूत्रे बलिविधिपटल चत्वारिंशत्

अतः परं प्रवक्ष्यामि प्रायश्चित्तं विधिक्रमम्
प्रायो विनाश इत्यर्थः चित्तं सन्धानमिष्यते  १
विनाशस्य त सन्धानं प्रायश्चित्तमिति स्फुटम्
कालान्तरगते सर्वे विनश्यन्ति स्वभावतः  २
तस्मात्तत्साधनार्थं तु वक्ष्यते सकलं मया
प्रासादपतिते भिन्ने लिङ्गे च पतिते तथा  ३
चलिते स्फुटिते लिङ्गे वल्मीकानां च दर्शने
अग्निदग्धे तथा गेहे लिङ्गे दग्धे तथैव च  ४
जीर्णे चैव तथा पीठे विश्लिष्टे बन्धनादिभिः
विश्लिष्टे च तले वापि सुधाकर्म विहीनके  ५
गजैर्वा चलिते लिङ्गे निम्नगा स्रोतसा तथा
तथापि सूतके स्पृष्टे स्पृष्टे वा तस्करैरपि  ६
चण्डालस्पर्शने चापि पतितान्त्यजकश्मलैः
श्वसृगालवराहैश्च कुक्कुटैर्वायसैस्तथा  ७
अथान्त्यजातिसंस्पर्शे लिङ्गे गर्भगृहे तथा
परिवारे तु विच्छिन्ने दूषितैर्दूषितैरपि  ८
नित्यार्चनविहीने च बलिकर्मविहीनके
होमविहीने च स्नपनाङ्गविहीनके  ९
संवत्सरोत्सवे हीने शूलादि पतिते तथा
दशायुधानि विच्छिन्ने प्रायश्चित्तं विधीयते  १०
प्रासादं पतिते चैव बालस्थानं च कारयेत्
प्रासादं प्रोक्षणं कृत्वा प्रोक्षणं कारयेत्ततः  ११
प्रासादे वह्निना दग्धे कृत्वा वै पूर्ववत्ततः

जलसंप्रोक्षणं कृत्वा ब्राह्मणान् भोजयेत्ततः १२
अग्निना स्फुटिते लिङ्गे जीर्णोद्धारं तु कारयेत्
दूषिते च तथा लिङ्गे दग्धे चापि विशेषतः १३
यथाशक्त्या तथा गव्यैरभिषेकं तु कारयेत्
प्रासादे च तथा भिन्ने संश्लिष्टं कारयेत्ततः १४
पूर्वोक्तेन विधानेन स्नपनं तत्र कारयेत्
पतिते च तथा लिङ्गे स्फुटिते चलिते तथा १५
व्यपोह्य लिङ्गं पूर्वस्थं लिङ्गं तु स्थापयेन्नवम्
प्रासादे वाथवा गर्भवल्मीकं तत्र दृश्यते १६
तत्प्रदेश खनित्वा तु पूरयेद्वालुके तथा
यथापूर्वं ततः कृत्वा स्नपनं कारयेत्ततः १७
अग्निना स्फुटिते लिङ्गे जीर्णोद्धारं तु कारयेत्
मूर्तिहोमं ततः कृत्वा स्नपनं कारयेदथा १८
जीर्णे चापि तथा लिङ्गे कृत्वा पीठं तथैव च
जलसंप्रोक्षणं कृत्वा ब्राह्मणान् भोजयेदथा १९
विश्लिष्टे च तथा पीठे कारयेदष्टबन्धनम्
लाक्षासर्जरसं सिक्तं कुरुविन्दं सुगुग्गुलम् २०
गैरिकागुलतैलं च अष्टबन्धं प्रकीर्तितम्
अन्त्यभागविवृद्धिस्यात्पाकचिक्कणवद्भवेत् २१
वेलालवङ्ककर्पूरकुङ्कुमागरुचन्दनैः
लिङ्गमालिप्य सर्वत्र नववस्त्रेण वेष्टयेत् २२
शुद्धिं कृत्वा ततः पीठं पूरयेद्वालुकैरथ
सुस्निग्धं कारयेदाथ दिशाहोमं तु कारयेत् २३
स्नपनं कारयेत्तत्र यथाविभवविस्तरम्
विश्लिष्टे च तले चापि स्निग्धं कृत्वा तु पूर्वतः २४
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कृत्वा विशेषतः

पञ्चशुद्धिं ततः कृत्वा पूजयेत्तु विचक्षणः २५
सुधाकर्मविहीने तु गर्भगेहे विशेषतः
सुधाकर्मन्ततः कृत्वा पञ्चगव्येन पूरयेत् २६
गजैर्वा चलिते लिङ्गे तल्लिङ्गं विधिना पुनः
स्थापये स्थापको विद्वान् चण्डयागसमन्वितम् २७
चलिते च नदीस्रोतैः शतदण्डविसृज्य च
स्थाप्य लिङ्गं शुचौ देशे प्रासादं कारयेदथा २८
प्रतिष्ठां कारयेत्तत्र यथाशास्त्रविनिश्चितम्
प्रतिष्ठितस्य लिङ्गस्य यावद्वै पीठबन्धनम् २९
तावत्प्रतिदिनं कुर्यात् शान्तिहोमं विशेषतः
सूतकै स्पर्शने चापि स्पचनं कारयेदथ ३०
प्रेतकस्पर्शने चापि मूर्तिहोमं तु कारयेत्
स्नपनं कारयेत् तत्र सुबुद्ध्या वै कृते तथा ३१
अबुध्वा स्पर्शने चापि मृद्भाण्डानि विसर्जयेत्
पञ्चशुद्धिं क्रमात् कृत्वा पूजयेत्तु विशेषतः ३२
तस्करस्पर्शने चापि मृद्भाण्डानि विसर्जयेत्
प्रोक्षयेत् पञ्चगव्यैस्तु पुण्याहं तत्र कारयेत् ३३
शान्तिहोमं ततः कृत्वा स्नपनं तत्र कारयेत्
चण्डालस्पर्शने चापि पतिते चान्त्यजातिभिः ३४
जलसंप्रोक्षणं कृत्वा चण्डयागं तु कारयेत्
दिशाहोमं ततः कृत्वा पुण्याहं तत्र कारयेत् ३५
परिवारे तु विच्छिन्ने पुनर्बन्धं तु कारयेत्
तन्मन्त्रेण शतं हुत्वा स्थापयेत् स्वस्वमन्त्रतः ३६
दूषितैः पुरुषैस्पृष्टे प्रोक्षयेत्पञ्चगव्यकैः
पुण्याहं तत्र कृत्वा तु प्रोक्षयेत्तु शिवाम्भसा ३७
श्वादिभिर्दूषिते चैव परिवारे स्वमन्त्रकैः

पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कृत्वा तु पूजयेत् ३८
नित्यार्चनविहीने तु सन्ध्यायां द्विगुणार्चनम्
सन्ध्यातिक्रमणे चैव शान्तिहोमं तु कारयेत् ३९
द्विसन्धाभ्यां तु विच्छिन्ने स्नपनं कारयेदथ
पञ्चाहे स्नपनं कृत्वा शान्तिहोमं तु कारयेत् ४०
अर्धमासे दिशाहोमं स्नपनं चैव कारयेत्
मासादूर्ध्वं तु विच्छिन्ने जलसंप्रोक्षणं तथा ४१
बलिकर्मविहीने तु दिवसे स्नपनं भवेत्
बलिलिङ्गे तु विच्छिन्ने तद्दिशाहोममुच्यते ४२
नित्यं नैमित्तिकं कर्म विच्छेदं संभवेद्यदि
द्विगुणं तत्र कर्तव्यं तच्छान्त्यर्थं विशेषतः ४३
होमकर्मविहीने तु अघोरेण शताहुतीः
स्नपनाङ्गे तु विच्छिन्ने व्यपोह्याभ्यां तु कारयेत् ४४
अर्चयित्वा तु गन्धाद्यैस्तन्मन्त्रैस्तु शतं जपेत्
साधितो कलशे भिन्ने स्फुटिते पतिते तथा ४५
गृहीत्वा नवमन्यं तु साधयित्वा तु पूर्ववत्
तन्मन्त्रेण शतं जप्त्वा पूजयेद्ध्यानसंयुतम् ४६
संवत्सरोत्सवे हीने दिशाहोमं तु कारयेत्
तदग्रे स्नपनं कृत्वा प्रारम्भेदुत्सवं ततः ४७
ग्रामप्रदक्षिणे काले शूलादिपतनं यदि
तन्मन्त्रेण शतं जप्त्वा पूजयित्वा विधानतः ४८
प्रदक्षिणं ततः कृत्वा प्रासादं प्रविशेत्ततः
तदर्धं वा तदर्धं वा तदर्धार्धमथापि वा ४९
तत्तन्मन्त्रमनुस्मृत्य जुहुयाद्दोषशान्तये
आयुधानन्तु विच्छेदे तद्रूपं कारयेदथा ५०
हुत्वा तदस्त्रमन्त्रेण पूर्वोक्तं कारयेत्ततः

ध्वजे वा पतिते भिन्ने छिन्ने नष्टेऽथवा पुनः ५१
ब्राह्मणान् भोजयेत्तत्र पुण्याहं वाचयेदथ
स्नपनं तत्र कुर्वीत चण्डयागं तु कारयेत् ५२
ध्वजमुत्थापयेदन्यध्वजोत्थानक्रमेण तु
अथ ब्रह्मैश्शिवाङ्गैश्च विद्याङ्गैश्च शिवेन तु ५३
हुत्वा घोरेण मन्त्रेण जुहुयात्तु शताहुतीः
शान्तिहोममिति ख्यातं सर्वदोषनिकृन्तनम् ५४
सर्वदोषसमुत्पन्ने अनुक्तेन विधानतः
शान्तिहोमं तु कर्तव्यं विशेषं चापि पूजनम् ५५
प्रासादस्य चतुर्दिक्षु शान्तिहोमं तु कारयेत्
स्थण्डिलं वालुकैः कृत्वा निर्दोषैर्विधिना ततः ५६
अग्निं प्रज्वालयेत्पूर्वं पञ्चसंस्कारसंस्कृतम्
प्लक्षोदुम्बरजाश्वत्थवटाः पूर्वादितः क्रमात् ५७
प्रत्येकं तु सहस्रं वा तदर्धं शतमेव वा
तस्यादिभिः क्रमेणैव जुहुयात्तु घृतप्लुतैः ५८
आज्येन चरुणा वापि जुहुयात्तु तथैव तु
ईशानेन तु मन्त्रेण चतुर्दिक्षु घृतप्लुतैः ५९
तण्डुलैस्तिलसंयुक्तैः जुहुयात्तु शताहुतीः
आदावन्ते च कर्तव्यमग्निकार्यविधानतः ६०
दिशाहोममिति ख्यातं प्रायश्चित्तविधौ तथा
अग्रतस्थण्डिलं कृत्वा सर्वालङ्कारसंयुतम् ६१
अष्टदिक्षु भवाद्यष्टमूर्तिमन्त्रैर्विधानतः
समिदाज्यचरूक्षीरयवैरष्टशताहुतीः ६२
मध्ये तु कलशान् स्थाप्य स्नपयेद्वित्तानुसारतः
मूर्तिहोममिति ख्यातं विशेषं चात्र पूजनम् ६३
एवं यस्तु विधानेन प्रायश्चित्तं समाचरेत्

ग्रामवृद्धिकरं चैव धनधान्यसमृद्धिदम् ६४
इति स्वायम्भुसूत्रे प्रायश्चित्तविधिः चतुश्चत्वारिंशति पटलः

अथाद्भुताना शान्तिस्तु वक्ष्ये दोषनिवृत्तये
भूमिकम्पे दिशां दाहे प्रतिसूर्यप्रदर्शने १
रात्राविन्द्रधनुं दृष्ट्वा दिवा नक्षत्रदर्शने
एवमादि समुत्पन्ने राज्ञो राष्ट्रस्य नाशकृत् २
शान्तिमेवं समुत्पत्तौ त्रिसप्ताहस्त कारयेत्
प्रासादे पतिते चैव चैत्यवृक्षनिपातने ३
जाते जनपदव्याधौ ग्रामस्यैव विदोषकृत्
शान्तिं कुर्याद्विसप्ताहमेवमादि प्रदर्शने
प्रासादे तु मधूत्पत्तौ रक्तकन्या समुद्भवेत् ४
प्रविष्टे पिङ्गलोलूके मृगे वल्मीकवायसैः
एवमादि समुत्पन्ने व्यपोह्य सकलं ततः ५
पञ्चगव्येन संप्रोक्ष्य शान्तिं सप्ताहमुच्यते
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ६
दिशाहोमं ततः कुर्यार्मूर्तिहोममथापि वा
स्नपनं च तथा नित्यं यथा वित्तानुसारतः ७
याज्ञिकं वृक्षमादाय पार्श्वयोः पृष्ठतस्तथा
कृत्वा न्त्रिपादिकान् तत्र यथालिङ्गं तु मध्यमम् ८
द्रोणद्वयप्रपूर्णं तु कुम्भं वै सापिधानकम्
सुवर्णनालिकायुक्तं त्रिसूत्रेण विचित्रितम् ९
पञ्चरत्नसमायुक्तं नववस्त्रसमावृतम्
एलालवङ्गकर्पूरत्रपुजातिफलैर्युतम् १०
क्षीरेण चोदकेनाथ पूर्णितं तत्र विन्यसेत्
यथा धारा प्रपद्येत पतते लिङ्गमस्तके ११

संपूज्य विधिवद्देवं त्रिकालं चैव विन्यसेत्
शिवकुम्भमिति ख्यातं सर्वदोषनिकृन्तनम् १२
अनेन शिवकुम्भेन ज्वरमारी विनाशयेत्
आज्यप्रस्थसहस्रैस्तु शतकुम्भेषु पूरयेत् १३
शतरुद्राधिदैवत्यं पूजयित्वा विधानतः
स्नाप्य देवं ततो विद्वान् रुद्रसूक्तं समुच्चरन् १४
ईशान्यां दिशि बाह्ये तु काष्ठैरग्निप्रदीपयेत्
तत्राग्नौ घृतमावर्ज्य दीपयेदिन्धनैस्ततः १५
एवं कृते भवेच्छान्तिं सर्वारिष्टविनाशनम्
प्रतिसंवत्सरं चैव यः कुर्यादभिषेचनम् १६
सर्वदोषनिवृ+र्थं सर्वव्याधिहराय च
अद्भुतानि च शम्यन्ति धनधान्यश्च वर्धते १७
गुरून् सर्वान् समुद्धृत्य रुद्रलोके महीयते
इति स्वायम्भुसूत्रे अद्भुतशान्ति पञ्चचत्वारिंशतिपटलः

अथ वक्ष्ये विशेषेण करणानां तु लक्षणम्
कार्यं कर्तुं न शक्यं स्यात् सर्वदा करणैर्विना १
तस्माल्लक्षणसंयुक्ता कर्तव्यं करणास्तथा
कुण्डानां लक्षणं चैव ततः स्रुक्स्रुवौ यास्तथा २
लक्षणं होमपात्राणां परिधीनां तथैव च
परिस्तरणदर्भाणां समिधा लक्षणं तधा ३
आहुतीनां प्रमाणं च तथा स्नानोदकस्तथा
पाद्यमाचमनीयं च अर्घ्यं चापि विशेषतः ४
गन्धपुष्पं च धूपं च दीपं चापि यथाविधिः
वितानलक्षणं चैव प्रच्छिन्नपटलक्षणम् ५
धूपघण्टा महाघण्टा धूपपात्रस्य लक्षणः

ध्वजदण्डप्रमाणं तु बलिदानस्य लक्षणम् ६
एतेषां लक्षणं वक्ष्ये यथाशास्त्रविनिश्चितम्
पूर्वाग्रमुत्तराग्रं च कुर्यात्सूत्रद्वयं पुनः ७
चतुरश्रीकृते क्षेत्रे कुण्डानामथ लक्षणम्
कर्णसूत्रचतुर्भाग कृत्वैकेन तु वर्तयेत् ८
क्षेत्रार्धादधिकं यावत् पार्श्वयोरुभयोरपि
कर्णसूत्रस्य सप्तांशं पूर्वायां दिशि विन्यसेत् ९
पार्श्वयोस्संभ्रमं कुर्या योन्याकारं तु कुण्डकम्
चतुरश्रीकृते क्षेत्रे मध्यान् कर्णं विगृह्य च १०
ततो विसृज्य क्षेत्रर्धं शेषं कुर्यात् त्रिभागिकम्
भागेनैकेन संयुक्तं क्षेत्रार्धेन तु योजयेत् ११
वर्तयेत्तेन सूत्रेण वर्तुलं कुण्डमुच्यते
चतुरश्रं तु कर्णं तु कृत्वा मत्रैव पूर्ववत् १२
वर्तितं वर्तुलं कुण्डं तस्यार्धं धनुरुच्यते
क्षेत्रस्याद्यर्धमानेन सहैकादशभागिकम् १३
सूत्रद्वयमनेनैव त्रिकोणं समुदाहृतम्
क्षेत्रं तु सप्तधा कृत्वा भागमेकं च हि न्यसेत् १४
तस्मान्मध्यस्य हीत्वा तु भ्राम्य वृत्ते तथैव च
कर्णार्धाष्टांशसंयुक्तं कर्णार्धं यद्भवेदिह १५
सूत्रं तत्र भवेदेतत् पञ्चाग्रे तु भुजो भवेत्
प्रागादिसप्तसूत्रेण सप्ताग्रं भवति स्फुटम् १६
पद्मपत्रसमं प्रोक्तं कर्णिकादलसंयुतम्
एवं समासतः प्रोक्तं कुण्डानां लक्षणं परम् १७
वैकङ्कतमयो वाथ खादिरो वा स्रुवौ भवेत्
अथवा याज्ञिकैर्वृक्षैः कर्तव्यौ स्रुक्स्रुवौ बुधः १८
पालाशखदिराश्वत्थप्लक्षोदुम्बरचन्दनाः

वैकङ्कतशमीबिल्वयाज्ञिकास्तरवो नव १९
द्विधा कृत्वा ततो गर्भः सूत्रेण सुमितं तथा
चतुरश्रं ततः कृत्वा कुर्याल्लक्षणतो बुधः २०
रत्निमात्रसमायाम तत्पार्श्वे तु बिलं भवेत्
षडङ्गुलपरीणाहं दण्डमूले विधीयते २१
तदर्धे कण्ठनाभं स्यात् पुष्करं मूलवद्भवेत्
गोवालसदृशो दण्डस्त्रुवाग्रन्नाधिका समम् २२
पुटद्वयसमायुक्तं कर्षाज्येन तु पूरकम्
स्त्रुवस्य लक्षणं प्रोक्तं स्त्रुग्लक्षमथोच्यते २३
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलसुविस्तृतम्
उत्सेधं तु तदर्धं स्यात् सूत्रेण सुमितं ततः २४
सप्ताङ्गुलभवेदास्यं विस्तारायामतोऽपि हि
त्रिभागैगं भवेदग्रं कृत्वा शेषं परित्यजेत् २५
कण्ठं तु द्व्यङ्गुलायामं विस्तारं चतुरङ्गुलम्
वेदिकाष्टाङ्गुलायामं विस्तारं तत्प्रमाणतः २६
तस्य मध्ये बिलं कुर्याच्चतुरङ्गुलमानतः
बिलं सुवर्तितं कुर्यादष्टपत्रं सुकर्णिकम् २७
परितो बिलबाह्ये तु पट्टिकार्धङ्गुलेन तु
तद्बाह्ये यवनिम्नं तु पद्मपत्रविचित्रितम् २८
यवद्वयप्रमाणेन तद्बाह्ये पट्टिका भवेत्
वेदिकामध्यतो रन्ध्रं कनिष्ठाङ्गुलमानतः २९
खातं यवान्मखातं स्यात् बिलमानं तु निम्नगम्
दण्डं षडङ्गुलं नाभं दण्डाग्रे गण्डिकात्रयम् ३०
अर्धाङ्गुलविवृद्ध्यन्तु कर्तव्यं चतुरङ्गुलम्
त्रयोदशाङ्गुलायामं दण्डमूले घटो भवेत् ३१
द्वियङ्गुलं भवेत् कुम्भं नाभं विद्याद्दशाङ्गुलम्

वेदिमध्ये तथा कुम्भे पादं कुर्याद्वियङ्गुलम् ३२
पद्मपृष्ठसमाकारं पादे वै कर्णिकाकृतिः
गजोष्ठसदृशाकारं मत्स्यपृष्ठाकृतिर्भवेत् ३३
प्रोक्तं स्रुक्स्रुवयोरेवं पात्राणामधुनोच्यते
आज्यस्थाली प्रणीतां च प्रोक्षणीस्तिस्र एव च ३४
सौवर्णं राजतं ताम्रं मृण्मयं वाथ कारयेत्
षडङ्गुलसुविस्तीर्णं पात्राणां मुखमुच्यते ३५
प्रोक्षणी त्र्यङ्गुलोत्सेधं प्रणीतार्धाङ्गुलीधिका
आज्यस्थाली ततस्तस्मादुत्सेधार्धाङ्गुलीयकाः ३६
पात्राणां लक्षणं प्रोक्तं परिधीनामथोच्यते
यैस्समादाहृतं प्रोक्तं तैरेव परिधिर्भवेत् ३७
मध्याङ्गुलिपरीणाहमवक्रा निर्व्रणास्समाः
द्वात्रिंशदङ्गुलायामास्तिस्राः परिधयो मता ३८
परिधीनामथ प्रोक्तो दर्भाणामधुनोच्यते
स्त्रीपुंनपुंसकाख्याश्च त्रिविधास्समुदाहृताः ३९
स्त्रीलिङ्गामुदवश्यामा पुल्लिङ्गारुजवस्थिताः
अकोमलास्थिराश्चैव अग्राह्यास्तु नपुंसकाः ४०
स्त्रीलिङ्गास्त्रीक्रियायां तु पुल्लिङ्गा पुंस्क्रियासु च
षट्त्रिंशादङ्गुलायामैस्त्रिंशद्दर्भैः परिस्तरेत् ४१
चतुरङ्गुलमग्रे तु ग्रन्थितन्तुप्रदक्षिणे
वेन्निका वेष्टिका वाथ त्रिंशद्दर्भैस्तु विष्टन् ४२
प्रोक्तं परिस्तराणां च समिधामधुनोच्यते
समाग्रास्ससमास्थूलाः कनिष्ठाङ्गुलसंमिताः ४३
यथा सार्द्रा तथा शुष्काग्रन्थिरन्ध्रविवर्जिताः
अवक्रा निर्व्रणास्निग्धा द्वादशाङ्गुलसंमितः ४४
द्रव्याणां होमकाले तु प्रमाणमधुनोच्यते

गव्यं घृतं तथाश्रेण स्त्रुवपूर्णप्रमाणतः ४५
अन्नमक्षप्रमाणं स्यालाजानामुष्टिमात्रकम्
तिलसर्षपयोश्चैव शुक्तिमात्रं विधीयते ४६
यवापराटकुलस्थानां तदर्धं स्यात् प्रमाणतः
खराडत्रयं तु मूलानां +++ सप्रमाणतः ४७
पत्राणां पञ्चकं प्रोक्तं तराडुलास्तिलसंमिताः
क्षीरस्याथ मधो दध्न प्रमाणं घृतवद्भवेत् ४८
निष्पावमुद्गमाषानां प्रमाणं तिलवद्भवेत्
चतुस्त्रुवप्रमाणेन स्त्रुचा पूर्णाहुतिर्भवेत् ४९
तदर्धं स्विष्टकृत्प्रोक्तं शेषं सर्वमथापि वा
एवं प्रमाणद्रव्याणां स्नानोदकमथोच्यते ५०
कलुषं कृमिशैवालसंयुक्तं सूर्यवर्जितम्
गन्धवर्णरसैर्दृष्टमशुचिस्नानसंयुतम् ५१
पङ्काश्च दूषितैश्चैव सामुद्रं पल्लवोदकम्
अग्राह्यमुदकं ग्राह्यमेभिर्दोषैर्विवर्जितम् ५२
अष्टद्रोणैरथाद्भिस्तु स्नानकन्यासमुच्यते
अभिषेकमथाद्भिस्तु द्विगुणं मध्यमं भवेत् ५३
उत्तमं त्रिगुणैरद्भिरभिषेकमथोच्यते
अभिषेकोदकं प्रोक्तं पाद्यादीनामथोच्यते ५४
श्वेतसिद्धार्थकं दूर्वायुक्तं पाद्यमिहोच्यते
++रं चन्दनोपेतमथवा पाद्यमुच्यते ५५
एलालवङ्ककर्पूरत्रीन् पूजाश्रीफलान्वितम्
आप आचमनीयार्थमुशीरमथ चन्दनैः ५६
आपक्षीरकुशाग्राणि यवसिद्धार्थतराडुलैः
तिलैर्व्रीहिसमायुक्तैरर्घ्यमष्टाङ्गमुच्यते ५७
तराडुलं ++ सिद्धार्थतिलोदकसमन्विताः

अर्घ्यपुष्पजलोपेतमथवा समुदाहृतम्  ५८
पाद्यादिलक्षणं प्रोक्तं गन्धादीनामथोच्यते
++ चागरुं चैव कुङ्कुमं गन्धमुच्यते  ५९
एकद्वित्रितयं वापि कर्पूरेण चतुष्टयम्
गन्ध एवं समाख्यातं पुष्पाणामधुनोच्यते  ६०
श्वेतानि सात्विकान्याहुः राजसं रक्तमुच्यते
पीतानि मिश्रकान्याहुः न सितानि तमांसि च  ६१
++ तीतपुष्पाणि लूकसूत्रवृतानि च
केशकीटोपविद्धानि त्यजेत् पर्युषितानि च  ६२
श्वेतपद्मं तथा द्रोणं जातीमन्दारमल्लिका
नन्द्यावर्तं च पुन्नागं श्वेतार्कं कुरवं तथा  ६३
एतानि सात्विकान्याहु पूर्वात्पूर्वं गरीयसी
रक्तानि चैव पद्मानि तथा रक्तोत्पलानि च  ६४
धुत्तूरं बृहतीपुष्पं पाटलीकरविन्दकम्
एषां पुष्पाणि रक्तान्नि राजसानि तु निर्दिशेत्  ६५
दुर्धूरं चम्पकं चैव कर्णिकारं तथैव च
आरग्वधं च पीतानि मिश्रकाणि विनिर्दिशेत्  ६६
सात्विकं मोक्षफलदं राजसं वृद्धिकरणम्
मिश्रिकं द्विविसिद्ध्यर्थं पुष्पं पुत्रसमृद्धिदम्  ६७
शिरीबिल्वमपामार्गकु++ दूर्वासहास्तथा
पत्राण्येषां विशेषेण पूजार्थं च समुच्यते  ६८
निर्गन्धान्युग्रगन्धानि कु++ तु वर्जयेत्
बन्धूकडाडिमीपुष्पं जपाकुमुदचम्पकान्  ६९
यूथिकामदयन्ती च करञ्जं वकुलं तथा
शिरीषकेतकी ++ माकुली च वहीतकम्  ७०
एषां पुष्पाणि वर्ज्यानि पैशाचानि शुभानि च

ततो नीलोत्पलादन्यत् तामसानि तु वर्जयेत् ७१
सर्वेषाम + पुष्पाणि पुष्पं नीलोत्परं परम्
मन्त्रैराराध्य पुष्पाणि यथालङ्कारमुत्तमम् ७२
मालाभिरथ पट्टैश्च ग्रथितैः पूजयेच्छिवम्
एवं पुष्पं समाख्यातं धूपलक्षणमुच्यते ७३
कृष्णागरुभवेदेकं निर्व्यासं द्विगुणं भवेत्
त्रिगुणं चन्दनं प्रोक्तमीषत्कर्पूरमिश्रितम् ७४
शितारिर्नामविख्यातौ धूपोऽयं मधुसंयुतम्
एष धूपं परं प्रोक्तं उत्तमं धूपमुच्यते ७५
उशीरं चन्दनोपेतं लघुयुक्तं मधुप्लुतम्
मध्यमं धूपमाख्यातमुशीरादिशिवप्रियम् ७६
गुग्गुलुं घृतसंयुक्तमधमो धूपमुच्यते
दीपाङ्गारविनिक्षिप्तं घण्टानादसमन्वितम् ७७
धूपपात्रं समादाय दापये विधिवद्बुधः
++ धूपं समाख्यातं दीपलक्षणमुच्यते ७८
गोघृतेन समायुक्तं दीपं सात्विकमुच्यते
राजसं तिलतैलेन मिश्रामाजेन +++ ७९
चतुरङ्गुलमायामो दीप उत्तममुच्यते
त्र्यङ्गुलायामदीपस्तु मध्यमं दीप उच्यते ८०
अङ्गुलद्वयमानं तु अधमो दीप उच्यते
कपिलेन घृतेनाथ कृतकर्पूरवर्तिना ८१
दीपः शिवप्रियः प्रोक्तस्सर्वसिद्धिप्रदायकः
तामसो दीप उद्दिष्टो माहिषेण तु सर्पिषा ८२
वाक्षैर्बीजैर्भवेस्नेहैर्दीपैः पैशाच उच्यते
तामसं चैव पैशाचमयोग्यं दीप उच्यते ८३
एव दीपं समाख्यातं पदलक्षणमुच्यते

अधमं पदविस्तारं द्वादशाङ्गुलमुच्यते ८४
मध्यमं पदविस्तारं सप्तद्विगुणमुच्यते
षोडशाङ्गुलविस्तारमुत्तमं पदमुच्यते ८५
प्रोक्तं पदप्रमाणं तु कलशानामथोच्यते
द्वादशाङ्गुलविस्तारमुदरे समुदाहृतम् ८६
वर्तितं तु तदर्धेन नाहं तस्य विधीयते
कण्ठं तुर्यङ्गुलोत्सेधं विस्तारं चतुरङ्गुलम् ८७
ओष्ठं तु द्व्यङ्गुलोत्सेधं निर्गमं तु द्वियङ्गुलम्
एकाङ्गुलं विभज्याथ कर्तव्यो मध्यमोत्तमौ ८८
विस्तारं तु समाख्यातं शेषं बुद्ध्या तु लक्षणम्
प्रोक्तमेव विधानेन कवशानां तु लक्षणम् ८९
प्रमाणं ध्वजदण्डस्य लक्षणेन विधीयते
आयामं शिखरान्तस्याद्ध्वजदण्डप्रमाणतः ९०
ऊर्ध्वं भूमिप्रमाणं तु त्रिभूम्यादौ विधीयते
चतुर्विंशाङ्गुलं नाभं ध्वजदण्डमथोच्यते ९१
तस्माद्व्यङ्गुलहीनस्तु ध्वजदण्डो हि मध्यमम्
विंशदङ्गुलनाभस्तु ध्वजदण्डे हि कन्यसः ९२
स्कन्धद्वयं तु दण्डाग्रे त्रिः प्रादेशान्तरं तथा
षडङ्गुलपरीणाहं वेणुदण्डस्थितं ध्वजम् ९३
स्थूप्याग्रेण समं चैव मध्ये यन्त्रं तु विन्यसेत्
प्रासादाभिमुखं कुर्यात् कुण्डानि तु विशेषतः ९४
ध्वजदण्डसमाख्यातो बलिदानमथोच्यते
ग्रामे ब्रह्मादिके स्थाने बलिदानमथोत्सवे ९५
कुक्कुटाण्डप्रमाणस्तु बलिरेकत्र कीर्तितः
द्विगुणं त्रिगुणं चापि बलिं शक्त्या + निक्षिपेत् ९६
लयानां लक्षणं प्रोक्तं स्थिरानामधुनोच्यते

दशायुधं च वस्त्रं च दर्पणं पादकं तथा ९७
पिञ्छमाभरणं छत्रं वितानं चामरं ध्वजम्
घण्टा चैव महाघण्टा प्रच्छिन्नपटमेव च ९८
स्थिराण्येतानि सर्वेषां लक्षणं वक्ष्यतेऽधुना
स्थिराणि लोहजान्न्ये च मृण्मया दारुजालयाः ९९
क्रियादौ स्थापयेत्सर्वं क्रियान्ते वर्जयेल्लयम्
शुद्धिं कुर्यात् क्रियादौ तु यथोक्तं शोधये स्थिरान् १००

वज्रं शक्तिं च दण्डं च खड्गपाशं ध्वजं गदा
शूलं चैव च चक्रं च पद्मं चेति दशायुधाः १
सौवर्णं राजतं ताम्रमायसं कांस्यदं तु वा
कुर्याद्यथोदितैरेव लक्षणैरुपलक्षितम् २
अरत्निमात्रमायमविस्तारोऽष्टाङ्गुलं भवेत्
मध्यमाङ्गण्डिका कुर्याच्चतुरङ्गुलमानतः ३
तदूर्ध्वे तदधश्चापि गण्डिकाङ्गुलहीनतः
अष्टाङ्गुलस्त्रिधा कृत्वा अधश्चोर्ध्वत्रिशूलवत्
पार्श्ववक्त्रं बहिर्वक्त्रं मध्यवक्त्रमृजुर्भवेत् ४
एवं वज्रं समाख्यातं शक्तिलक्षणमुच्यते
अरत्निमात्रमायामं विस्तारं चतुरङ्गुलम् ५
गण्डिकं मध्यतः कुर्याच्चतुरङ्गुलमानतः
चतुरङ्गुलमानेन अधश्चोर्ध्वं त्रिशूलकम् ६
प्रोक्तं शक्तिप्रमाणं तु दण्डलक्षणमुच्यते
मूले त्रिदण्डिकायुक्तं भवेदेकैकमङ्गुलम् ७
एकैकाङ्गुलवृद्ध्या तु विस्तारं गण्डिकात्रयम्
चतुरङ्गुलभवेन्मुष्टिर्नाहं तस्य षडङ्गुलम् ८
तदूर्ध्वे गण्डिकां प्रोक्तं विस्तारं चतुरङ्गुलम्

ऊर्ध्वे षडङ्गुलं तारं अधस्तं चतुरङ्गुलम् ९
नाभं तस्य प्रकर्तव्यं विस्तारार्धेन वर्तितम्
एवं दण्डं समाख्यातं खड्गलक्षणमुच्यते १०
अङ्गुलद्वयविस्तारमधस्तात्कम्बुकं भवेत्
फलकाचतुरश्रं तु षडङ्गुलसुविस्तरम् ११
चतुरङ्गुलं भवेत्कण्ठं नाभं विद्यात्त्रियङ्गुलम्
ऊर्ध्वे षडङ्गुलं दीर्घं विस्तारं स्याद्द्वियङ्गुलम् १२
ततो द्व्यङ्गुलविस्तारं चतुस्तालं प्रमाणतः
अधर्मस्तु भवेत् खड्गं पञ्चतालस्तु मध्यमः १३
षट्ताल उत्तमः प्रोक्तं खड्ग एवं त्रिधा मतः
पाशस्य लक्षणं वक्ष्ये फणद्वयसमायुतम् १४
अरत्निमात्रमायामं फण स्याच्चतुरङ्गुलम्
षडङ्गुलं फणस्याधः परिणाहमिहोच्यते १५
पाशस्य लक्षणं चैव ध्वजलक्षणमुच्यते
अरत्निमात्रविस्तारं तदर्धं शिखरं भवेत् १६
अद्यर्धरत्निमात्रं तु मध्ये शिखरपुच्छयोः
मध्यवत्पुच्छविस्तारमीनपुच्छाकृतिर्भवेत् १७
ध्वजस्य लक्षणं प्रोक्तं गदालक्षणमुच्यते
दण्डवल्लक्षणं प्रोक्तं विशेषस्तु निहन्यते १८
ऊर्ध्वं दशाङ्गुलं तारमथवाष्टाङ्गुलं भवेत्
लक्षणं तु त्रिशूलस्य पूर्वमुक्तं सुविस्तरम् १९
चक्रत्रिशूलपद्मानां द्वादशारसमन्वितम्
मध्यनाभिसमायुक्तं परितः पत्रमादयम् २०
एवं चक्रं समाख्यातं पद्मलक्षणमुच्यते
अष्टाङ्गुलं तु मुकुलं दलाष्टकसमन्वितम् २१
षोडशाङ्गुलनालं स्यादेवं पद्मस्य लक्षणम्

अथवारत्निमात्रेण सर्वं कुर्याद्दशायुधम् २२
लक्षणस्सूर्यवत्तत्र विभज्याङ्गानि सर्वशः
एवं दशायुधं प्रोक्तं वस्त्रलक्षणमुच्यते २३
क्षौम कार्पासजं वस्त्रं पट्टं देवाङ्गसंभवम्
अष्टहस्तायतं चैव विस्तारं स्याद्विहस्तकम् २४
मनोरमं तु सुश्लक्ष्णं विशेषं हस्तमुच्यते
लिङ्गायामप्रमाणेन वस्त्रविस्तारमुच्यते २५
विस्ताराष्टाङ्गुणायामं सदृशं तु सलक्षणम्
आखुकाष्ठाग्निदग्धञ्च केशवर्धं च वर्जयेत् २६
वस्त्रमेवं समाख्यातं वक्ष्ये दर्पणलक्षणम्
शुद्धकालस्येह तत्कुर्याद्विस्तारं रत्निमानतः २७
षोडशाङ्गुलविस्तारमधस्ताद्वादशाङ्गुलम्
अर्धपादसमायामं विस्तारं स्यात्तदर्धतः २८
स्वाङ्गुलैः प्रतिमानां तु कुर्याल्लक्षणयो बुधः
अङ्गुष्ठिकां ततः कुर्यादङ्गुलद्वमानतः २९
यथापादं तथा कार्यं लक्षणेन समन्वितः
लोहजै दारुजैर्वाथ कुर्याद्वै पादुकद्वयम् ३०
एवं तु पादुकं प्रोक्तं पिञ्छलक्षणमुच्यते
मयूरपिञ्छै कुर्यात्तु चतुस्तालसुविस्तृतम् ३१
अधोमुखं तु कर्तव्यं अधश्चोर्ध्वमुखं तथा
अधोमुखानां पिञ्छानां मकुटं तु प्रकल्पयेत् ३२
सौवर्णं राजतं ताम्रं तथैव मकुटं भवेत्
पञ्चारत्निप्रमाणेन दण्डस्यादधम स्मृतः ३३
अष्टारत्निप्रमाणस्तु उत्तमो दण्ड उच्यते
तयोर्मध्यममानस्तु दण्डो मध्यम एव हि ३४
एवं पिञ्छं समाख्यातं छत्रलक्षणमुच्यते

षट् तालं छत्रविस्तारमुत्तमं छत्रमुच्यते ३५
मध्यमं पञ्चतालं स्यात्तालहीनं ततोऽधमम्
मौक्तिकं तु भवेच्छत्रं वस्त्रेण प्रहितं ततः ३६
वस्त्रेण वाथवा कार्यं तालपत्रमथापि वा
छत्रं त्वधोमुखं प्रोक्तं दण्डो वै पिञ्छदण्डवत् ३७
सौवर्णं रत्नसंयुक्तं कुर्यादाभरणानि तु
मकुटं कुण्डलं चैव हारं केयूरकं तथा ३८
कटकं कटिसूत्रं च पुष्पं पादुकनूपुरम्
कुर्यादुदरबन्धं च ++ च्छसीरं च मेखलाम् ३९
रशनां कर्णपूरं च प्रतिमं च यथार्हकम्
पट्टं च गोलकं चापि लिङ्गमानेन कारयेत् ४०
कृतेष्वेतेषु जुहुयात् पञ्चब्रह्म षडङ्गकैः
प्रत्येकं तु समिद्भिस्तु घृतेन चरुणा तथा ४१
शतं शतद्वयं वाथ शतत्रयमथापि वा
ततस्सद्येन संग्राह्य वामदेवेन रोपयेत् ४२
भक्त्या वित्तानुसारेण स्नपनं वाथ कारयेत्
एवमाभरणं प्रोक्तं वितानानामथोच्यते ४३
वितानं वस्त्रवत्कुर्यात् विस्तारं वस्त्रमानतः
वस्त्रमात्रमथायामं विचित्रं कारयेद्बुधः ४४
चमर्यैश्चामरं कुर्यात् पिञ्छैश्चापि मयूरजैः
दण्डहस्तप्रमाणं स्यात् पाददण्डप्रमाणतः ४५
हेमं रत्नमयं दण्डं तारं ताम्रमयं तथा
आलोभे दारुदण्डं स्यात् मयूरैः पिञ्छयोजितैः ४६
एवं तु चामरं प्रोक्तं ध्वजलक्षणमुच्यते
क्षौमपट्टदुकूलैर्वा देवाङ्गैश्च विशेषतः ४७
कार्पासं संभवेश्चापि कर्तव्यं तु सलक्षणम्

हस्तमात्रं तु विस्तारं शिखरं स्यात्तदर्धतः ४८
विस्ताराद्यर्धमानं तु पुच्छं कुर्याद्विशेषतः
द्विपुच्छं वा त्रिपुच्छं वा चतुष्पुच्छमथापि वा ४९
कर्तव्यं लक्षणेनैव दराडं दराडद्वयार्धकम्
एवं स्थिरार्णां प्रोक्तं तु लक्षणानां विशेषतः ५०
दारुजानां लयानां च मृरामयाङ्गां तथैव च
ग्राह्यं परिसमाव्यस्तं कुर्यान्ते तु विसर्जयेत् ५१
लयांशुयाश्चान्यतश्च कार्यं तस्य विसर्ज्य च
संस्थिरास्सर्वथा ग्राह्य शुद्धिं कृत्वा यथोक्तवत् ५२
एवं समासतः प्रोक्तं करणानां तु लक्षणम्
वेणुं जातिपलाशचन्दनतरुं बिल्वस्तथा खादिरं
न्यग्रोधं नृपनालिकेरक्रमुकं तालं शमी तिन्त्रिणी ।
माधूकं बकुलं च तत्सुरतरुमेतेषु यत्संभवे-
द्देवेशे वृषभध्वजास्य ++ गुणदराडायं संकल्पितम् ५३
अष्टबन्धं च सिकतं वसनादी निदाय च
गन्धैर्विलोक्य लिङ्गपीठं च सादयेत् ५४
वस्त्राभ्यां वेष्टयेद्देवं पीठं लाहत वाससा
नालं संपूर्य सिकतैर्मूलेन ससुवर्णकैः ५५
शङ्खसर्जहयालाक्ष षट् चतु चैकभागिका
एकैकलाक्षया तुल्या कर्पासा खरवालुका ५६
लाक्षभागमिता धात्री सर्वं तैलेन पेषयेत्
नवशक्तिमया विद्या त ++ पातसंयुतम् ५७
क्रमुको नालिकेरश्च तालो वालंशको मतः
एते वृक्षाश्च हिन्ताला ध्वजदराडाः प्रकीर्तिताः ५८
अश्मानन्नवहस्तं वा रौद्रसाम्यमथापि वा
मासार्धसदृशं वापि ध्वजदराडं तु कारयेत् ५९

चन्दनं चम्पकं चैव बिल्वमर्जुनमेव चा
आच्छादिकं तु खदिरं सालनिन्दक एव च ६०
सालवृक्षध्वजं चैव ध्वजदण्डाः प्रकीर्तिताः
हर्म्यमानेन कर्तव्यो ध्वजदण्डशिलामयः ६१
यद्वा पञ्चदशो हस्तं रुद्रसाम्योऽथवा भवेत्
गोपुरोत्सेधतो वापि नवहस्तप्रमाणतः ६२
शततालसमायामं तर्धाशीतितालकम्
तदर्धे हर्म्यमानो वा गोपुरोत्सेध एव वा ६३
पञ्चहस्तप्रमाणो वा नवपञ्चप्रमाणतः
यद्वा द्वादशहस्तश्च छिद्रत्रयसमन्विताः ६४
दण्डाग्रे योजयेद्यष्टिं रज्वा सम्मन्धये स्फुटः
दुकूलपट्टदेवाङ्गकार्पासं वा पटे हितः ६५
नवहस्तपटश्रेष्ठं सप्तहस्तं तु मध्यमम्
अथवा पञ्चहस्तं तु तत्पटे लेखयेद्बुधः ६६
इति स्वायम्भुसूत्रे सङ्ग्रहे करणलक्षण षट्चत्वारिंशतिः पटलः

ध्वजपटलक्षण

अथ देवं नमस्कृत्य पर्यपृच्छ पितामहः
सर्वदेवार्चनं प्रोक्तं न श्रुतं भास्करार्चनम् १
कस्य मन्त्रं च मुद्रा च स्थापनं पूजनं तथा
तेषां कर्मफलं चापि ब्रूहि मे ++ श्वरः २
ईश्वरः
अहमर्वाग्निरित्युक्तो मुक्तेरध्यस्य मध्यगः
एकमेव सदासूर्यः पदार्थं प्रतितिष्ठति ३
सर्वेषां कालकर्ता च सूर्य एवेति निश्चयः

तस्मात्सूर्य सदाराध्य सर्वसिद्धिकरस्मृत ४
तस्य नाड्या समुद्भूतः सोमस्तस्मात्तु तारकः
भास्कराद्या ग्रहास्सर्वे सर्वेषां ज ++++ ५
तस्मादादित्यपूर्वस्तु संपूज्योऽथ नवग्रहाः
शुभाशुभानि सर्वेषां गृहीत्वा सञ्चरन्ति ते ६
तस्माद्ग्रहा इति ख्याता सूर्यपूर्वा इमे ग्रहाः
भास्करं प्रथमं प्रोक्तं द्वितीयं तु बृहस्पतिः ७
भौमस्तृतीय इत्युक्तो चतुर्थस्तु बुधस्तथा
शनैश्चर ततः प्रोक्तो षष्ठश्शुक्र इति स्मृतः ८
सप्तमस्तु तथा राहुरष्टमस्सोम उच्यते
नवमः केतुरित्युक्तो सूर्यपूर्वा इमे ग्रहाः ९
अर्कभौमबुधो रक्तो श्वेतो गुर्विन्दुभार्गवः
कृष्णो मन्दश्च राहुश्च चित्राः केतुमुदाहृतः १०
भास्करः पद्महस्तं च मण्डलेन तु मण्डितः
केतकीपुष्पहस्तस्तु राहुर्वै फणमण्डितः ११
सोमः कुमुदहस्तस्तु मण्डलेन तु मण्डितः
शतमुद्रासमायुक्तं ग्राहा शेषा इति स्मृताः १२
शुद्धस्थानमनुप्राप्य गोमयालेपनं ततः
गत्वरस्युपरे मन्त्री ग्रहाणामनुपूर्वशः १३
सान्तं भास्करबीजं स्यात् खान्तं विद्याद्गुरोस्तथा
हान्तं भौमस्य बीजं स्यात् पान्तं विद्याद्बुधस्य तु १४
हान्तं मन्दस्य बीजं स्यात् ढान्तं शुक्रस्य कीर्तितम्
धान्तं धूमस्य बीजं स्यात् षान्तं सोमस्य कीर्तितम् १५
खान्तं केतोस्समाख्यातं बीजं तेषां प्रचोदितम्
प्रणवाद्यं तथा बीजमग्निबीजेन संयुताः १६
चतुर्थस्वरसंयुक्तं बिन्दुनादसमन्वितम्

नमस्कारान्त इत्युक्ता ग्रहपीडाः प्रकीर्तिताः १७
प्रणवाद्यास्तथा बीजा हुङ्कारेण समन्विताः
चतुर्थ्यन्तेन नाम्नाथ युक्ता मूला इति स्मृताः १८
अकारेण समायुक्तं मन्त्रास्तु हृदयास्तथा
इकारेण समायुक्तं शिरोमन्त्रा प्रकीर्तिताः १९
उकारेण समायुक्ता शिखामन्त्राः प्रकीर्तिताः
ऋकारेण समायुक्ता कवचा इति कीर्तिताः २०
सविसर्गपदन्ताश्च अस्त्रमन्त्राः प्रकीर्तिताः
सानुस्वरा सनादाश्च बीजयुक्ता स्वरास्तथा २१
आदौ प्रणवसंयुक्ता मध्ये नाम समन्विताः
नम स्वाहा वषट् वौषट् हुंफट् तारसमन्विताः २२
षडङ्गं सर्वसामान्यं मन्त्रास्तु समुदाहृताः
अर्कः स्वपद्ममुद्रां च गुरोश्शान्ता विधीयते २३
भौमस्य शोधनीमुद्रा बुधस्य शशिकर्णिका
अस्त्रं शतेश्वरं प्रोक्तं नमस्कार भृगोस्तथा २४
राहोस्तु निष्ठुरा मुद्रा सोमस्य मुकुलं तथा
ध्वजमुद्रास्तथा केतोसर्वकार्येषु योजयेत् २५
विधिराचमनस्याद्यं प्रवक्ष्यामि यथातथम्
हस्ते तीर्थानि च ज्ञात्वा सदाचमनमारभेत् २६
अङ्गुष्ठमूलब्राह्मं तु तीर्थमित्यभिधीयते
करमङ्गुलिमूलं स्यादङ्गुल्यग्रं तु दैविकं २७
पैतृकं हस्तमध्यं तु तीर्थं दक्षिणहस्तजम्
पैतृकेन पिबेत्तोयं ततो ब्राह्म्येन मार्जयेत् २८
दैविकेन स्पृशेदङ्गान्त्येषां तृप्तिः प्रय्च्छति
पितृतः तृप्तिमायाति पानेन प्रथमेन तु २९
पितामहा द्वितीयेन चान्येन प्रपितामहः

मार्जनेनाथ पूर्वेण ब्रह्मा तृप्यन्ति पद्मजः   ३०
प्रजापतिद्वितीयेन यत्तु दक्ष इति स्मृतः
चक्षुषो स्पृष्टयोस्तृप्तिश्चन्द्रादित्यो प्रयास्यतः   ३१
नासिकापुटयोस्तृप्तिस्पृष्टयोर्यातिमत्रि वै
अश्विनौ तृप्यतः प्रीतौ कर्णयोस्पृष्टयोरपि  ३२
तृप्यन्ति भुजयोश्चैव नाभौ विष्णुरिति स्मृतिः
हृदये च महाविष्णुस्सदा विष्णुश्च मूर्धनि  ३३
अङ्गुष्ठानामिकाभ्यां तु चक्षुषी च तथा स्पृशेत्
अङ्गुष्ठतर्जनीभ्यां तु स्पृशेन्नासपुटद्वये  ३४
श्रोत्रोऽङ्गुष्ठकनिष्ठाभ्यां बाहुश्चाङ्गुष्ठकेन तु
नाभिं मध्यमयो स्पृष्ट्वा चतुर्भिर्हृदयं तथा  ३५
पञ्चभिश्चैव मूर्धानां स्पृष्ट्वा स्पृष्ट्वा प स्पृशेत्
एवमाचमनं प्रोक्तं सर्वकर्मसु सर्वदा  ३६

इति स्वायम्भुसूत्रे संग्रहे ग्रहमन्त्रोद्धारण नाम
सप्तचत्वारिंशति पटलः
स्वायम्भुसूत्रं समाप्तम्

सुबद्धं पुस्तकं दृष्ट्वा अबद्धं लिखितं मया
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते
क्रोधिसंवत्सरे मार्गशिर मारे

स्वायम्भुवागमः

अधुना विधिना वक्ष्ये प्रसन्नयजनं शृणु
महामारीविनाशार्थं  महारोगक्षयं तथा  १
ग्रामवृद्धिकरं शान्तं राष्ट्रदुर्भिक्षनाशनम्
अपमृत्युविनाशार्थं  सर्वप्राणिहितावहम्  २

परसंहारकर्तव्यं नृपाणां च विशेषतः
तस्मात्सर्वप्रयत्नेन इमां पूजां समाचरेत् ३
नृपाणां जन्मनक्षत्रे अभिषेकर्क्षमेव वा
विषुवायनकाले च ग्रहणान्ते ++++ ४
उत्सवादौ च कर्तव्यं प्रतिष्ठान्ते विशेषतः
अन्यस्मिन्मंगळे काले यथा कर्तुर्मनोरमम् ५
तस्मात्पूजाविधानेन पूजाकर्मविधिं शृणु
निश्चित्यदिवसात्पूर्वे तृतीये पंचमेऽपि वा ६
भूसुरान्पूजयेत्तत्र यथा शक्ति विशेषतः
तदन्ते नित्यपूजां च तदन्ते कलश पूजनम् ७
यामळोक्तक्रमेणैव यथा विभवविस्तरः
तदन्ते विघ्नपूजां च भेदं चैव विशेषतः ८
+++ तिलमुद्गं च लाजं चैव कुळस्थकम्
पृथुकं चैव सक्युं च दशद्रोणं पृथक्पृथक् ९
इत्थं खण्डं च कर्तव्यं नानाफलसमन्वितम्
नाळिकेरं विशेषेण योग्यायोग्यक्रमेण तु १०
एकद्रव्यं तु संमिश्रं शुद्धपात्रोपरि न्यसेत्
अतः प्रधाने कर्तव्यं सांभवाय प्रकल्पयेत् ११
भास्करोदयमारभ्य गणेशं पूजयेद्बुधः
स्वगुरुं पूजयेत्पूर्वं पुण्याहं वाचयेत्ततः १२
बेरशुद्धिं च कर्तव्यं हिमतोयाभिषेचनम्
पयसा स्नापयेद्धीमां छतप्रस्थावसानकम् १३
गन्धतोयाभिषेकं च मंत्र पूर्वं समर्चयेत्
वस्त्रमाभरणं चैव गन्धमाल्यानुलेपनम् १४
पायसं च निवेद्याथ ताम्बूलं च निवेदयेत्
गणेशाग्रे विशेषेण तद्द्रव्यं च विनिक्षिपेत् १५

पाशुपतेन शास्त्रेण प्रोक्षयेदम्भसा ततः
सर्ववाद्यसमायुक्तं + व शब्दसमाकुलम् १६
द्रव्येन पूजयेद्विघ्नं गणाभाथेति मंत्रतः
तदूर्ध्वे सर्वपुष्पाणि षडक्षरेण दापयेत् १७
चतुर्विधमपूपं च शुद्धान्नं कृसरान्नकम्
पायसान्नं गुळान्नं च नानाविधफलानि च १८
निवेदयेद्बुदा मंत्री पानीया चमनं कुरु
ताम्बूलं च निवेद्यैव स्तोत्रं मंगलसेवितम् १९
धूपदीपसमायुक्तं जलशब्दसमाकुलम्
अपूपादीनि सर्वाणि तत्तत्काले प्रदापयेत् २०
चतुर्वर्णसमायुक्तं उत्तमोत्तममिष्यते
+++++ या चेत्तु नाळिकेरं च संग्रहेत् २१
देवाग्रे च विशेषेण नाळिकेरं च भिद्यते
चतुर्वर्णसमायुक्तं गानलीलासमन्वितम् २२
एवं क्रमेण विधिना सायाह्नान्तं समारभेत्
सायाह्नसमये काले तद्द्रव्यं च बहिः पुनः २३
सर्वभक्ताय दातव्यं भस्मानं दापयेत्ततः
इमां पूजां विशेषेण विभवाण्यनुकारयेत् २४
अपरे दिवसे चैव पूर्वसंध्यावसानके
संकल्पं च यथापूर्वं विघ्नेशं पूजयेत्ततः २५
तद्दैवोद्दिश्य कर्मेण संकल्पमिति बुद्धिमान्
पुण्याहं वाचयित्वा तु भूसुरं देशिकैस्सह २६
पंचगव्यं च संस्थाप्य पंचामृतमतः क्रमात्
अष्टमृत्साधनं चापि वल्कलोदकमेव च २७
पत्रोदकं तु मेवं च पुष्पोदकं तथा भवेत्
शुद्धोदकं तु मेवं च गन्धतैलं तथा भवेत् २८

अष्टोत्तरशतं चैव स्नापनं च यथा कुरु
एवं सर्वं संस्थाप्य शान्तिहोमेन भूयते २६
पूर्ववद्द्वारमारभ्य ततो लिंगं प्रवेशयेत्
गन्धतैलं समारभ्य यावद्गन्धोदकं तथा ३०
पंचब्रह्मषडंगैश्च लिंगशुद्धिं समाचरेत्
त्रियम्बकेन मंत्रेण पद्मपुष्पं समर्चयेत् ३१
पंचमावरणं पूर्वं अति ++ कं क्रमाद्गुरुः
वस्त्राद्याभरणं चैव अलंकृत्य विशेषतः ३२
धूपदीपसमायुक्तं पायसं च निवेदयेत्
ताम्बूलं च निवेद्यैव सर्ववाद्यसमाकुलम् ३३
चतुर्थावरणं पश्चात् शम्बैररभिषेचनम्
वस्त्रादीनिरलंकृत्य सुशिवोहं जपेद्बुधः ३४
तद्बीजं च समुच्चार्य जातिपुष्पं समर्चयेत्
कृसरान्नं निवेद्यं च पाद्यादीनुपचारकैः ३५
चतुर्थावरणं प्रोक्तं तृतीयावरणं शृणु
शिवमंत्रं जपेद्धीमान् अभिषेकं च कारयेत् ३६
रक्तवस्त्राद्यलंकृत्य करवीरं समर्चयेत्
हृल्लेखाबीजमुच्चार्य तद्बीजं च विशेषतः ३७
मुद्गान्नं च निवेद्याथ धूपदीपं ददेद्गुरुः
तृतीयावरणं प्रोक्तं द्वितीयावरणं शृणु ३८
गौळामंत्रमनुस्मृत्य तद्बीजेनाभिषेचयेत्
कृष्णवस्त्राद्यलंकृत्य कुटजं चैव दापयेत् ३९
अघोरास्त्रं जपेद्धीमान् तद्बीजेन समर्चयेत्
शुद्धान्नं च निवेद्याथ धूपदीपसमन्वितम् ४०
द्वितीया वरणं ह्येवं प्रथमावरणमुच्यते
अष्टाक्षरं समुच्चार्य अजमुत्थेन सेचनम् ४१

श्वेतवस्त्राद्यलं कृत्य शिवबीजं जपेद्बुधः
तद्बीजेन समादाय धूपदीपं तु दापयेत् ४२
दध्यन्नं च निवेद्याथ पाद्यादीन्क्रमशः कुरु
आलेपनं च गन्धाद्यैः हिमतोयाभिषेचनम् ४३
आर्द्रवस्त्रं त्यजेत्पश्चाद् शुद्धवस्त्रेण वेष्टयेत्
सवाभरणसंयुक्तं सर्वपुष्पैरलं कृतम् ४४
दशबीजं समुच्चार्य चम्पकं च प्रदापयेत्
धूपदीपसमायुक्तं +++ न्नं च निवेदयेत् ४५
एवमावरणादीनि सृष्टिं वा भंगमात्ततः
वर्धनीं शिवकुंभं च किंचिद्भेदं विशेषतः ४६
ध्वजादिच्छत्रपर्यन्तं सर्ववाद्यसमाकुलम्
स्वस्ववाचकसंयुक्तं कुरवशब्दसमाकुलम् ४७
तत्स्थानं तु समादाय परिचारकमूर्धसु
कुंभं च वर्धनीं न्यस्त्वा कुम्भमग्रे विशेषतः ४८
एवं प्रदक्षिणं कृत्वा देवाग्रे स्थण्डिले न्यसेत्
अष्टत्रिंशत्कला न्यस्त्वा मातृकान्यासमेव हि ४९
भूषणादीनि विन्यस्य गोळकान्यासमेव हि
शिवबीजमनुस्मृत्य शिवतोयाभिषेचयेत् ५०
मनोन्मनीं समुच्चार्य वर्धनीमभिषेचनम्
मंत्रपुष्पं तदन्ते तु मंत्रान्नं च निवेदयेत् ५१
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम्
एवमेव क्रमेणैव महेशस्य प्रदापयेत् ५२
निवेद्यार्थं तण्डुलं ग्राह्य तत्संख्या च मया शृणु
हेमशाली महाशाली कृष्णशाली तथैव च ५३
सितशाली रक्तशाली सौगन्धिकमथोत्तमः
वैणवं च यवं चैव ईवीच्छाली च माधुरी ५४

कुस्तुंवरी च नीवारं मध्यमाश्चेति कीर्तिताः
++ साधारण मही ईषत्कृष्णं च विष्टिमम् ५५
तथा वैसूरिका व्रीहि हृस्ववर्ज्रा च कन्यकाः
शालीनां तण्डुलं श्रेष्ठं नैवेद्यार्थं व्रतोस्तथा ५६
चातुर्वर्णमये वस्त्रे समनिक्षिप्य लूखले
प्राहृत्य मुसलेनैव कणकम्बुं च वर्जयेत् ५७
द्विशतं पंचविंशत्या व्रीहयः शक्तिरुच्यते
तलं प्र ++ शं प्रसृतिं कुडवं च तथांजलि ५८
प्रस्थं पात्रार्थकं शैवं द्रोणं खारिक्रमेण तु
शुक्तेस्तु गणयेन्मंत्री द्विगुणं तु पृथक्पृथक् ५९
खारित्रयं तु भारं स्यात् एवं स्यात्परिमाणकम्
नित्यं नैमित्तिकं काम्यं नैवेद्यं त्रिविधं भवेत् ६०
नित्यं नवविधं प्रोक्तं तथा नैमित्तिकं नव
यथेष्टं काम्यमित्युक्तं तेषां भेदमिहोच्यते ६१
परिमाणं समारभ्य पंचपंचविवर्धनात्
कन्यसादित्रयं प्रोक्तं द्विशतान्तसमावधि ६२
मध्यमत्रितयं प्रोक्तं द्विगुणी कृत्य बुद्धिमान्
उत्तमादित्रयं प्रोक्तं त्रिगुणी कृत्य बुद्धिमान् ६३
एवमेव क्रमेणैव विभागाण्यनुकारयेत्
कूष्माण्डं पनसं लाबुं कालिं + बृहतीद्वयम् ६४
त्रपुसं कर्करी चैव सतुषं विशनीं तथा
कदळी कारवीथांघ्री आम्रमुर्वारुकं तथा ६५
वल्कमूलं तथा कन्दं मूलमन्यद्रसैर्युतम्
प्रस्थस्यैकपलं प्रोक्तं आमं वा पक्वमेव वा ६६
यथा लाभोपदंशैश्च पाचयेत्तु विशेषतः
सर्वोपदंशकानुक्तान्मरीची लवणाद्यकान् ६७

जीरकाम्ररसोपेतं यथायोगं पचेत्पृथक्
सिता च लवणं चैव ++++ सुयोजयेत् ६८
एवं पक्त्वा सूयं तु कदळी पनसं क्षिपेत्
एलालवंगकर्पूर रसवस्तूनि दापेयेत् ६९
क्रमेण पूगीफलं च पर्णं च तत्संख्यातैलमिश्रकम्
कर्पूरं युक्तिकं चैव कुमुदं द्विपलं तथा ७०
एवं संपाद्य सर्वं तु युक्तिना कारयेद्बुधः
तद्देवाग्रे विशेषेण गोमयालेपनं कुरु ७१
रजनीपिष्टचूर्णं च नानाचित्रविचित्रकैः
पात्रौवारन्यसेत्पश्चात् स्थलिकायां न्यसेत्ततः ७२
स्थलिकायां क्रमेणैव +++ ञ्च विशेषतः
शन्नोदेवीति मंत्रेण तदूर्ध्वे स्तावयेद्बुधः ७३
दध्ना बलिस्तु युक्तेन पारमन्नेन पूरयेत्
दूर्वा टं तत्र पयसा पूरयेत्संधि ++++ ७४
++++ पुण्य नाना फलसमन्वितम्
एवं पात्राणि संपूर्य पानीया चमनं कुरु ७५
धूपदीपं हृदा दद्यात् ++++ समन्वितम्
सर्ववाद्यसमायुक्तं उक्तमंत्रैर्निवेदयेत् ७६
पानीयं च निवेद्याथ निर्माल्यं च विसर्जयेत्
स्थलशुद्धिं ततः कृत्वा ताम्बूलं च निवेदयेत् ७७
अर्घ्यं शिरसि दातव्यं मुखवासं च दापयेत्
+++ श समायुक्तं तस्माद्धोमबलिं ददेत् ७८
होमसंख्याविशेषेण अयुतं प्रयुतं तथा
सहस्र +++ दश्य द्रव्यं प्रति विशेषतः ७९
होमद्रव्याणि सर्वाणि पूर्वमेव सुभागितम्
पंचब्रह्मषडंगैश्च प्रतिमंत्रं विशेषतः ८०

शुचिवोहेन कर्तव्यं व्योमरूपं विशेषतः
पाशुपतेन कर्तव्यं कूष्माराडं च विशेषतः ८१
सर्वद्रव्यं चरुं मिश्रं पूर्णाहुतिमथाचरेत्
तदन्ते बलिदानं च नित्यमेव समाचरेत् ८२
प्रविशेदालयं पश्चाद् धूपदीपसमन्वितम्
ताम्बूलं च निवेद्याथ मुखवासं च दापयेत् ८३
उपचाराणि सर्वाणि नित्यमेव समाचरेत्
एवमेवक्रमेणैव सायाह्नान्तं समाचरेत् ८४
सायाह्नान्तं समारभ्य नित्यपूजां समारभेत्
प्रसन्नपूजा कर्तव्यं राजराष्ट्रविदिं शृणु ८५
इत्युत्तरस्वायंभुवे सूत्रे प्रसन्नपूजाविधिपटलः १

अधुना विधिना वक्ष्ये राजरक्षाविधिं शृणु
युवराजाधिराजा च सार्वभौमस्त्रिधा भवेत् १
सार्वभौमस्य सायुज्यं भोगमोक्षाधिराजकम्
युवराजस्य कर्तव्यं परनिग्रहकारणम् २
युवराजा रमां प्राप्य दधिराजा सरस्वती
सार्वभौमादिशक्तीनां प्राप्यते जगति ध्रुवम् ३
सर्वरोगनिवृत्त्यर्थं सर्वशान्तिकरं भवेत्
सर्वसंपत्समृध्यर्थं प्राणिनां भोगमोक्षदम् ४
पूजाकालविधानेन तत्कालमधुनोच्यते
युवराजाजन्मनक्षत्रे सर्वमासेषु संग्रहम् ५
अधिराजाधिनक्षत्रे अभिषेकर्क्षमेव वा
सार्वभौमे विशेषेण मनसा चिन्त्यते यदि ६
तत्काले पूजनं कृत्वा तत्फलं भवति ध्रुवम्
निश्चित्य दिवसात्पूर्वे नव ++ दिनेऽपि वा ७

भूसुरान्भोजयेत्तत्र दक्षिणां संप्रदापयेत्
ग्रहपीडादि शान्त्यर्थं भास्करं पूजयेत्ततः ८
क्षुद्र ++णादिशान्त्यर्थं काळिका पूजनं कुरु
काळिकापूजने किं तु मधुमांसं ददेत्क्रमात् ९
यक्षादिपीडाशान्त्यर्थं शास्तारं पूजयेत्ततः
तद्दिनस्य तु कर्तव्यं भास्करोदयमारभेत् १०
विघ्नेशं पूजयेद्धीमान् संकल्पमिति बुद्धिमान्
पुण्याहं वाचयेत्तत्र पंचगव्यं च साधयेत् ११
पंचामृतं च संस्थाप्य नवकं स्थापयेद्बुधः
नवभाण्डं समादाय क्षाळयेच्छुद्धवारिणा १२
देवाग्रे तु विशेषेण मण्डलानि विधीयते
ककारं च दकारं च ओंकारादीनि विन्यसेत् १३
तदूर्ध्वे शालिभिश्चैव नवकोष्ठं पृथक्पृथक्
तदूर्ध्वे भाण्डानि संस्थाप्य पूरयेत्क्षाळिताम्भसा १४
द्रोण ++ जलेनैव +++++++ संपूरयेत्
गंगा च यमुना चैव नर्मदा च सरस्वती १५
सिन्धुर्गोदावरी चैव कावेरी ताम्रपर्णिका
मध्यमे पुण्यतीर्थे च ++ मतं च यथाक्रमम् १६
गन्धपुष्पादिभिः पूज्य नववस्त्रैश्च छादयेत्
तदन्ते द्वारमभ्यर्च्य गर्भगेहं प्रविश्य च १७
पूर्वपुष्पं विसृज्याथ गज त्रंच मर्दयेत्
पूर्ववल्लिंगशुद्धिं च तज्जले नाभिषेचयेत् १८
ऋगाद्यध्ययनं कुर्यात् तत्काले तु विशेषतः
शिवबीजं समुच्चार्य कुम्भतोयाभिषेचनम् १९
मंत्रपुष्पं समभ्यर्च्य मंत्रान्नं च निवेदयेत्
देशिकानुज्ञया चैव कर्ता पूर्वं समर्चयेत् २०

नमो भगवते ताराडव रुद्राय नीलकराठाय नमो नमः
वस्त्रादीनिरलंकृत्य गन्धमाल्यैरलं कृतम् २१
निवेद्यादीनि कर्तव्यं उत्तमा मध्यमाऽधमा
तद्द्रव्यं पंचधा कृत्वा एकांशं पूर्वमेव हि २२
पूर्वमेव क्रमेरौव नैवेद्याथ प्रदापयेत्
नित्याग्नियजनं कुर्याच्छान्तिहोमं समारभेत् २३
अन्तर्बलिसमायुक्तं बलिदानं तु कारयेत्
नित्योत्सवविधानेन बलिदानं तु कारयेत् २४
धूपदीपसमायुक्तं सर्ववाद्यसमायुतम्
द्वितीयापूजा कर्तव्यं विघ्नेशं पूजयेद्बुधः २५
पुरायाहं वाचयित्वा तु पंचगव्यं विशेषतः
पंचविंशतिसंख्यैश्च स्नपनं तत्र साधयेत् २६
मौनकुंभं तु संस्थाप्य तदर्थे मराडलं भवेत्
यकारादि हकारान्तं अक्षरं लोकयेत्क्रमात् २७
तदूर्ध्वे शालिभिः कृत्वा स्थरिाडलं तु पृथक्पृथक्
अगस्त्यश्च पुलस्त्यश्च विश्वामित्रः पराशरः २८
वसिष्ठः कार्तिकेयश्च गौतमो भृगुरेव च
ऋषीणामधिदैवत्यं पूजयेद्गन्धपुष्पकैः २९
पूर्वकद्वारमभ्यर्च्य ततो लिंगं प्रविश्य च
तैलादिस्नपनान्तं च गवैरैरभिषेचनम् ३०
मंत्रपुष्पं च कर्तव्यं मंत्रान्नं च निवेदयेत्
पूर्वमेव क्रमेरौव जातिपुष्पं समर्चयेत् ३१
श्रीकराठाय नमस्तुभ्यं गंगाधर नमोनमः
पदक्रमेरा जप्त्वा तु भूसुरान्वेदपारगान् ३२
निवेद्यादीनि कर्तव्या तद्दशांशं निवेदयेत्
शान्तिहोमं च कर्तव्यं पूर्वोक्तेन बलिं ददेत् ३३

धूपदीपसमायुक्तं पूजयेत्तु विचक्षणः
तृतीय पूजा कर्तव्यं मध्याह्ने पूजनं कुरु ३४
प्रथमं विघ्नपूजा च संकल्पं च तृतीयकम्
इक्षुसारफलं चैव तृतीयां साधयेद्बुधः ३५
एकोनपंचाशत्संख्यास्नपनं च यथाक्रमम्
पंचममक्षरन्यासं चकारादिक्रमान्न्यसेत् ३६
तदूर्ध्वे स्थण्डिलं प्रोक्तं तत्तन्मंत्र क्रमेण तु
हिमंभजं च कर्पूरं एकपात्रे सुपूरयेत् ३७
स्थण्डिलोर्ध्वे न्यसेद्धीमान्बीजमुख्यैश्च पूजयेत्
एवं सर्वं समाप्याथ द्वारं संपूजयेत्ततः ३८
तत्काले सर्ववाद्यं च कुरवशब्दसमाकुलम्
स्थापितस्य क्रमेणैव स्नापयेत्परमेश्वरम् ३९
पतिबीजं जपेद्धीमान् बीजमुख्य समन्वितम्
बिन्दुनाद समायुक्तं अभिषेकं च कथ्यते ४०
मंत्रान्नं मंत्रपुष्पं च गौळामंत्रेण दापयेत्
ततः कर्ता च कर्तव्या देशिकानुज्ञया सह ४१
पद्मपुष्पं समादाय अर्चयेत्तु विचक्षणः
त्रिसप्तमकर्णागमै कयुतोऽर्धचन्द्रवान् ४२
त्रिपंचमो बिन्दुयुतो +++ त्रवादिकम्
मनसा मृत्युंजयं +++ आत्मकस्फुटम् ४३
++++ समीरण स्माधकं रक्षरक्ष माम्
एवं मंत्रं समुच्चार्य अष्टाधिकशतं क्रमात् ४४
अर्चनान्ते तु कर्तव्यं नैवेद्यं च प्रदापयेत्
पंचांशांशं च कर्तव्यं हृदयेन प्रदापयेत् ४५
तदन्ते होमयेत्सम्यक् नित्याग्नौ शान्तिहोमकम्
अन्तर्बलिसमायुक्तं परिवारबलिं ददेत् ४६

धूपदीपसमायुक्तं उपचाराणि पूर्ववत्
चतुर्थे पूजा कर्तव्या विघ्नेशं पूजयेद्बुधः ४७
अपूपादि निवेद्याथ धूपदीपं ददेद्गुरुः
पुण्याहं वाचयित्वा तु संकल्पमिति बुद्धिमान् ४८
पनसाम्रफलं चैव स्नापनं च विशेषतः
मध्यमामध्यमं ज्ञेयं स्नपनं च यथाक्रमम् ४९
कुटजं मल्लिका पुष्पं नीलोत्पलं चतुर्थकम्
हरिबेरं च संमिश्रं एकपात्रे सुपूरयेत् ५०
पंचब्रह्माणि विन्यस्य पूजयेत्तु विचक्षणः
पूर्वोक्तविधिना चैव अभिषेकं समाचरेत् ५१
मंत्रान्नं मंत्रपुष्पं च व्योमरूपेण दापयेत्
तदन्ते मिश्र पुष्पाणि अर्चयेत्तत्क्रमेण तु ५२
पश्चाद्धोमं समारभ्य शान्तिहोमं तु कारयेत्
द्वारादिबलिपीठान्तं बलिदानं तु कारयेत् ५३
धूपदीपं तदन्ते तु ताम्बूलं भस्म दापयेत्
विघ्नेशं पूजयेत्पूर्वं नवकं स्नापयेत्प्रभुम् ५४
नाळिकेरं गुळं चैव इक्षुखण्डं फलं तदा
सर्वं निवेद्य देवाय शिवं मंत्रमनुस्मरन् ५५
पुण्याहं वाचयेत्तत्र संकल्पं चैव बुद्धिमान्
अष्टोत्तरशतं चैव स्नपनं पूर्ववत्क्रमात् ५६
नानाविधसुपुष्पाणि कांस्यपात्रे सुपूरयेत्
पंचब्रह्मषडंगैश्च अभिमंत्र्य च बुद्धिमान् ५७
द्वारस्थदेवान्संपूज्य वास्तुब्रह्माणमर्चयेत्
लिंगशुद्धिं पुरा कृत्वा पंचब्रह्ममनुस्मरन् ५८
तत्काले सर्वथोषैश्च अभिषेकं क्रमात्कुरु
मंत्रान्नं मंत्रपुष्पं च अष्टपुष्पं च दापयेत् ५९

शाम्भवि तमन्त्रेण पूजयेत्तु समर्चयेत्
नैवेद्यं दापयेत्पश्चाद् तद्देवांशं निवेदयेत् ६०
पायसान्नं गुळान्नं च पायसं च निवेदयेत्
ततो होमं प्रकर्तव्यं कूष्माण्डाहुतिमाचरेत् ६१
शुभ ++ हं च कर्तव्यं मिन्दाहुतिमथाचरेत्
अग्निं विसृज्य विधिवद्बलिदानं तु कारयेत् ६२
उपचाराणि सर्वाणि पूर्वमेव समाचरेत्
कळबेरं च कर्तव्यं पूजयेत्तु विशेषतः ६३
आशीर्वादं च कर्तव्यं भस्मानं दापयेत्ततः
राजरक्षाविधिः प्रोक्तो योगपूजा विधिं शृणु ६४
इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे राजरक्षा विधि पटलः २

अथ वक्ष्ये विशेषेण योगपूजाविधिक्रमम्
चैत्रादिभाद्रमासान्तं शुक्लपक्षे शुभं परम् १
चतुर्थी पंचमी चैव अष्टमी दशमी तथा
महेशस्य तु नक्षत्रे आर्द्रानक्षत्रमेव वा २
राज्ञां जन्म दिने वापि शुभवारसमन्वितम्
योगपूजा प्रकर्तव्यं तत्फलं बहुधोच्यते ३
विप्रादीनां नराणां च ++++++++
तद्देशाधिपती राजा शिवसायुज्यमाप्नुयात् ४
योगपूजाविधानज्ञो शिवद्विजकुलोद्भवः
पूजां कृत्वाथ विधिवन् नटेशस्य विशेषतः ५
पूजारम्भदिनात्पूर्वं नवमे सप्तमेऽपि वा
त्रिदिने वा प्रकर्तव्यं वारं भूसुरभोजनम् ६
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा
तैलाभ्यंगसमायुक्तं आदराद्भोजनं नयेत् ७

दक्षिणां दापयेत्पश्चाद् यथाशक्तिविशेषतः
ततोन्यदिष्टान्संपूज्य अतिथिं पूजयेत्ततः  ८
रुद्राक्षं संख्यया प्रोक्तं द्विशतं मूर्ध्नि धारणम्
वर्णसंख्या गळं चैव बाहुसंख्या दशाष्टकम्  ९
सर्वमेतत्क्रमेणैव द्विगुणी कृत्य बुद्धिमान्
क्षौमपट्टादिसूत्राद्यैः योजयेत्सुदृढं कुरु  १०
मुखे मुखं च संयोज्य पुच्छे पुच्छं च योजयेत्
अथवान्य प्रकारेण अन्तरे ग्रन्थिसंयुते  ११
प्रवाळं मौक्तिकं मिश्रं योजयेत्तु विचक्षणः
सावित्र्यंगुलमात्रेण वेत्रदण्डं समा भवेत्  १२
कनिष्ठांगुळिपरीणाहं शार्दूलं चर्म संगृहेत्
कौपीनं दण्डसंयुक्तं तस्याधा ++ संगृहेत्  १३
पूर्ववद्दक्षिणं चैव भिक्षापात्रं कमण्डलुम्
एवं सर्वं समापाद्य युक्तियुक्तेन शोभितम्  १४
तद्दिनात्पूर्वदिवसे रात्रौ पूजावसानके
सापरक्षावसाने वा नृत्तमण्टपमाविशेत्  १५
सर्वालंकारसंयुक्तं मण्टपं भूषयेत्ततः
नृत्तमूर्तिमलं कृत्य दक्षिणाभिमुखस्थितम्  १६
सर्वद्रव्यान्समादाय देवाग्रे स्थण्डिले स्थितम्
विज्ञापनं च कर्तव्यं आज्ञया गृह्य बुद्धिमान्  १७
विघ्नेशं पूजयेत्पूर्वं संकल्पमिति बुद्धिमान्
पुण्याहं वाचयित्वा तु रक्षाबन्धं तु पूर्ववत्  १८
नटेशं प्रदक्षिणीकृत्य इतराण्यपि पूर्ववत्
भास्करस्योदयात्पूर्वं इमां पूजां समारभेत्  १९
आचार्यः सुप्रसन्नात्मा सोष्णीषः सोत्तरीयकः
उत्तराभिमुखः स्थित्वा सकळीकृतविग्रहः  २०

गणेशं पूजयेत्पूर्वं गणानां त्वेति मंत्रतः
पुण्याहं वाचयित्वा तु भूसुरान् संख्यकाम् २१
चतुर्थां स्थण्डिलं कल्प्य तण्डुलादिविचित्रितैः
अष्टमृत्साधनं चापि पंचगव्यं च साधयेत् २२
विद्यापीठं च संस्थाप्य गुरुकुम्भं च विन्यसेत्
तत्कुम्भे स्वगुरुं पूज्य उपदेशस्य मार्गतः २३
ससूत्रान्सापिधानांश्च सवस्त्रान्हेमसंयुतान्
एवं तु नवकं स्थाप्य तत्र देवीं विना बुधः २४
तद्द्रव्यं चाम्भसंस्नाप्य शुद्धपात्रोपरि न्यसेत्
देवस्य वामभागे तु स्थापयेद्देशिकोत्तमः २५
ततो होमं प्रकर्तव्यं अग्निकार्योक्तमार्गतः
रुद्राक्षं शिवबीजेन ब्रह्मबीजेन दण्डकम् २६
शार्दूलं प्रणवं चापि मात्रादण्डं त्रियक्षरम्
कौपीनं करिवद्ध्यात्वा लकुळीं भस्मधारिणीम् २७
रमांगमण्डलं पूज्य तीर्थपात्रं षडक्षरम्
एवं द्रव्याणि सर्वाणि तत्तन्मन्त्रक्रमेण तु २८
गन्धपुष्पादिभिः पूज्य संपाता भूतिमाचरेत्
पात्रमध्ये स्थितं द्रव्यं देहैराच्छाद्य शास्त्रकैः २९
परितो यवनिकाच्छाद्य अन्तस्थो देशिको भवेत्
शिवमंत्रं जपेद्धीमान् रात्रिशेषं व्यपोह्य च ३०
प्रातःस्नानादिकं कृत्यं देशिकस्सम्यगाचरेत्
अन्तर्हारस्य वामे तु प्रपां कृत्वा सलक्षणाम् ३१
तन्मध्ये स्नानवेदीं च कल्पयेत्कल्पवित्तमः
नटेशं तत्र विन्यस्य शुद्धतैलं च मर्दयेत् ३२
पंचगव्याभिषेकं च अष्टमृत्सलिलं तथा
धूपदीपसमायुक्तं कुम्भतोयाभिषेचनम् ३३

अनन्तादींश्च कुंभाश्च तत्तत्स्थानेऽभिषेचयेत्
वेदध्वनिसमायुक्तं भेरिकाघोषणैस्सह  ३४
मंगळार्थं  च कर्तव्यं सर्ववाद्यसमाकुळम्
स्नानोद्वर्तनकं कुर्यात् पूर्वस्थाने निवेशयेत्  ३५
तन्मध्ये मण्डलं कल्प्य द्विशतैर्दर्भमाहरेत्
शार्दूलाजिनमेवं च ऊर्ध्वे योगासनं भवेत्  ३६
तदूर्ध्वे स्थापयेत्कुंभं दक्षिणाभिमुखस्थितम्
शंभुं कौपीनमाच्छाद्य बीजमुख्यं समुच्चरन्  ३७
क्षौमेन वा दुकूलेन नववस्त्रेण वेष्टयेत्
श्वेतचन्दनलिप्तांगं दिव्यमाल्यैरलंकृतम्  ३८
ततो होमं प्रकर्तव्यं सहस्त्रं शाम्भवि+ तम्
शुक्रं बृहस्पतिं पूज्य स्वगुरुं पूजयेत्ततः  ३९
संभातामृतिमेवोक्तं सोमबीजेन बुद्धिमान्
प्रथमं मूर्ध्नि विन्यस्य शिवायनमसंयुतम्  ४०
द्वितीयांगुलिमूलं च वाकारेण समन्वितम्
तृतीयं बाहुके चैव वौकारं मंत्रमुच्चरन्  ४१
ततः प्रकोष्ठसंयुक्तं नकारं मंत्रमुच्चरन्
कण्ठालम्बनमेवोक्तं मकारं मंत्रमुच्चरन्  ४२
एवं क्रमेण संयोज्य बिन्दुनादसमन्वितम्
सहस्त्रं नाममभ्यर्च्य प्रणवादिनमोन्तकैः  ४३
अन्यद्द्रव्याणि सर्वाणि देवाग्रे विन्यसेत्ततः
त्रिपादीं तत्र विन्यस्य जलद्रोणीं च विन्यसेत्  ४४
तत्पात्रे जलमापूर्य जलद्रव्यं च संग्रहेत्
कर्पूरं कुंकुमं पात्रं कल्हारं कमलं तथा  ४५
चन्दनं तुळसी चैव हरिबेरं च कोष्ठकम्
सर्वतीर्थानि संकल्प्य हृन्मंत्रेण विनिक्षिपेत्  ४६

पत्तिमंत्रं जपेद्धीमान् अमृतं भावयेत्स्वयम्
पूर्वास्यश्चोत्तरास्यो वा तज्जलेन तु तर्पयेत् ४७
सहस्रमर्धमर्धं वा शिवबीजेन तर्पयेत्
देवदक्षिणादिग्भागे योगासनं प्रकल्पयेत् ४८
तन्मध्ये प्राङ्मुखः स्थित्वा शताधिकं जपेत्क्रमात्
ततो होमं प्रकर्तव्यं तत्संख्यैश्च पृथक्पृथक् ४९
पूर्णाहुतिं ततः कृत्वा कृसरान्नं निवेदयेत्
धूपदीपं हृदा जप्त्वा कर्पूरं च निवेदयेत् ५०
प्रदक्षिणनमस्कारं शिवमुद्दिश्य देशिकः
सायाह्नसमये काले आलयं तु प्रदक्षिणम् ५१
नित्यपूजाविधानेन नित्यपूजां समारभेत्
एकाहं वा त्रियाहं वा पंचाहं चोत्तमं भवेत् ५२
एवं क्रमेण विधिना वि+++ ण्यनुकारयेत्
योगपूजां तदन्ते तु महाहविर्निवेदयेत् ५३
कौपीनं वेत्रदण्डं च यतीनां दापयेत्ततः
मात्रादण्डं च पात्रं च शुद्धयोगिं प्रदापयेत् ५४
कर्णबाह्वोश्च रुद्राक्षं +++ दापयेद्बुधः
प्रकोष्ठसंधिरुद्राक्षं भूसुराणां प्रदापयेत् ५५
इतराण्यपि सर्वाणि आचार्याय प्रदापयेत्
आचार्यं पूजयेत्तत्र गोभूमिस्वर्णसंयुतम् ५६
एवं कृते तदन्ते तु तत्फलं भवति ध्रुवम्
योगपूजाविधिः प्रोक्तो ++++++++++ ५७
इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे योगपूजाविधिपटलः ३

महाव्रतस्य माहात्म्यं व्रतानामुत्तमोत्तमम्
महाव्रतस्य माहात्म्यं +++++++ १

धर्मार्थकाममोक्षार्थं कर्तव्यं ज्ञानसिद्धिदम्
शिवनिर्वाणसिध्यर्थं विशेषात्कामदं भवेत् २
तस्मात्सर्वप्रयत्नेन मर्त्यस्तद्व्रतमाचरेत्
मेषादिमीनपर्यन्तं सर्वमासेषु संग्रहेत् ३
कन्याकर्कटकं चापि धनुः कुम्भस्तथैव च
वृश्चिकं तु क्रमेणैव वर्जयेत्तु प्रयत्नतः ४
इतराण्यपि राशि स्यात् संग्रहेत्तु विचक्षणः
सर्वमासेषु कर्तव्यं शुक्लपक्षे व्रतं परम् ५
अश्वी मृगशिरश्चैव आर्द्राचाश्लेष एव च
माघचैत्रे सरोहिण्यौ वैष्णवं तु यथोचितम् ६
हेमराजतताम्रैर्वा निष्ककुंजसमन्वितम्
वज्रायुधं च शूलं च खड्गं खेटं च संयुतम् ७
पूर्व ++ लक्षणं प्रोक्तं निष्ककुंजं पृथक्पृथक्
शिवमंत्रसमायोग्यान् भूसुरानेकविंशतिम् ८
युवत्यौ गणिकाश्चैव संख्यै एकादश स्मृतः
द्विजातिशूद्रपर्यन्तं कर्तव्यं तु महाव्रतम् ९
मण्डपं तु प्रकर्तव्यं सप्तहस्तादिविंशतिः
आयामं चतुरश्रं वा ++ श्रं वाथ कारयेत् १०
सर्वालंकारसंयुक्तं लक्षणं पूर्ववत्कुरु
दक्षिणे पश्चिमे सौम्ये काले तत्र प्रकल्पयेत् ११
तत्साले लाजकं कुर्यात् एकद्वित्रिकपंचकम्
मध्यात्पंचमभागे तु वेदी हस्तप्रमाणतः १२
सार्धोत्सेधसमायुक्तं निम्नोन्नतविवर्जितम्
तत्पूर्वे योनिकुण्डं तु हस्तं वापि द्विहस्तकम् १३
तत्पूर्वे मण्डलार्थाय वेदीं कृत्वा विचक्षणः
द्विहस्तं वा त्रिहस्तं वा उत्सेधं द्वादशांगुलम् १४

शिल्पिनं तु विसृज्याथ गोमयालेपनं कुरु
शुद्धं कृत्वा विधानेन पुनः पुण्याहमाचरेत् १५
रजनीपिष्टचूर्णं च नानाचित्रविचित्रितैः
निश्चित्य दिवसात्पूर्वे त्रिदिने पंचमेऽपि वा १६
प्रातस्संध्यावसाने वा चण्डपूजावसानके
देशिको यजमानश्च भूसुराश्चापि योजितः १७
तैलाभ्यंगसमायुक्तं शुद्धस्नानं समाप्य च
शुद्धवस्त्रेण संवेष्ट्य देहशुद्धिं विधाय च १८
तन्मण्डपं प्रविश्याथ दक्षिणे भूसुराः स्थिताः
उत्तरे योषितः स्थाप्य ऐशान्ये कक्षसंस्थितिः १९
सिंहासनं च वेद्यूर्ध्वे तदूर्ध्वे वस्त्रपादिते
तदूर्ध्वे स्थलिकां न्यस्य तदूर्ध्वे त्वायुधान्यसेत् २०
पूर्ववेद्युपरि न्यस्य सर्वतो भद्रमेव च
गौरी तिलकमन्यद्वा पार्वती कान्तमेव वा २१
उत्तरे स्थण्डिलं कल्प्य कुंभं संस्थापनं कुरु
तत्कुम्भे चन्द्रमभ्यर्च्य चन्द्रबीजं शतं जपेत् २२
मण्डपस्य तु तन्मध्ये उत्तराभिमुखः स्थितः
आचार्यः सकळीकृत्य सोष्णीषस्सोत्तरीयकः २३
विघ्नेशं पूजयेत्पूर्वं संकल्पं च यथाक्रमम्
पुण्याहं वाचयेत्तत्र पंचगव्यं च साधयेत् २४
पंचामृतेन कर्तव्यं चाष्टमृत्सलिले तथा
तत्पूर्वे स्थण्डिलं कल्प्य पंचकोष्ठं समालिखेत् २५
पृथिव्यादीनि बीजानि कोष्ठमध्ये लिखेद्बुधः
तत्संख्यकुम्भमादाय क्षाळयेत्पशुमंत्रतः २६
कोष्ठपूजानि संपूज्य पृथिव्यादीनि मंत्रकैः
तदूर्ध्वे स्थापयेत्कुंभान् पूरयेद्गोळिताम्भसा २७

रत्नं वापि सुवर्णं वा निक्षिपेद्धृदयेन तु
पुरुषुतायेति मंत्रेण मध्य कुंभे सुपूजयेत् २८
ओजसेहेति मंत्रेण पूर्वकुंभे सुपूजयेत्
शंनो देवीति मंत्रेण दक्षिणे पूजयेद्बुधः २९
प्रजापतेति मंत्रेण सौम्ये कुम्भे सुपूजयेत्
एतन्मंत्रं जपेद्धीमान् तत्तन्मन्त्रमनुस्मरन् ३०
स्नानमण्टपमावेश्य स्नानश्वभ्रं च कल्पयेत्
स्थलिकासहिताञ्चास्त्रान् स्नानवेद्युपरि न्यसेत् ३१
वेदघोषैश्च वाद्यैश्च कुरवशब्दसमाकुलम्
पुरो वाच्य जलेनैव स्नापयेत्पतिमंत्रकैः ३२
पंचगव्यं च संस्नाप्य व्योमरूपमनुस्मरन्
पंचामृतं च कर्तव्यं शिवद्विजमिहोच्यते ३३
अष्टमृत्स्नपयेद्धीमान् विष्णुबीजं समुच्चरन्
स्नानान्तरे प्रकर्तव्यं शुद्धतोयाभिषेचनम् ३४
पंचब्रह्म समुच्चार्य पयसा स्नानमाचरेत्
शतप्रस्थं समारभ्य यथालाभं समारभेत् ३५
तत्तदायुधबीजैश्च तत्तन्न्यासक्रमेण तु
मध्यकुम्भं समादाय वज्रमूर्ध्न्यभिषेचयेत् ३६
शूलबीजं समुच्चार्य मंत्रपुष्पं सुदापयेत्
दक्षिणे कुम्भमादाय खड्गमूर्ध्न्यभिषेचयेत् ३७
खड्गमंत्रं समुच्चार्य मंत्रपुष्पं समर्चयेत्
पश्चिमे कुम्भमादाय खेटमूर्ध्न्यभिषेचयेत् ३८
खेटमंत्रं समुच्चार्य मंत्रपुष्पं समर्चयेत्
स्थालिकासहितान्बिम्बान् पूर्वस्थाने नियोजयेत् ३९
सौम्ये कुम्भं समादाय शम्बरैर्मन्त्रमुच्चरन्
भूसुरान्प्रोक्षयेत्पूर्वं योषितस्तदनन्तरम् ४०

कुंकुमागरुकर्पूर कस्तूरीचन्दनादिकान्
नानाविधसुपुष्पैश्च पात्रे संपूर्य देशिकः ४१
गौर्धेनुमंत्रमुच्चार्य शस्त्रान्संपूज्य पुष्पकैः
भूसुरान्लेपयेद्गन्धान् पुष्पानभ्यर्च्य पूजयेत् ४२
योषितो लेपयेद्गन्धं तत्पुष्पं दापयेत्सुधीः
पूर्वास्यश्चोत्तरास्यो वा भूसुरास्तत्र संस्थिताः ४३
प्रणवादि नमोन्ताश्च कालाग्निरुद्रसंयुतम्
श्रीं ह्रीं क्लीं बीजसंयुक्तं मंत्रं सम्यग्जपेद्बुधः ४४
शिवः पशुपतिश्चैव शंभुरीशकपर्दिनौ
महेशः शूलपाणिश्च किरीटो विक्रमस्तथा ४५
पिनाकी धूर्जटिश्चैव त्रिणेत्रो नीललोहितः
शंकरश्चैव भूतेशो वृषवाहनविक्रमः ४६
कालहारी प्रमर्दश्च वैनतेयः खगेश्वरः
एवं नामानि मंत्राणि क्रमेणैव तु भूसुराः ४७
सनकादीन् ऋषींश्चैव भूसुरान्भावयेद्गुरुः
गणिकाश्चापि तत्रैव रुद्रकन्याश्च भावयेत् ४८
एवं कृत्वा तदन्ते तु चन्द्रकुम्भे समर्चयेत्
ततो होमं प्रकर्तव्यं अग्निकार्योक्तमार्गतः ४९
समिदाज्य चरुं लाजान् सर्षपांश्च यवांस्तिलान्
नाळिकेरगुलं चैव इक्षुखण्डमपूपकम् ५०
पयोदधिसमायुक्तं नानाफलसमन्वितम्
प्रतिमंत्रेण कर्तव्यं होमयेत्तु पृथक्पृथक् ५१
पंचाशत्संख्यया चैव द्रव्यं प्रति च होमयेत्
जपादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ५२
शुचि वो हेति मन्त्रेण पूर्णाहुतिमथाचरेत्
वह्निबीजं समादाय तत्तन्मूलेन योजयेत् ५३

पायसान्नं गुळान्नं च शुद्धान्नं कृसरान्नकम्
फलादिरसवद्द्रव्याणि दापयेत्तु विचक्षणः ५४
धूपदीपसमायुक्तं उपचाराणि पूर्ववत्
स्तोत्रं जपं नमस्कारं यथाशक्ति तथा कुरु ५५
तदन्ते देवालयं प्राप्य देवदेवस्य संनिधौ
तत्प्रसादेन कर्तव्यं यत्क्रियाश्च ग्रहे ततः ५६
इति विज्ञाप्य देवेशं नमस्कृत्य समर्चयेत्
पूर्वस्थाने प्रविश्याथ आचार्यो भूसुरास्सह ५७
गणिकाश्च समायुक्तं तत्तत्स्थाने निवेशयेत्
क्रमेणैव तु कर्तव्यं आदराद्भोजनं भवेत् ५८
कर्पूरं दापयेत्पश्चात् कस्तूरी ++ न्दं च संकुलम्
नानाविधकथाः कुर्वन् संतोष्य परमेश्वरम् ५९
एवं प्रतिदिनं कृत्वा तद्दिने तु विशेषतः
पूजासमाप्तियुक्काले तत्काले प्रार्थयेच्छिवम् ६०
देवालयाग्रे कर्तव्यं प्रपां कृत्वा विचक्षणः
स्नानवेदीं न्यसेन्मध्ये यजमानान्तसंस्थितिम् ६१
पूर्वास्यश्चोत्तरास्यो वा हृदयाञ्जलिमुद्रया
आचार्यः शस्त्रमादाय यजमानस्य मूर्धनि ६२
यजमन्त्रं समुच्चार्य आयुधं विन्यसेद्बुधः
चन्द्रकुम्भं समादाय तद्बीजं हृदि विन्यसेत् ६३
तज्जलं स्नाप्य तत्स्थाने आर्द्रवस्त्रं त्यजेत्बुधः
शुद्धवस्त्रेण संवेष्ट्य चन्द्रचन्दनलेपयेत् ६४
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
गोभूमिसहिरण्यैश्च आचार्याय प्रदापयेत् ६५
द्विजानां दापयेत्तत्र पादुकं छत्रसंयुतम्
वस्त्रं स्वर्णसमायुक्तं यथा शक्ति प्रदापयेत् ६६

गणिकाश्चैव कर्तव्याश्चित्रवस्त्रं च दापयेत्
अपरे दिवसे धीमान् शंभुं तत्रैव पूजयेत् ६७
वसन्तोत्सवक्रमेणैव तोषयेत्प्रभुमादरात्
आयुधं गृह्य कर्तव्यं वित्तमध्ये प्रतिष्ठयेत् ६८
तत्फलं लभते मर्त्यः सपुण्यां गतिमाप्नुयात्
महाव्रतमिदं प्रोक्तं ++++++++++++ ६९
इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे महाव्रतविधिपटलः ४

अथ वक्ष्ये विशेषेण मृत्युंजयविधिं शृणु
जन्मान्तरकृतात्पापादपमृत्युर्विनश्यति १
अपमृत्युविनाशार्थं क्रियतेऽथ व्रतं मया
कालाग्निगृहदेवेशं पूजयेत्तु गुरूत्तमः २
शान्तिः स्यात्संपदं प्राप्य चिरं कालमवर्धतम्
पूजाक्रमं कथं देव द्रव्यं मंत्रं कथं प्रभो ३
ईश्वर उवाच
कर्तुर्जन्मदिने वापि रुद्रश्रवण एव च
पर्वद्वये च संक्रान्तौ सर्वमासे प्रशस्यते ४
त्रिपंचसप्तदिवसा उत्तमा मध्यमाधमा
निश्चित्य दिवसात्पूर्वे प्रातस्संध्यावसानके ५
देशिकः सकळीकृत्य स्वगुरुं पूजयेद्बुधः
अभीष्टं प्रार्थयित्वा तु गणेशं पूजयेत्क्रमात् ६
गन्धतैलेन संस्नाप्य पंचगव्यामृतादिभिः
इक्षुसारं पयः स्नाप्य नवकं स्नापयेद्गुरुः ७
मंत्रान्नं मंत्रपुष्पं च मूलमंत्रेण दापयेत्
देवदक्षिणदिग्भागे प्रपां कृत्वा विचक्षणः ८
मृत्पात्रे जलमापूर्य कर्पूरेण विमिश्रयेत्

पूर्वास्यश्चोत्तरास्यो वा तर्पयेन्मूलमंत्रतः ९
अष्टोत्तरशतं ज्ञेयं नैवेद्यं पूर्ववद्भवेत्
कुण्डे वा स्थण्डिले वापि होमं कुर्याद्यथाविधि १०
नाळिकेरं गुळं चैव कदळीफलमेव च
तण्डुळं तिलमिश्रं च तत्तत्संख्या च होमयेत् ११
वह्निस्थदेवमादाय तद्बिम्बे योजयेत्सुधीः
धूपदीपसमायुक्तं उपचाराणि पूर्ववत् १२
मया कृतं च यत्कर्म निर्विघ्ना त्वं प्रसीद मे
भस्मानं दापयेत्तत्र स्तोत्रं कुरु यथेप्सितम् १३
एवं गणेशपूजां च पूर्ववन्नित्यमेव च
देवाग्रे चैव कर्तव्यं सौरपूजां पुरोक्तवत् १४
प्रातस्सन्ध्यावसाने तु देशिकस्सकळी कृतः
विघ्नेशं पूजयित्वा तु संकल्पमिति बुद्धिमान् १५
पुण्याहं वाचयेत्पश्चात् पंचगव्यं च साधयेत्
पंचामृतं ततो स्थाप्य स्नानद्रव्याणि साधयेत् १६
ऋगाद्यध्ययनं कुर्यात् चतुर्दिक्षु जपं कुरु
वारैरंगारगाद्यैश्च तत्कर्तैस्तु रगादिभिः १७
तत्तन्मन्त्रं जपेद्धीमान् तत्तद्ध्यानमनुस्मरन्
विभवाद्यनुसारेण स्नपनं कारयेत्सुधीः १८
नीलोत्पलं च दान्तं च बिल्वपत्रं च मिश्रकम्
सुगन्धान्यन्यपुष्पाणि एकपात्रे सुपूरयेत् १९
शुचिवोयं जपेद्धीमान् पंचविंशतिसंख्यया
द्वारपूजां ततः कृत्वा लिङ्गशुद्धिं समाचरेत् २०
स्नानकाले विशेषेण मृत्युंजयं स्मरेद्गुरुः
आत्वाह ++ मित्यादि भूसुरेण जपेत्सुधीः २१
कालाग्निग्रहमूलेन स्नपनं कारयेत्प्रभुम्

मन्त्रान्नं मन्त्रपुष्पं च तन्मन्त्रेणैव दापयेत् २२
कृष्णवस्त्राद्यलंकृत्य सुगन्धादीनि लेपयेत्
महाहविः क्रमेणैव नैवेद्यं च निवेदयेत् २३
दक्षिणे पश्चिमे वापि उत्तरे वाग्रकेऽपि वा
द्विहस्तं वा त्रिहस्तं वा कुण्डं प्रागुक्तवत्कुरु २४
तत्पात्रे जलमापूर्य त्रिपाद्युपरि विन्यसेत्
कुंकुमागरुकर्पूरतज्जले मिश्रमेव च २५
सुगन्धिपुष्पैरभ्यर्च्य अमृतं भावयेच्छतम्
सहस्रमर्धमर्धं वा तर्पयेत्कालमंत्रकम् २६
ततो होमं प्रकर्तव्यं अग्निकार्योक्तमार्गतः
कालनिग्रहदेवेशं उमेशं संप्रपूजयेत् २७
आश्वत्थसमिदाज्यं तु कृसरं गुळमेव च
तण्डुलं नाळिकेरं च इक्षुखण्डं गुळं तथा २८
कदळीफलं च पनसं सर्वद्रव्यं चरुं हुनेत्
तर्पणात्त्रिगुणाधिक्यं द्रव्यं प्रति विशेषतः २९
कालनिग्रहमूलं च कालमूर्तेश्च मूलकम्
मृत्युंजयद्वयं चैव शुचिवोहं त्रियक्षरम् ३०
त्रिपंचाष्टनवं चैव एकाक्षरक्रमेण तु
पूर्णाहुत्यन्तमेव स्यात् प्रायश्चित्तं हुनेत्क्रमात् ३१
वह्निस्थदेवमादाय मूललिंगे सुयोजयेत्
निरोधार्घ्यं प्रकर्तव्यं नित्योत्सवमथाचरेत् ३२
देशिकस्याज्ञया चैव कर्ता पुष्पं प्रगृह्य च
मृत्युंजयेन वाभ्यर्च्य अष्टाधिकशतं स्मरेत् ३३
तदन्ते धूपदीपं च उपचाराणि पूर्ववत्
सर्ववाद्यसमायुक्तं कुरवशब्दसमन्वितम् ३४
तत्र देवेशमाराध्य अपमृत्युविनाशनम्

इति विज्ञाप्य देवेशं तत्प्रसादं प्रगृह्य च ३५
आचार्यं पूजयेत्पश्चाद् वस्त्रहेमांगुळीयकैः
गोभूमिसहिरण्यं च आचार्याय प्रदापयेत् ३६
हुतभस्म गृहीत्वा तु तद्भस्म दापयेत्ततः
चण्डेश्वरं समभ्यर्च्य यथा शक्ति जपेद्बुधः ३७
यदुक्तं कारयेद्धीमान् तच्छेषं कामिकोक्तवत्
इहलोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ३८
मृत्युंजयविधिः प्रोक्तो +++++
इत्युत्तरस्वायंभुवे मृत्युंजयविधिपटलः ५

अथ वक्ष्ये विशेषेण अरुणपूजाविधिक्रमम्
रूरु ++ विकटाद्याश्च देवैर्युद्धं प्रवर्तते १
अथ ++ देवास्तत्रापि विष्णुमूर्तीसहाश्रये
असभ्यविष्णुरूपेण शिवमूर्ते सहाश्रय २
देवदेवनमस्तुभ्यं सर्वरक्षाय ते नमः
इति विज्ञाप्य तत्काले तोषयेच्छम्भुमादरात् ३
दक्षिणान्ते प्रभां तस्या तत्काले उदमीश्वरम्
संतुष्टं शिवरूपेण राध्य सा दिक्प्रदर्शयेत् ४
असुराणां क्षयं दृष्ट्वा अच्युतादीन्क्रमेण तु
प्रभुराज्ञां समावेश्य लोकरक्षाय ते नमः ५
संधिद्वयं यथा कामी तत्काले शिवमर्चयेत्
तस्मात्सर्वप्रयत्नेन अरुणपूजां समाचरेत् ६
तत्पूजाद्विविधं धेनु नित्यनैमित्तकं भवेत्
अब्दं प्रतिविशेषेण मार्गमासादिके यथा ७
नैमित्तिकमिति प्रोक्तं तत्पूजाविधिनोच्यते
भास्करस्योदयात्पूर्वे त्रिपादेन त्रिनाडिका ८

निवेद्यार्थं तण्डुलं ग्राह्यं तत्संख्यां च ततः शृणु
द्रोणद्वयं समारभ्य द्रोणं चैव विवर्धनात् ९
त्रिभारान्तं यथायोग्यं उत्तमा मध्यमाधमा
व्यंजनं तु चतुर्थां शं तत्समं फलमुच्यते १०
अष्टांशं घृतसंयुक्तं सूपं तत्सममुच्यते
पयो दधिगुळादींश्च यथावित्तानुसारतः ११
अष्टांशमर्धमर्धं वा मुद्गमेवं प्रकीर्तितम्
नन्द्यावर्तं च दान्तं च गन्धादीन्संग्रहेत्ततः १२
पूजोपकरणं येन सर्वं संपाद्य यत्नतः
भोगांगनिलये चैव द्वाररक्षान्समाविशेत् १३
शीघ्रं नीत्वा कवाटं च अन्तस्थो देशिको भवेत्
देवदेवं नमस्कृत्वा विज्ञापनमथाचरेत् १४
देवेशस्याज्ञया चैव इमां पूजां समारभेत्
नित्यस्नानं यथा पूर्वं सकळीकृतविग्रहः १५
प्रथमं विघ्न पूजां च स्नानद्रव्यं च साधयेत्
द्वारपूजां ततः कृत्वा लिंगशुद्धिं समाचरेत् १६
स्नानद्रव्याणि सर्वाणि स्नानकालेऽभिषेचयेत्
तदन्ते मंत्रपुष्पं च गौळामन्त्रेण दापयेत् १७
प्रथमस्य चतुर्थन्तु चक्रमेकं निवेशयेत्
चतुर्थ +++ मुद्धृत्य सप्तमादिद्वितीयकम् १८
पंचमात्पंचमस्यैव तच्चतुर्थमुदाहृतम्
सप्तमस्य त्रयं येन द्वितीयस्य व्र ++ भवेत् १९
चतुर्थस्य द्वितीयं तु तत्पंचं प्रथमान्तकम्
सप्तमादिसमायोज्य गौळामंत्रमिति स्मृतः २०
चतुर्धारिसंख्यैश्च मंत्रपुष्पं च दापयेत्
मन्त्रान्नं दापयेच्छम्भुं तन्मन्त्रेणैव बुद्धिमान् २१

वस्त्रादिभिरलंकृत्य स्थलशुद्धिं ततः कुरु
पश्चात्त्रिपादीन्विन्यस्य पंचसप्तनवान्तकम्  २२
दर्व्या लक्षणयुक्तेन + पात्र म ++ पूरयेत्
तन्मध्यमेऽवटं कल्प्य पयः शुष्कं च पूरयेत्  २३
अन्यानि रसवस्तूनि मध्वाज्यानि च निक्षिपेत्
व्यंजनापूर्वपरितो ++ तदूर्ध्वं स्रावयेद्द्रुतः  २४
तथैव विघ्ने नैवेद्यं एकपात्रे प्रदापयेत्
अहमस्मीति मन्त्रेण भूसुरेण जपेत्सह  २५
देशिको दापयित्वा तु स्मरणेनैव बुद्धिमान्
परिवारामरादींश्च पूर्वोक्तविधिना सह  २६
निर्माल्यं तु विसृज्याय स्थलशुद्धिं समापयेत्
ताम्बूलं तु निवेद्याथ धूपदीपं ददेद्गुरुः  २७
मुखवासं च कर्तव्यं दर्पणादीनि दर्शयेत्
दान्तं च नन्द्यावर्तं च अरविन्दं च मिश्रकम्  २८
एकपात्रे समापूर्य तत्काले शिवमर्चयेत्
श्रीकण्ठाय नमस्तुभ्यं गंगाधर नमोनमः  २९
पिनाकिने नमस्तुभ्यं शूलपाणे नमोनमः
कपालिने नमस्तुभ्यं विश्वरूप नमोनमः  ३०
जगत्कर्त्रे नमस्तुभ्यं लोकसाक्षिन्नमोनमः
ईशानाय नमस्तुभ्यं अम्बिका पतये नमः  ३१
चिदम्बर नमस्तुभ्यं चित्प्रकाश नमोनमः
अरूपिणे नमस्तुभ्यं रूपिने च नमो नमः  ३२
एवं मन्त्रं गृहीत्वा तु भानुसंख्यां समर्चयेत्
उपचाराणि सर्वाणि पूर्ववत्कथितं मया  ३३
वेदाध्यनमन्त्रेण अर्धमण्डपमाविशेत्
शिवदीक्षाय मर्त्यां श्च द्वारबाह्ये प्रवेशयेत्  ३४

आचार्यः सुप्रसन्नात्मा बीजमुख्यं शतं जपेत्
चण्डपूजाविना कार्यं अरुणमिश्रमिहोच्यते ३५
एवं क्रमेण कर्तव्यं प्रातस्संध्यां समारभेत्
अरुणपूजाविधिः प्रोक्तो +++++++++ ३६

इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे मार्गशीर्षमासे
प्रभातपूजापटलः ६

गौरीव्रतमथो वक्ष्ये व्रतानामुत्तमोत्तमम्
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् १
आषाढे पूर्वपक्षे तु चतुर्दश्यावधि व्रतम्
शुक्लपक्षेऽप्यथाष्टम्यां नित्यसंध्यावसानके २
देवदेवं नमस्कृत्य व्रतं विज्ञाप्य देशिकः
देवालयं प्रविश्याथ देवीं स्नानं समाचरेत् ३
वस्त्रादिभिरलंकृत्य तिलकं चन्दनेन तु
अथवा सर्वमासेषु शुक्लपक्षे चतुर्दशी ४
विघ्नेशं पूजयेत्पूर्वं रक्षाबन्धः पुरोक्तवत्
भूसुरान्भोजयेत्पश्चाद् यथावित्तानुसारतः ५
मण्डपं कल्पयेत्तत्र आयामं चतुरश्रकम्
सर्वलक्षणसंयुक्तं वितानाद्यैरलंकृतम् ६
मध्ये वेदी प्रकर्तव्या हस्तमात्रप्रमाणतः
तत्समं पूर्वभागे तु युगाश्रं कुण्डमेव च ७
पूर्ववेदीं तदूर्ध्वे तु गौरीतिलकमण्डपम्
पश्चिमे वेदिमध्ये तु रजनीचूर्णमास्तरेत् ८
कर्पूररेणुना चैव अक्षरं लेखयेत्सुधीः
योगासनादिदैवत्यं तद्बीजं लेखयेत्क्रमात् ९
तदूर्ध्वे वस्त्रमाच्छाद्य देवीं तत्रैव विन्यसेत्

सप्तपंचत्रिसंख्यैश्च ब्राह्मणैर्वेदपारगैः १०
समाहूय क्रमेणैव पूर्ववत्पूजयेद्बुधः
दीपपूजावसाने तु व्रतं सम्यक् समाचरेत् ११
देशिकः सकळीकृत्य विघ्नेशं पूजयेत्ततः
दीपे दुर्गां समभ्यर्च्य तन्मंत्रं च स्मरन्गुरुः १२
श्रीं ह्रीं बीजं समादाय अष्टोत्तरशतं जपेत्
मण्डले पूर्ववत्पूज्य शिवबीजं तथा जपेत् १३
देवदेवं समुद्दिश्य देवीं सम्यक् समर्चयेत्
कुण्डमध्ये विशेषेण सिंहासनं प्रकल्पयेत् १४
महेशमूर्तिमाबाह्य परिवारगणैस्सह
कर्पूरं कुंकुमं पत्रं लवंगं च पलत्रयम् १५
चन्दनोशीरलोहैश्च हिमतोयेन मिश्रकम्
रक्तपद्मं पलाशं च रक्तोत्पलं च पाटली १६
मौसली चैव धूर्धूरं बृहती करवीरकम्
व्याघ्री च रक्तमन्दारं ++++ पट्टिक तथा १७
अस्त्रं बीजं समुच्चार्य गन्धमालेपयेत्प्रभुम्
क्ष्मं सौं बीजं समुच्चार्य पृथ्वीं प्रति समर्चयेत् १८
दुकूलपट्टवस्त्राद्यैः शिवबीजेन योजयेत्
पाद्यमाचमनं चार्घ्यं क्षुरिकेणैव योजयेत् १९
समिदाज्य चरुं लाजान् इक्षुखण्डं फलं तथा
नाळिकेरं गुळं चैव कृसरं माषमेव च २०
प्रशातायेति हृदयं प्रणवात्मने नमः शिरः
शिवाय हुं शिखामन्त्रं याह्नुंकार पुरुष्टुतः २१
फट्कारस्तु स्मृतं चास्त्रं ओं जुं सौ नेत्रमध्यमे
ह्रीं श्रीं क्लीं सौं नम इति स्वाहान्तेनैव होमयेत् २२
वर्णसंख्या क्रमेणैव द्रव्यं प्रति विशेषतः

शिवबीजं समुच्चार्य पूर्णाहुतिमथाचरेत् २३
पायसान्नं निवेद्याथ दीपं कर्पूरवर्तिना
कर्पूरं च निवेद्याथ प्रार्थयेत्तु विचक्षणः २४
वह्नेर्बीजं समादाय मण्डलस्थं सुयोजयेत्
गुह्यं मंत्रं समुच्चार्य मण्डले तु सुपूजयेत् २५
भूसुरान्पूजयित्वा तु ऋषीणां मन्त्रमुच्चरन्
शुद्धान्नं पायसं वाथ देव्यै तत्र निवेदयेत् २६
कुण्डस्य वामपार्श्वे तु भूसुरांस्तत्र संस्थितान्
आत्वाहामीत्यादिपूर्वसंध्यां जपेत्क्रमात् २७
कुण्डदक्षिणभागे तु देशिकः सकळीकृतः
नवाक्षरं जपेद्धीमान् अष्टोत्तरशतान्तकम् २८
एवं जागरणं रात्रौ प्रभाते विमले शुभे
नित्यस्नानादिकं कृत्वा प्रदक्षिणमथा चरेत् २९
रुद्रश्च द्वादशश्चैव पक्षश्च षोडशस्तथा
पादात्पादान्तरं कृत्वा करौ च निलवर्जितौ ३०
नानास्तोत्रसमायुक्तं भूसुरा देशिकैस्सह
प्रातस्संध्यावसाने तु पूर्ववद्व्रतमाचरेत् ३१
एवं प्रतिदिनं कुर्यात् त्रिपंचसप्तदिनेऽपि वा
चतुर्दश्याविधिर्यावद्दीपपूजां प्रयत्नतः ३२
महाहविर्निवेद्याथ तोषयेत्परमेश्वरीम्
तदन्ते वृषभं पूज्य तदग्रे स्थण्डिलं कुरु ३३
कुण्डमण्डलयोर्बीजं शृंगमध्ये सुयोजयेत्
रक्षाबन्धं विसृज्याथ स्थण्डिले तु समर्चयेत् ३४
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं मया कृतम्
अकृतं च मया दत्तं संपूर्णं कुरु शंकर ३५
इत्येवं प्रार्थयित्वा तु दक्षिणां दापयेत्ततः

आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ३६
भूसुरान्दापयेत्तत्र गोवस्त्रतिलसंयुतम्
पार्वतीसहितो देव सर्वकाम्ये प्रदापयेत् ३७
एतद्व्रतं च कर्तव्यं लोकानां हितकाम्यया
एवं क्रमेण कर्तव्यं लोकानां हितकाम्यया ३८
गौरीव्रतविधिः प्रोक्तो जयपूजाविधिं शृणु
इत्युत्तरस्वायंभुवे प्रतिष्ठा तन्त्रे गौरीव्रतविधिपटलः ७

अथ वक्ष्ये विशेषेण जयपूजाविधिं शृणु
इष्टकाम्याय मर्त्यानां भूपतीनां विशेषतः १
परसंहारकरणं अपमृत्युविवर्जितम्
सर्वमासेषु कर्तव्यं तत्तज्जन्म दिनेऽपि च २
पूजोपकरणं सर्वं देवाग्रे विन्यसेत्ततः
विज्ञापनं च कर्तव्यं संपूज्य गुरुशंकरम् ३
प्रातस्संध्यावसाने तु आचार्यस्सकली कृतः
गणेशं पूजयेत्पूर्वं संकल्पं पूर्ववद्गुरुः ४
पुण्हाहं पंचगव्यादि पूर्वोक्तविधिना सह
स्नपनं कारयित्वा तु मध्यमोक्तक्रमेण तु ५
पूर्वाद्याशासु कर्तव्यं वसुकुम्भं प्रतिष्ठितम्
महाशासु ऋृगादीनि शुचिवोऽहं तु वर्तिके ६
राक्षसे वारुणं सूक्तं वारुणे स्कन्दसूक्तकम्
आत्वाहरार्धमित्यादि ऐशान्ये च यथाक्रमम् ७
अष्टोत्तरशतं जप्त्वा भूसुरान्वेदपारगान्
मूर्तिपैश्चैव कर्तव्यं मृत्युंजयमनोर्जपम् ८
एवं संकल्प्य मतिमान् द्वारपूजां समारभेत्
वास्तुब्रह्म च संपूज्य बेरशुद्धिं च पूर्ववत् ९

स्नानद्रव्याणि सर्वाणि स्नानकालेऽभिषेचयेत्
पूर्वादिना क्रमेणैव वेदकुम्भाभिषेचनम्  १०
तदन्ते स्नपनं स्नाप्य मंत्रान्नं मंत्रपुष्पकम्
नीलोत्पलं च दान्तं च पद्मं चैव सुजातिकम्  ११
एतत्पूर्वं  च संमिश्रं कांस्यपात्रे सुपूरयेत्
अष्टोत्तरशतं जप्त्वा मूर्तिमंत्रं च बुद्धिमान्  १२
देशिकस्याज्ञया चैव कर्ता पुष्पं प्रगृह्य च
प्रथमं प्रतिमंत्रं च द्वितीयं जयमन्त्रकम्  १३
एकाक्षरी तृतीयं च शिवमंत्रं चतुर्थकम्
प्रणवादिकमध्यस्थं क्रमोऽन्तं मंत्रमुच्चरन्  १४
वर्णं  प्रति विशेषेण वर्णसंख्या समर्चयेत्
एतत्संख्यां समभ्यर्च्य कर्ता देशिकसंयुतः  १५
पश्चाच्छंभुमलंकृत्यार्चयेदावरणादिकम्
महाहविः क्रमेणैव नैवेद्यं दापयेत्क्रमात्  १६
तदन्ते शान्तिहोमं च होमद्रव्यं विशेषतः
नाळिकेरं पयश्चैव इक्षुदण्डमपूपकम्  १७
मधुशर्करया युक्तं कदळीफलसंयुतम्
सद्यादिमूर्ध्निपर्यन्तं स्वाहान्तं प्रणवादिकम्  १८
बीजसंख्या क्रमेणैव द्रव्यं प्रति च होमयेत्
अन्तर्बलिसमायुक्तं परिवारबलिं ददेत्  १९
उपचाराणि सर्वाणि पूर्वमेव क्रमेण तु
सकळादिषु कर्तव्यं पूजयेत्तु विशेषतः  २०
देवदेवं नमस्कृत्य कर्ता देशिकसंयुतः
प्रार्थयेत्सर्वकार्याणि देशिकं वाचयेत्ततः  २१
एवं विज्ञाप्य तत्काले तत्फलं प्रतिगृह्य ताम्
जयपूजाविधिः प्रोक्तो दीपपूजाविधिं शृणु  २२

## इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे जयपूजाविधिपटलः ८

दीपपूजां प्रवक्ष्यामि शिवज्ञानप्रसिद्धिदम्
पराशक्तिस्वरूपत्वात् कर्तुरायुष्करं परम् १
सर्वमासेषु कर्तव्यं निश्चित्य शुभवारके
निश्चित्य दिवसात्पूर्वे रात्रौ दीपावसानके २
द्रोणादि च द्विभारान्तं द्रोणद्रोणविवर्धनात्
यथा शक्ति प्रकर्तव्यं +++++ गोघृतेन च ३
मृत्पात्रे कांस्यपात्रे वा तत्पात्रं मानवत्कुरु
द्वादशांगुलमारभ्य द्विद्व्यंगुलविवर्धनात् ४
विंशत्यंगुलदैर्घ्यं तु तत्र विस्तारमध्यमे
त्रिचतुः पंच वांगुल्यं भित्तिरुत्सेध उच्यते ५
घनं पादांगुलेनैव त्रिपादमोष्ठविस्तृतम्
पूर्णचन्द्रवदाकारं पात्रलक्षणमुच्यते ६
अनामिकापरीणाहवर्ति कल्पेत्तु पुत्तळी
वीरशक्त्यालये चैव तदग्रे वाथ पार्श्वके ७
अधिवासः प्रकर्तव्यः शालिभिस्थण्डिलं कुरु
द्रोणद्वयं समारभ्य दशद्रोणावसानकम् ८
स्थण्डिलद्वितयं कृत्वा स्थण्डिलादि यथाविधि
हस्तमात्रेण विस्तारं तत्पात्रे विन्यसेद्दृढम् ९
गणेशं पूजयेत्पूर्वं संकल्पं च यथाक्रमम्
भूतशुद्धिश्च कर्तव्या शुभमसीत्यादि मंत्रतः १०
गौरीगायत्रिमंत्रेण तत्पात्रे पूरयेद्घृतम्
पात्रे पूर्यं तु शेषं च मृद्भाण्डे पूरयेत्सुधीः ११
अघोरास्त्रेण संप्रोक्ष्य दर्भैराच्छाद्य देशिकः
तत्पात्रे पूजनं कृत्वा दिक्षु पूर्वादिषु क्रमात् १२

वामादिशक्तयश्चाष्टौ तत्तद्बीजेन बुद्धिमान्
मध्ये मनोन्मनीं न्यस्त्वा गन्धपुष्पादिनार्चयेत् १३
पुत्तळी दीपमारोप्य शक्तिबीजमनुस्मरन्
पायसान्नं निवेद्याथ धूपदीपं ददेद्गुरुः १४
रक्षाबन्धं च कर्तव्यं पूर्वोक्तविधिना सह
सहस्त्रं वा तदर्धं वा गौरी बीजं जपेद्गुरुः १५
प्रातस्संध्यावसाने तु विघ्नेशं पूजयेद्बुधः
पुण्याहं पंचगव्यं च नवकं पूर्ववत्कुरु १६
द्वारपार्श्वे तु कर्तव्यं दीपाधारं प्रकल्पयेत्
धाम्नस्तु भक्त्या सर्वेषु दीपयज्ञे सुयोजयेत् १७
दीपावळिं यथा युक्ति यथा शोभं प्रकल्पयेत्
दीपपात्रं च संकल्प्य प्रोक्षयेत्पुरुषेण तु १८
मृद्भाण्डे घृतमादाय तत्तत्पात्रे सुपूरयेत्
गृहीत्वाधिवासदीपं देवाग्रे विन्यसेत्सुधीः १९
दीपाद्दीपं समादाय तत्तद्दीपं प्ररोपयेत्
शक्त्यादिशक्तिपर्यन्तं पूजयेद्दीपमालया २०
द्वारं पूर्ववदभ्यर्च्य लिंगशुद्धिं च पूर्ववत्
पयसा स्नापयेच्छम्भुं यथा शक्ति यथा रुचि २१
गन्धतोयेन संस्नाप्य अष्टगन्धं च लेपयेत्
हिमतोयाभिषेकं च स्नपनं स्नापयेत्प्रभुम् २२
मंत्रान्नं मन्त्रपुष्पं च प्राग्वदावरणं यजेत्
महाहविः क्रमेणैव दापयेत्परमेश्वरम् २३
शान्तिहोमं च कर्तव्यं नाळीकेरगुळं तथा
इक्षुखण्डं फलं चैव होमयेत्तु विचक्षणः २४
अन्यानि रसवस्तूनि पंचविंशतिसंख्यया
वामादिमंत्रमुच्चार्य होमयेत्तु क्रमेण तु २५

मनोन्मनीं समुच्चार्य पूर्णाहुतिमथाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्चैव होमयेत् २६
अन्तर्बलिसमायुक्तं परिवारबलिं ददेत्
धूपदीपसमायुक्तं उपचाराणि पूर्ववत् २७
सूरिबृन्दैश्च कर्तव्यं तोषयेत्परमेश्वरम्
एतत्पूजां समाप्यान्ते दीपपूजां समापयेत् २८
पूजां समाप्य तत्काले प्रार्थयेच्छिवसंनिधौ
एवं पूजाविधानेन तत्फलं लभते ध्रुवम् २९
दीपपूजाविधिः प्रोक्तो प्रभूतहविरुच्यते
इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे दीपपूजाविधिपटलः ९

अथ वक्ष्ये विशेषेण प्रभूतहविषं शृणु
नृपाणां जन्मनक्षत्रं मासनक्षत्रमेव वा १
विषुवायनकालेषु ग्रहणान्ते कुतूहले
न++++ दशी चैव शुक्लपक्षे शुभं परम् २
अन्यस्मिन्मंगळे काले प्रतिष्ठान्तोत्सवादिके
ब्रह्मराक्षसवेताळकूष्माण्डा भैरवादयः ३
काळीकाश्च रशल्याश्च राक्षसादिकमर्दनम्
अथान्ये अशुभाश्चापि मुच्यन्तेऽपि न संशयः ४
वर्षार्थं च जयार्थं च पुत्र दारसुखप्रदम्
पशूनां काम्यदं प्रोक्तं इष्टकाले सुयोजयेत् ५
निश्चित्यदिवसात्पूर्वे रात्रौ दीपावसानके
सायरक्षावसाने च निवेद्यान्ते सुराशिके ६
मूलदेवं समभ्यर्च्य विज्ञापनमथाचरेत्
भगवन्ननुज्ञया ग्राह्य प्रतिमाग्रे विशेषतः ७
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम्

विघ्नेशं पूजयेत्पूर्वं संकल्पमिति बुद्धिमान् ८
भूसुरान्युग्मसंख्यैश्च पुण्याहं वाचयेत्ततः
प्रतिमं कारयेत्तत्र नत्व बर्हिषि पूर्ववत् ९
प्रातः संध्यावसानान्ते मण्डपं कल्पयेद्बुधः
आस्थानमण्डपे वापि सर्वालंकारशोभितम् १०
वेदिकुण्डसमायुक्तं पूर्ववल्लक्षणं कुरु
वस्त्रादिभिरलंकृत्य प्रतिमं च विशेषतः ११
सिंहासनं च वेद्यूर्ध्वे सुदृढं कारयेत्ततः
तन्मध्ये स्थाप्य देवं तु सूरिबृन्दैश्च सेवितम् १२
तद्देवाग्रे विशेषेण गोमयालेपनं कुरु
निवेद्यार्थं तण्डुलं ग्राह्य तत्संख्याश्च ततः शृणु १३
दशभारं समारभ्य पंचपंच विवर्धनात्
यावत्सहस्रंभारान्तं यथाशक्ति तथा कुरु १४
उत्तमोत्तममित्युक्तं उत्तमामध्यमाधमा
विद्याधिकशतं त्रीणि त्रिशतं चैव भारकम् १५
द्विशतं चैव चत्वारि उत्तमादित्रयं भवेत्
द्विशतं चैव भारं च विद्याधिकशतं भवेत् १६
शतभारसमायुक्तं मध्यमत्रयमेव च
दशन्यूनशतं चैव षष्टिसंख्यासमायुतम् १७
त्रिंशद्भारसमायुक्तं कन्यसप्रयमेव च
व्यञ्जनं तु चतुर्थां शं तत्समं फलमुच्यते १८
नानाव्यंजनसंयुक्तं नानाफलसमन्वितम्
पूगीफलं च ++++++++++
++ पत्रं च तत्संख्या तैलमिश्रितम्
कर्पूरं युक्तिना चैव अष्टांशं घृतमेव च १९
पयो दधि घृतं चैव क्षौद्रशर्करया युतम्

अन्यानि रसवस्तूनि पूजोपकरणानि च २०
एतत्सर्वं समापाद्य वाद्यघोषसमन्वितम्
तद्देवाग्रे न्यसेद्धीमान् विज्ञापनमथाचरेत् २१
तद्देवस्याज्ञया चैव समस्तैः परिचारकैः
पचनालयं प्रकर्तव्यं पक्वद्रव्यं च संग्रहेत् २२
मूलदेवं च संप्राप्य स्नपनाद्यैर्विशेषतः
लिंगशुद्धिं ततः कृत्वा द्वारादीन्पूजयेत्ततः २३
पंचाचार्यक्रमेणैव पूजयेत्परमेश्वरम्
स्नानद्रव्यैश्च सर्वेषु स्नानकालेऽभिषेचयेत् २४
तत्काले प्रतिमाग्रे तु पिष्टचूर्णैरलंकृतम्
देशिकः सकळी कृत्य एकचित्तेन धीमता २५
विघ्नेशयजनं पूर्वं पुण्याहं तत्र कारयेत्
साधयेत्पंचगव्यं च ततः पंचामृतं क्रमात् २६
आढकार्धार्धकं चैव एकपात्रे सुयोजयेत्
पात्रं पूर्यं तु शेषाणां प्रोक्षयेदस्त्रमंत्रतः २७
अन्यानि रसवस्तूनि स्नापयेत्प्रभुमादरात्
प्रथमं गन्धतैलं च द्वितीयं पंचगव्यकम् २८
पंचामृतं तृतीयं च सर्वद्रव्यं चतुर्थकम्
पंचमं गन्धतोयं च रत्नोदकं तु षष्ठकम् २९
पुष्पोदकं धातुभागे पश्चात्फलोदकं भवेत्
स्वर्णोदकं च नवमं पश्चात्तिलोदकं भवेत् ३०
पश्चात्पत्रोदकं चैव द्वादश स्नपनं भवेत्
एवं द्वादशकाले तु द्रव्यान्ते च निवेदयेत् ३१
धूपदीपसमायुक्तं ताम्बूलं दापयेत्क्रमात्
सर्ववाद्यसमायुक्तं तत्तत्काले तु घोषयेत् ३२
उक्तताळक्रमेणैव तोषयेत्पारशवं स्मृतम्

भूसुरास्सर्वभक्ताश्च उक्तस्थाने स्थितस्थितः ३३
एवं स्नानं तदन्ते तु नैवेद्यविधिरुच्यते
निवेद्यादीनि सर्वाणि मूलदेवस्य दापयेत् ३४
परिवाराणि सर्वाणि सर्वद्रव्यं निवेदयेत्
प्रतिमाग्रे विशेषेण गोमयेनानुलेपयेत् ३५
पिष्टचूर्णैरलंकृत्य शुक्लवस्त्रेण पातिते
कदळीपत्रं तदूर्ध्वे तु तदूर्ध्वे स्नावयेद्धृतम् ३६
अन्नमापूर्य तत्पात्रे आक्वतं चैव वेदिका
व्यञ्जनादीनि परितो उपवेदीं च पूर्य च ३७
अस्योर्ध्वे अवटं कल्प्य पयश्शुष्केन पूरयेत्
नानाविधफलादींश्च मध्वाज्यं तत्र निक्षिपेत् ३८
परितः पत्रमाच्छाद्य त्रिपादीं विन्यसेत्ततः
तत्रिपादीं तदूर्ध्वे तु स्थलिकां विन्यसेत्ततः ३९
अन्तस्सर्वत्र पत्रेषु पूर्य निम्नोन्नतं त च
व्यजनादीनि सर्वाणि तत्पात्रे विन्यसेत्सुधीः ४०
अतुर्विधैरपूपैश्च तत्तत्पात्रे सुपूरयेत्
ततो होमं प्रकर्तव्यं अग्निकार्योक्तमार्गतः ४१
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान्
++++ एषयेत्सर्वं उक्तमंत्रैर्निवेदयेत् ४२
निर्माल्यं च विसृज्याथ स्थलशुद्धिं च कारयेत्
नाळिकेरगुळं चैव इक्षुखण्डं फलं तथा ४३
मूर्धादिशस्त्रपर्यन्तं होमयेत्तु क्रमेण तु
शताहुतिं समारभ्य सहस्रं वा तदर्धकम् ४४
युक्तिना होमयेत्कार्यं द्रव्यान्ते व्याहृतिं हुनेत्
प्रायश्चित्तं ततो हुत्वा पूर्णाहुतिमथाचरेत् ४५
मध्याह्नपूजा संमिश्रं तस्माद् होमबलिं ददेत्

पादप्रक्षाळनं कृत्वा प्रविशेदालयं प्रति ४६
धूपदीपसमायुक्तं ++++++++++
पानीयाचमनार्घ्यं च धूपदीपं ददेद्गुरुः ४७
पंचब्रह्मषडंगैश्च दिवातन्मंत्रमुच्चरन्
तत्काले ++++ घण्टारवसमन्वितम् ४८
आरात्रिकं तु कर्तव्यं नीराजनमथाचरेत्
वादित्रलयसंयुक्तं गणिकानृत्तमाचरेत् ४९
मुखवासं च कर्तव्यं भस्मानं दापयेत्ततः
आशीर्वादं च कर्तव्यं ++ शुद्धं समाचरेत् ५०
चण्डेश्वरं समभ्यर्च्य भस्मानं दापयेत्ततः
सकळोच्छिष्टं चतुर्थां शं एकांशं परिचारके ५१
तत्संबन्धाश्च सर्वाश्च एकांशं चैव दापयेत्
मूलदेवस्य नैवेद्यं युक्तिना दापयेत्क्रमात् ५२
सर्वालंकारवद्बेरं सर्ववाद्यसमन्वितम्
ध्वजादिच्छत्रपर्यन्तं धामं पूर्वोक्तवर्त्मना ५३
प्रविशेदालयं पश्चाद् देवस्याचमनीयकम्
अपूपादि निवेद्याथ धूपदीपं ददेद्गुरुः ५४
शुद्धनृत्तादिलीलान्तं कारयेच्छिवसंनिधौ
एवं क्रमेण कर्तव्यं राजरक्षाविधिं शृणु ५५
इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे महाहविः पटलः १०

तुलसी बिल्वपत्रं च कल्हारं कमलं तथा
जातिनीलोत्पलं चैव पुन्नागं हेमधूर्धुरम् १
श्वेताब्जं कुटजं चैव दान्तं चैव तु पट्टिका
सुभभंत्री च संयुक्तं नैवेद्यान्ते तु दापयेत् २
एकविंशतिपुष्पाणि महेशादीनि मंत्रकैः

महेशश्च शिवंश्चैव शिवोद्भवशिखण्डिनः ३
श्रीकण्ठश्च कपाली च कपर्दी कालहारिणः
महेश्वरायनमः । शिवाय नमः ।
शिखण्डिने नमः । श्रीकण्ठाय नमः ।
कपालीशाय नमः । कपर्दिने नमः ।
कालहारिणे नमः ।
ज्ञाने ज्ञानरूपी च पशुपतिः शूलिनस्तथा ४
हारिणश्च क्रमेणैव तत्पुष्पं सम्यगर्चयेत्
अष्टपुष्पं च कर्तव्यं आसनं मूर्तिमूलकैः ५
ज्ञानाय नमः । ज्ञनरूपिणे नमः ।
पशुपतये नमः । शूलिने नमः ।
हारिणे नमः । श्रीमहागणपतये नमः ॥
आयुष्करं विधिं वक्ष्ये श्रूयतां निधिनेश्वर
चेतना चेतनं चैव द्विविधं परिकीर्तितम् ६
आत्मवर्गो द्विधा प्रोक्तः तद्भेदो बहुधा भवेत्
चेतनस्य विशेषोऽस्ति पुण्यपापविधायकम् ७
अल्पकाले च मर्त्यानां नाशो जातं च निश्चयः
तत्काले द्विविधं प्रोक्तं उत्तमं मध्यमाधमम् ८
शतं विंशोत्तरं वर्षं उत्तमं त्विति कीर्तितम्
शतवर्षसमायुक्तं मध्यमं तु विधीयते ९
विंशत्यूनशतं वर्षं कन्यसं तु क्रमाद्बुधः
एवं कल्पान्तरे काले नाशनं किं कथं प्रभो १०
ईश्वर उवाच
साधु साधु महाप्राज्ञ यत्त्वया परिचोदितम्
तत्तत्सर्वमहं वक्ष्ये एकचित्तेन धीमता ११
अनेकयोनि +++ किल्बिषं च भवेत्तथा

किल्बिषस्यांशमानं च द्रोगादिक्षय संभवेत् १२
सुश्रेयसोंशमानं चेत् राज्यभोगादिकं दिशेत्
उभयोरपि कृत्यं तत् कालं वा कालनाशनम् १३
मनोवाक्कायकार्माघैः यथा द्रुह्यति संभवेत्
प्रथमं दूषणं वाच्यं मनो हिंसा द्वितीयकम् १४
आत्महिंसा तृतीयं च कायहिंसा चतुर्थकम्
एवं रूपं च बहुधा व्याधिरूपेण बाध्यते १५
योग्यायोग्यविभागं च अवमानेन योजयेत्
अपमृत्युर्भवेत्तत्र कालान्ते कालमृत्यवः १६
अपमृत्युविनाशार्थं वक्ष्येहं निधनेश्वर
अपमृत्युविनाशं स्याद्भोगमोक्षफलप्रदम् १७
सर्वमासेषु कर्तव्यं कर्तुर्वाच्छ्वावशान्नयेत्
मण्डलं च त्रिगुणित दिनसंख्या यथाक्रमम् १८
अथ निश्चित्य दिवसं तावद्भजनपूजनम्
दिनं प्रति विशेषेण पूजानियम उच्यते १९
पातःस्नानादिकं नित्यं विप्रादीनां क्रमेण तु
तैस्तु शुद्धमनुष्ठेयं शिवालयेत्वथवासनम् २०
अर्धयामात्परं नास्ति धामबाह्ये प्रवेशयेत्
भूमिशुद्धिं ततः कृत्वा दर्भशय्योपरि न्यसेत् २१
कम्बळं शुद्धवस्त्रेण क्षत्रियस्य विशेषतः
काषायं वैश्यवर्गस्य वस्त्रं शूद्रस्य तल्पकम् २२
अनिद्रकदिवाकाले शृणुष्व शिवलीलया
प्रातर्मध्याह्नसाये वा प्रातस्सायमथापि वा २३
अथवा एककालं वा स्नानतर्पणसंयुतः
प्रदक्षिणं त्वेकविंशत्येकविंशति वन्दनम् २४
कर्तुश्शक्तिर्यथाकार्या तथा कुर्यात्तु देशिकः

कालनिग्रहमूलं च मृत्युंजयं सदाजपेत् २५
त्रियम्बकं जयं चैव गौळामंत्रं पतिं क्रमात्
विप्रादीनां तु वर्णानां मंत्रमेवं विधीयते २६
देशिकस्याज्ञया चैव एतन्मन्त्रं जपेत् ++
अयुतं तत्र संख्या च चत्वारिंशद्दिनैर्युतम् २७
यावत्प्रतिदिनं कार्यं ततो होमं जपार्थकम्
अंगुष्ठप्रमुखादींश्च अष्टमूर्तींश्च कल्पयेत् २८
शतरुद्रांश्च सर्वेषां शतं विंशोत्तरं मतम्
तदाद्यन्तं क्रमेणैव होमं चैव जपेद्बुधः २९
द्रव्यं प्रति विशेषेण अष्टोत्तरशतं हुनेत्
तदर्धं वा तदर्धं वा यथाशक्ति हुनेत्क्रमात् ३०
होमसंख्या जपित्वा तु अग्निकार्यं च पूर्ववत्
त्र्यश्रकुण्डसमायुक्तं अन्यकुण्डानि वर्जयेत् ३१
शतं विंशोत्तरं देवान् अंगुष्ठादिरिहोच्यते
अंगुष्ठं भुवनेशं च ईशानं चैकमेव च ३२
पिंगेक्षणं चोद्भवं च वामदेवं हरं तथा
सर्वाभरणसंयुक्तं त्रिणेत्रं भीमरूपिणम् ३३
रक्तवस्त्रधराः सर्वे अभयवरदान्विताः
शूलटंकसमायुक्ता अंगुष्ठप्रमुखाः स्मृताः ३४
अंगुष्ठादिरिति ख्याता अष्टमूर्तिरिहोच्यते
भवश्शर्वस्तथेशानः पशुपत्युग्र एव च ३५
रुद्रा भीमो महादेवश्चाष्टमूर्तिः प्रकीर्तिताः
चतुर्भुजास्त्रिणेत्रास्तु जटामकुटधारिणः ३६
वरदाभयहस्ताश्च कृष्णापरशुधारिणः
सर्वाभरणसंयुक्ता रक्तक्षौभधरा इमे ३७
अष्टमूर्तिरिति ख्याता शतरुद्रांस्ततः शृणु

शंभुर्विभुर्गुणाध्यक्षः त्रियक्षो देववन्द्यकः ३८
सुवाहश्च विवाहश्च नगो हलस्तथैव च
विचक्षणोन्तकः पाल धीनो पाताळवासिनः ३९
धृत उग्रश्च उग्रश्च लोहितस्सर्वतो मुखः
विद्याधिपो ज्ञानगम्यः समज्ञो वेदपारगः ४०
मातृवक्षः पिंगळाक्षो भूतपालो बलिप्रियः
सर्वविद्याधिपो ध्याता सर्वदुःखहरः प्रियः ४१
शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षयान्तकः
पंचात्मकः पंचशिखः कपर्दी मेघवाहनः ४२
बलश्चातिबलश्चैव पाशहस्तो महाबलः
श्वेतः श्वेतबलन्ताश्च बटवामुखपराङ्मुखः ४३
सुर्भामो भूतयो भूषः हन्ता क्रूरश्च भावनः
अन्तकश्चोर्ध्वकेशश्च विरूपो धूम्रलोचनः ४४
याम्यो मृत्युहरो ध्याता विधाता कर्ता च कारकः
धर्म इशो यमश्चैव सुयोक्ता र्वियमानसः ४५
अग्नी रुद्रः कृशानुश्च पिंगळो घातकस्तथा
ज्वलनो दहनो बभ्रुः भस्मान्तश्च भयापहः ४६
अन्तकश्च कपालीशो अजो बन्धुश्च देहिनः
प्रमर्दो रक्तरक्तश्च निशिधरो रूपश्च धन्यवः ४७
सौम्यः प्रमर्दः सुप्रीतो लक्ष्मिवन्द्यो धरात्मकः
प्रसादकः कामरूपः सुदंष्ट्रश्च प्रकीर्तितः ४८
एवं च शतरुद्राणां शतरुद्रं पृथक्पृथक्
कालाधिपः कालनाशः कालस्संहारताण्डवः ४९
रुद्ररूपं विना कार्या संहारबीजसंयुतम्
भास्करोदयमारभ्य स्नानादिजपमन्तकम् ५०
मध्याह्नपूजासंमिश्रं स्नानं नैवेद्यहोमकम्

द्रव्यसाधनमारभ्य पूजानियम उच्यते ५१
गणेशयजनं पूर्वं पुण्याहं च द्वितीयकम्
पंचगव्यं ततः प्रोक्तं पंचामृतं तदन्तके ५२
पंचकं नवकं स्नाप्य शैवं मृत्युंजयं जपेत्
स्नानद्रव्याणि सर्वाणि सप्तमं साधयेत्क्रमात् ५३
वस्त्रं गन्धं च पुष्पं च अष्टा पंचाभिषेचयेत्
द्वारादिस्नपनान्तं च गुह्यं मृत्युं च मंत्रकम् ५४
मंत्रपुष्पं च मंत्रान्नं जयमंत्रेण दापयेत्
शुम्भुं वस्त्राद्यलंकृत्य आवृतान्सम्यगर्चयेत् ५५
अपमृत्युविनाशाय तृतीयं मंत्रमुच्चरन्
द्विशतं शतमर्धं वा दिनं प्रति निवेदयेत् ५६
निवेद्यार्थं तण्डुलं ग्राह्य भारमेवं विधीयते
शिवत्रयं समारभ्य दिनं प्रति विवर्धनात् ५७
निश्चित्य दिवसान्तं यद् अशक्तं वा लभेत्क्रमेत्
व्यंजनं तु चतुर्थां शं अष्टांशं घृतमेव च ५८
पयो दधि घृतं चैव यथा लाभसमन्वितम्
सूपकादिसमायुक्तं पयः शुष्केन पूरयेत् ५९
फलानि रसवस्तूनि मधुरप्लुतदेशिकः
सर्वं निवेद्य देवाय कृत्वा चाचमनक्रियाम् ६०
पूर्ववद्धोमसंयुक्तं विशेषमधुना शृणु
अपूपं नाळिकेरं च इक्षुखण्डं फलं तथा ६१
आषाढसमिधा चैव अर्कं चैवाब्जकन्दकम्
पूर्वसंख्या क्रमेणैव नित्यहोमं पृथक्पृथक् ६२
नित्योत्सवं पुरा प्रोक्तं ताम्बूलं च निवेदयेत्
कर्पूरयुक्तिना चैव अश्मचूर्णसमन्वितम् ६३
तद्बहिस्तैलसंमिश्रं क्रमुकं द्विफलं तथा

पूर्गाफलं च पूर्णं च प्रस्थस्यैव फलं तथा ६४
फलाच्चतुर्गुणं पत्रं सजिह्वाघ्राणवर्जितम्
धूपदीपादि नृत्तान्तं सर्ववाद्यैश्च घोषयेत् ६५
शंखध्वनिसमायुक्तं चण्डेश्वरं समर्चयेत्
पूजान्ते वाथ होमान्ते देशिकस्याज्ञया सह ६६
मिश्रपुष्पाणि सिध्यर्थं यथा शक्ति समर्चयेत्
पापभक्षणमन्त्रेण कर्ता वा सम्यगर्चयेत् ६७
हुतभस्म गृहीत्वा तु पूजान्ते कल्प्य देशिकः
कर्तुस्सर्वाभिलाषाय तद्देहे लेपयेत्क्रमात् ६८
भूसुरान्भोजयित्वा तु कर्ता संभोजयेत्ततः
एवं प्रतिदिनं कार्यं भोजनान्ते विशेषतः ६९
नवकादि नवान्तं च स्नपनं शक्तियुक्ततः
महाहविः क्रमेणैव पूजयेत्कालनिग्रहम् ७०
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
इहलोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ७१
यत्फलं लभते मर्त्यः सत्यं सत्यं वदाम्यहम्
भजनार्चन इत्युक्तं तन्निषेध इहोच्यते ७२
आचार्यकृतहीनं यत् तद्दोषशमनाय च
नवाक्षरं जपेद्धीमान् शतमष्टोत्तरान्तकम् ७३
क्षीराभिषेकं कर्तव्यं तत्क्रियां पुनराचरेत्
पूजाद्रव्यविहीने च कर्तुश्च व्याधिसंभवे ७४
घृतस्नानं तदर्धं च पंचविंशति होमयेत्
तत्तन्मन्त्रे जपेद्धीमान् अष्टोत्तरशतान्तकम् ७५
होमतर्पणहीने तु भार्या तस्य विनश्यति
जयमंत्रं जपेद्धीमान् पश्चाद् अष्टगन्धं सुयोजयेत् ७६
पुनर्होमादि कर्तव्यं शेषं पूर्ववदाचरेत्

प्रदक्षिणनमस्कारजपस्तोत्रविहीनके ७७
श्वित्रं संजायते मूकः सप्तजन्मसु निर्धनः
शतप्रस्थ घृतस्नानजयशम्बरमंत्रकैः ७८
कर्ता वा देशिको वापि प्रेष्यको भक्ति संयुतः
प्रेष्यस्य शिवदीक्षा चेद् उत्तमोत्तममिष्यते ७९
तत्संख्या यन्त्र दिवसे तद्दिनान्तं समाचरेत्
कर्तुरर्चनहीने स्याद् अर्चनं द्विगुणं मतम् ८०
घृतस्नानादिसंयुक्तं तोषयेत्परमेश्वरम्
सामान्यमिति विज्ञेयं विशेषमधुना शृणु ८१
अनानं परपीडा च सूतिकाशौ च शौचकम्
एतद्धीनं च भजनं श्रुत्वा बाधा भविष्यति ८२
तद्दोषशमनार्थाय हीमान्ते तु विशेषतः
ब्राह्मणान्भोजयित्वा तु मधुस्नानं शिवस्य च ८३
क्षीरस्नानं तदन्ते तु पुनर्भजनमारभेत्
इहलोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ८४
इति स्वायंभुवे भजनपूजा विधिपटलः ११

ब्रह्मकूर्चाभिषेकं तु विधानमधुनोच्यते
महोत्पातेषु जातेषु शान्तये तत्प्रवक्ष्यते १
प्रस्थत्रयार्धं क्षीरं तु प्रस्थार्धं दधि कीर्तितम्
प्रस्थमात्रं घृतं प्रोक्तं चतुःप्रस्थं तु गोमयम् २
गोमूत्रं प्रस्थ षट्कं तु मात्रे यं पंचगव्यजा
एकस्य कलशस्यैवं अष्टोत्तरशतं जपेत् ३
कलशानां तथा ज्ञेयं अंकुरार्पणमादितः
अधिवासनकर्म स्यात् वेदपारायणं तथा ४
पलाशोदुम्बराश्वत्थवटप्लक्षसमुद्भवाः

एकैकं समिधः पंच शतमाहुर्मनीषिणः ५
आज्यं चरुं च लाजं च सर्षपाश्च यवास्तिलाः
माषमुद्गकुळुत्थं च द्रव्याण्याहुर्मनीषिणः ६
हुत्वैतानि निवेद्यार्थे महाहविरुदाहृतः
तैलाज्यदधिसर्पिर्भि नाळिकेरेक्षु पायसा ७
मधुना सितया च स्यात् अभिषेकश्शिवस्य तु
चन्दनागरुकर्पूर कस्तूरीकुंकुमं तथा ८
एलोशीरलवंगैश्च लेपयेत्सर्वतश्शिवम्
इति स्वायंभुवे ब्रह्मकूर्चाभिषेकविधिपटलः १२

अथ वक्ष्ये विशेषेण प्रसन्नयजनं कुरु
महामारी विनाशार्थं महारोगक्षयाय च १
परसंहारकारणं नृपाणां च विशेषतः
नृपाणां जन्मनक्षत्रे अभिषेकर्क्षमेव वा २
उत्सवादौ च कर्तव्यं प्रतिष्ठान्ते विशेषतः
अन्यस्मिन्मंगळे काले यथा कर्तुर्मनोरमम् ३
निश्चित्य दिवसात्पूर्वे त्रिदिने पंचमेऽपि वा
भूसुरान्भोजयेत्तत्र यथा शक्ति विशेषतः ४
तद्दिने चैव कर्तव्यं पूर्वसंध्यावसानके
आचार्यः सकळी कृत्य सोष्णीषस्सोत्तरीयकः ५
तत्रैवोद्दिश्य कर्मां गं संकल्पमिति बुद्धिमान्
पुण्याहं वाचयित्वा तु भूसुरैस्सह देशिकः ६
पंचगव्यं तु संस्थाप्य पूर्वोक्तविधिना सह
अष्टोत्तरशतं चैव स्नपनं च यथा कुरु ७
एवं सर्वं च संस्थाप्य शान्तिहोमं समाचरेत्
पूर्वद्वारं समभ्यर्च्य ततो लिंगं प्रपूजयेत् ८

लिंगशुध्यवसाने तु पंचब्रह्मषडंगकैः
त्रियम्बकेन मन्त्रेण पद्मपुष्पैस्समर्चयेत् ९
गन्धमालेपनं कृत्वा हिमतोयाभिषेचनम्
आर्द्रवस्त्रं त्यजेत्पश्चात् शुद्धवस्त्रेण वेष्टयेत् १०
दशबीजं समुच्चार्य चम्पकं च प्रदापयेत्
घृतान्नं च निवेद्याथ निरोधार्घ्यं ददेद्गुरुः ११
अष्टत्रिंशत्कलान्यासं मातृकान्यासमेव च
शिवबीजं समुच्चार्य वर्धनीमभिषेचनम् १२
मन्त्रान्नं मन्त्रपुष्पं च हृदयेन प्रदापयेत्
श्वेतवस्त्रेण संवेष्ट्य दान्तथैव तु दापयेत् १३
प्रथमावरणं कुर्याद् बीजमुख्येन सेचनम्
दध्यन्नं च निवेद्याथ पाद्यादीन्क्रमशः कुरु १४
शिवमंत्रमनुस्मृत्य तद्बीजेनाभिषेचयेत्
कृष्णवस्त्रैरलंकृत्य कुटजं चैव दापयेत् १५
अघोरास्त्रं जपेद्धीमान् एकविंशत्समर्चयेत्
हृल्लेखाबीजमुच्चार्य एकविंशत्समर्चयेत् १६
मुद्गान्नं च निवेद्याथ धूपदीपं ददेद्गुरुः
चतुर्थावरणं पश्चात् शम्बरैरभिषेचनम् १७
वस्त्रादिभिरलंकृत्य शुचीवोहं जपेद्बुधः
तद्बीजं च समुच्चार्य जातिपुष्पं समर्चयेत् १८
कृसरान्नं निवेद्यं च पाद्यादीनुपचारकैः
पतिमंत्रं समुच्चार्य अभिषेकं क्रमाद्गुरुः १९
चित्रवस्त्रैरलंकृत्य पायसान्नं निवेदयेत्
मृत्युंजयं समुच्चार्य बिल्वपत्रं समर्चयेत् २०
एकविंशत्समभ्यर्च्य कर्ता देशिकसंयुतः
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम् २१

महाहविः क्रमेणैव नैवेद्यं कारयेद्बुधः
धूपदीपं हृदा ++++++++++ २२
वस्त्रेणोद्वर्तनं कृत्वा तत्तद्धृदयमन्त्रतः
धौतवस्त्रं च मालां च भूषणं गन्धमाहिषम् २३
दापयित्वोपवीतं च आसनावरणादिकम्
अर्चयित्वा विशेषेण तत्तन्मूलषडंगकैः २४
पूर्वोक्तानि च पुष्पाणि तत्तत्संध्यासु दापयेत्
महेशमूलमन्त्रेण पंचब्रह्मषडंगकैः २५
गौर्या मूलषडंगेन मूर्तिमावाहयेत्ततः
सांगोपांगप्रत्यंगं ++++++++++ २६
दत्वा पाद्यादिकं तत्र अर्चयित्वा विशेषतः
धूपदीपं ददेत्ताभ्यां नैवेद्यं व्यंजनैर्युतम् २७
दापयित्वा विशेषेण पानीयं दापयेत्ततः
अचमनं दापयेच्छंभोः देव्याश्चैव समन्वितम् २८
बलिबेरन्तु वेरांशात् पूर्वोक्तविधिना कुरु
बलिबेरं समभ्यर्च्य अर्धनारीश्वरात्मकम् २९
नैवेद्यं दापयित्वा तु नित्याग्नियजनं क्रमात्
मूलेन शिवमावाह्य अर्चयेच्छक्तिसंयुतम् ३०
नैवेद्यात्षोडशभागैकं बल्यर्थं तु हविर्भवेत्
गन्धपुष्पं च धूपं च यथा वै पूर्ववद्विधि ३१
नित्योत्सवं ततः कुर्यात् बलिदानसमन्वितम्
सर्वातोद्य समायुक्तं नृत्तगेयसमाकुलम् ३२
बलिदीपसमायुक्तं गणिकादिभिरावृतम्
परिचारान्समाहूय सोष्णीषान्सोत्तरीयकान् ३३
खेटके शिबिकायां वा बलिबेरं समानयेत्
सोष्णीषस्सोत्तरीयश्च अर्ध्यपात्रकरो गुरुः ३४

मार्जनं लेपनं चैव देवदासी विशेषतः
पुनश्शिष्योऽभिषिच्यापि देशिको बलिमाचरेत्  ३५
द्वारस्य दक्षिणे नन्दिगंगां घोषं बलिं ददेत्
द्वारस्य वामपार्श्वे तु यमुनां योगिनीं तथा  ३६
वृषं वह्निं च भृंगीशं मातृणां च विशेषतः
विनायकं वीरभद्रं विघ्नराजं च षण्मुखम्  ३७
ज्येष्ठादुर्गाबलिं दत्वा योगिनीं च तथैव च
अग्रे चैव धरां देवीमर्चयित्वा विशेषतः  ३८
गोपुरे वाद्यनिश्शब्दं शंखघोषसमन्वितः
वरिष्ठं भुजगं यक्ष्वा महोक्षस्य बलिं ददेत्  ३९
भूतेशमर्चयित्वा तु सोपचारसमन्वितम्
इन्द्रं चैव तथाग्निं च यमं च निर्ऋतिं तथा  ४०
वरुणं चैव वायुं च सोममीशानमेव च
षोडशाक्षरयोर्मध्ये क्षेत्रेशव्य +++++  ४१

प्रसन्नयजनम्  १३

संकोचं तु प्रवक्ष्यामि शृणु षण्मुख सुव्रत
उत्तमश्चरराशिः स्यान् मध्यमोभयराशिकम्  १
तद्राशियुभयं युक्तं सर्वमंगळसंयुतम्
स्तापनाद्दिवसात्पूर्वे त्रिदिने पंचमेऽथ वा  २
अंकुरं कौतुकं चैव सायाह्ने चन्द्रसंयुते
बीजावापं प्रकृत्वा तु यथा विधि पुरस्सरम्  ३
चन्द्रादि परिवाराणां नैवेद्यं धूपदीपकम्
अंकुरार्पणहीनं चेद् राजराष्ट्रं विनश्यति  ४
एतत्सामान्यमुद्दिष्टं विशेषमधुनोच्यते
अधिवासं च संकोचं अंकुरं कौतुकं तथा  ५

यागारम्भादिपूजा च पलवादीनुस्त्सवादि च
लेयतानि कारयेद्रात्रौ दिव्यै तानि न कारयेत् ६
द्वात्रिंशत्स्तम्भसंयुक्तं षोडशस्तम्भसंयुतम्
अष्टस्तम्भसमायुक्तं श्रेष्ठं मध्यमकन्यसम् ७
एवमन्तर्विमानं स्यात् तन्मध्ये वेदिकां कुरु
हस्तमात्रसमुत्सेधं दर्पणोदरसंनिभम् ८
कुण्डानि परितः कुर्यात् पूर्ववन्मंत्रवित्तमः
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं तथा ९
पैशाचानां बलिं दत्वा प्रवेशबलिमेव च
रक्षोघ्नहोमं कृत्वा तु यथाविधिपुरस्सरम् १०
स्थापनाद्दिवसात्पूर्वरात्रावेव विशेषतः
मूलाग्रे तु विशेषेण कल्पिते स्थण्डिले शुभे ११
कुम्भान्संस्थाप्य आचार्यो मन्त्रजापसमन्वितः
शक्त्यादिशक्तिमभ्यर्च्य विद्येशानां तथैव च १२
आसनं मूर्ति विन्यस्य कुम्भे च विधिवत्तथा
मूललिंगं च संपूज्य आसनावरणादिभिः १३
संपूज्य देवदेवेशं नैवेद्यं धूपदीपयुक्
यात्राहोमादिसिध्यर्थं सिकतैः स्थण्डिले कृते १४
विधिनाग्निं समाधाय समिदाज्यचरुं क्रमात्
यवसर्षपलाजांश्च चरूणां शतसंख्यया १५
प्रत्येकं शतमर्धं वा तत्तन्मूलांगकैः क्रमात्
होमयेच्च तदन्ते तु बीजमुख्येन सर्पिषा १६
होमयेद्देशिको धीमान् संक्लावि+++ पुरोक्तया
पूर्णां सर्वात्मना तत्र जुहुयाद्देशिकोत्तमः १७
मूलेन होमयेद्विद्वान् अंगानां च दशांशतः
मधुप्लुतं तु दूर्वादि मृत्युंजयमनुस्मरन् १८

सहस्रं वा तदर्धं वा अष्टोत्तरशतं तु वा
एवं हुत्वा तदन्ते तु क्षणहोमं समाचरेत् १९
वासरैस्सूर्यपूर्वैश्च नक्षत्रैस्तुरगादिभिः
मेषादिमासकैश्चैव तिथिभिः प्रथमादिभिः २०
जुहुयादेकयाहुत्या प्रतिवत्सरमाचरेत्
ऋगाद्यध्ययनं कुर्यात् संस्वतं वेदपारगाः २१
तत्र मंत्रा ऋगाद्यास्तु जप्तव्या मूर्तिहेतवः
सद्यो जातस्तु मश्र्येदो वामदेवो यजुः स्मृतः २२
अघोरस्सामवेदस्तु अथर्वः पुरुषः स्मृतः
अष्टोत्तरसहस्रं वा तदर्धं वा तदर्धकम् २३
अष्टोत्तरशतं वाथ जपेद्वैदिक भद्धये
मूर्तिपानामलाभे तु देशिकस्सर्वमाचरेत् २४
मूललिंगं च संपूज्य गन्धाद्यैरुपचारकैः
प्रणम्य देवदेवेशं कर्ता कर्मविचक्षणः २५
एकमुत्सममारभ्य संकल्पदिवसान्तकम्
तेष्वन्तरेन प्रत्यर्थं पुनः संस्थापयाम्यहम् २६
इति विज्ञाप्य देवेशं आचार्यो मूर्तिपैस्सह
लिंगाद्देवं समावाह्य कुंभमध्ये तु योजयेत् २७
पीठाद्देवीं सामयाकं सर्वमग्नि कार्योक्तमार्गतः
मूलेनैवेति मन्त्रेण आषाढं समिधं हुनेत् २८
घृतं मिमिक्षमंत्रेण आज्यहोमं समाचरेत्
अघोरेणैव मन्त्रेण चरुहोमं समाचरेत् २९
पुरुषेणैव मन्त्रेण लाजाहुतिमथाचरेत्
प्रत्येकं शतमर्धं वा यथा शक्त्या तु होमयेत् ३०
द्रव्यान्ते व्याहृतिं हुत्वा क्षणहोमं समाचरेत्
वारै रम्भोत्यकाद्यैश्च नक्षत्रैस्तुरगादिभिः ३१

मेषाद्या मासिकानां च तिथिभिः प्रथमादिभिः
सप्त ते इति मन्त्रेण पूर्णाहुतिमथाचरेत् ३२
कुम्भस्थं देवमभ्यर्च्य गन्धपुष्पादिदीपयुक्
आचार्यो मूर्तिपाश्चैव वेदघोषसमन्वितम् ३३
कुम्भानुत्थाप्य मन्त्रेण परिचारकमूधनि
आचार्यो वर्धनीं ग्राह्य विद्येशान्मूर्तिपादयः ३४
स्वस्तिघोषसमायुक्तं छत्रचामरसंयुतम्
+++++++++++++ दीपज्वालासमन्वितम् ३५
शनैः प्रदक्षिणं कृत्वा सर्वातोद्यसमायुतम्
यागशालां ततो गत्वा आचार्यो मूर्तिपैस्सह ३६
वेदिमध्ये तु संस्थाप्य वर्धनीं तस्य वामके
परिवाराष्टकुम्भांश्च तत्तत्स्थानेषु विन्यसेत् ३७
धूपदीपं हृदा दत्वा ततोग्नियजनं चरेत्
कुण्डार्चनं समाख्यातं परिधीन् पधाय च ३८
विष्टरांश्चैव दर्भां श्च प्रणीता प्रोक्षणं तथा
आज्यशुद्धिं ततः कृत्वा ++++++++++ ३९
अग्निमध्ये तु संपूज्य यवादीन्समिधं हुनेत्
स्विष्टमग्नेति जुहुयात् प्रायश्चित्ताहुतिं चरेत् ४०
दिक्पालानां बलिं दत्वा ततो होमं समापयेत्
एवं संपूजयेद्रात्रौ प्रभाते विमले सति ४१
स्नात्वा कृताह्निकोपेतः यागपूजां समाचरेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ४२
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति चिन्त्यशास्त्रे संकोचविधि पंचपंचाशत्पटलः १४

परसंहार +++++++++ णं च विशेषतः

तस्मात्सर्वप्रयत्नेन इमां पूजां समाचरेत्  १
नृपाणां जन्मनक्षत्रे अभिषेकर्क्षमेव वा
विषुवायनकाले वा ग्रहणान्ते कुतूहले  २
उत्सवादौ च कर्तव्यं प्रतिष्ठान्ते विशेषतः
अन्यस्मिन्मंगळे काले यथा कर्तुर्मनोरमम्  ३
तस्मात्पूजाविधानेन पूजाकर्मविधिं शृणु
दिनमेकं समारभ्य सप्ताहान्तं समाचरेत्  ४
द्विगुणं त्रिगुणं वापि चतुःपंचगुणं तथा
षट्सप्तगुणसंख्यातं कर्मसिध्यन्तमेव वा  ५
पूजा वै शिवमिख्याता पूर्वोक्तफलवादिनी
नैमित्तिकन्तु नित्यान्ते कर्तव्यं संनिबोधत  ६
नित्ये प्रवर्तमाने तु यदा नैमित्तिकं भवेत्
समाल्प्याल्प्येन महता नित्यनैमित्तिकं चरेत्  ७
सन्ध्यापरार्धकाले चेद् पूर्वार्धे विद्यते यदि
नैमित्तिकं स्वकाले तु कर्तव्यमविचारतः  ८
सन्ध्यामप्यर्धकालेन चापरार्धं समाचरेत्
तन्त्रेण चाप्यनुष्ठानं काम्यमेव विधिं शृणु  ९
स्नानान्तं वाथ नैवेद्य पर्यन्ते नित्यमेव वा
विधाय प्राप्तकाले तु काम्यं चैव समाचरेत्  १०
एकमावरणानां तु संध्याशेषं समाप्य च
नैमित्तिकं तु नित्यान्ते सायाह्नात्पूर्वमेव हि  ११
संकल्पं च यथापूर्वं विद्येशं पूजयेत्ततः
तथैवोहि क्रमेण संकल्पमिति बुद्धिमान्  १२
पुण्याहं वाचयित्वा तु भूसुरैर्देशिकैस्सह
पंचगव्यं तु संस्थाप्य पंचामृतं तदन्तके  १३
अष्टोत्तरशतं चैव स्नपनं च यथा कुरु

एवं सर्वं च संस्थाप्य शान्तिहोमेन हूयते १४
पूर्वं द्वारं समभ्यर्च्य बेरशुद्धिं समाचरेत्
गन्धतैलं समारभ्य पिष्टामलकसंयुतम् १५
पंचगव्यं च संस्नाप्य पंचामृतं तदन्तके
ईशाने न तु मंत्रेण क्षीरं चैवाभिषेचयेत् १६
पंचब्रह्मषडंगैश्च बिम्बशुद्धिं समाचरेत्
त्रियम्बकेन मन्त्रेण पद्मपुष्पं समर्चयेत् १७
वस्त्राद्याभरणं चैव अलंकृत्य विशेषतः
धूपदीपसमायुक्तं पंचसंध्या विधिं शृणु १८
अष्टाक्षरं समुच्चार्य बीजमुख्येन सेचनम्
श्वेतवस्त्राद्यलंकृत्य शिवबीजं जपेद्बुधः १९
तद्बीजेन समादाय दान्तं चैव तु दापयेत्
दध्यन्नं च निवेद्याथ पाद्यादीन्क्रमशः कुरु २०
आलेपनं च गन्धाद्यैः हिमतोयाभिषेचनम्
आर्द्रवस्त्रं त्यजेत्पश्चात् शुद्धवस्त्रेण वेष्टयेत् २१
सर्वाभरणसंयुक्तं सर्वपुष्पैरलंकृतम्
दशबीजं समुच्चार्य चम्पकं च प्रदापयेत् २२
वर्धनीं शिवकुम्भं च किंचिद्भेदं विशेषतः
ध्वजादिच्छत्रपर्यन्तं सर्ववाद्यसमाकुलम् २३
स्वस्तिवाचकसंयुक्तं कुरवशब्दसमाकुलम्
तत्स्थानाच्च समादाय परिचारकमूर्धनि २४
कुम्भं व वर्धनीं न्यस्त्वा कुम्भमग्रे विशेषतः
एवं प्रदक्षिणं कृत्वा देवाग्रे स्थण्डिले न्यसेत् २५
अष्टत्रिंशत्कला न्यस्त्वा मातृकान्यासमेव हि
श्रीकण्ठादीनि विन्यस्य गोळका न्यासमेव हि २६
धूपदीपसमायुक्तं नीराजनसमन्वितम्

हस्तेन पुष्पमादाय ++++ सुयोजयेत्  २७
शिवबीजमनुस्मृत्य शिवकुम्भाभिषेचनम्
एवमावरणादीनि कलशं तु पृथक्पृथक्  २८
मन्त्रपुष्पं तदन्ते तु मंत्रान्नं च निवेदयेत्
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम्  २९
एवमेव क्रमेणैव महेशस्य प्रदापयेत्
तद्देवाग्रे विशेषेण गोमयालेपनं कुरु  ३०
रजनीपिष्टचूर्णं च नानाचित्रविचित्रकैः
पात्राधारं न्यसेत्पश्चाद् स्थलिकायां न्यसेत्ततः  ३१
स्थलिकायां क्रमेणैव आवृतं च विशेषतः
शन्नो देवीति मन्त्रेण तन्मूर्ध्नि स्नावयेत्घृतम्  ३२
दर्व्या लक्षणयुक्तेन पात्रमन्नेन पूरयेत्
तदूर्ध्वे अवटं तत्र पायसा पूरयेत्सुधीः  ३३
व्यंजनं परितः पूर्य नानाफलसमन्वितम्
एवं पात्राणि संपूर्य पानीयाचमनं कुरु  ३४
धूपदीपं हृदा दत्वा घण्टारवसमन्वितम्
सर्ववाद्यसमायुक्तं उक्तमंत्रं निवेदयेत्  ३५
पानीयं च निवेद्याथ निर्माल्यं च विसर्जयेत्
स्थलशुद्धिं ततः कृत्वा ताम्बूलं च निवेदयेत्  ३६
अर्घ्यं शिरसि दातव्यं मुखवासं च दापयेत्
धूपदीपसमायुक्तं आरात्रिकसमन्वितम्  ३७
सर्ववाद्यसमायुक्तं गीतनृत्तसमन्वितम्
सर्वालंकारवद्बेरं सर्ववाद्यसमन्वितम्  ३८
ध्वजादिच्छत्रपर्यन्तं धारं पूर्वोक्तवर्त्मना
प्रविशेदालयं पश्चाद् देवस्याचमनीयकम्  ३९
अपूपादि निवेद्याथ धूपदीपं ददेद्गुरुः

शुद्धनृत्तादिलीलान्तं कारयेच्छिवसंनिधौ ४०
एवमेव क्रमेणैव सायाह्नान्तं समाचरेत्
सायरक्षां ततः कृत्वा नित्यार्चनं च पूर्ववत् ४१
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुळीयकैः
विशेषपूजाविधिः प्रोक्तो महाहविर्विधिं शृणु ४२
इत्युत्तरस्वायंभुवे सकळार्चनविधिपटलः १५

अथातः संप्रवक्ष्यामि प्रायश्चित्तविधिक्रमम्
स्नानं वैदिकशैवं च तर्पणं सूर्यतर्पणम् १
हीनं चेन्मलवृद्धिः स्याद् श्वानजन्मावलभ्यते
घोरं पाशुपतं चैव अष्टोत्तरशतं जपेत् २
पुनः स्नानादिकं कृत्वा तत्तन्मन्त्रेण योजयेत्
आर्द्रवस्त्रसमायुक्तं शिवसन्धिविहीनकम् ३
सौरपूजाविहीनं च कुष्ठरोगादिकं भवेत्
यावत्क्रियाविघ्नमाप्नोति सुघ्नन्त्येतान्न संशयः ४
तत्तद्बीजं जपेद्धीमान् पंचविंशतिसंख्यया
गणेशं गुरुपूजां च पूर्वोक्तविधिना सह ५
पुण्याहोऽत्र विहीनं चेत् स्थानशुद्धिं च कारयेत्
पंचगव्यविहीनं तु तत्क्रमं विपरीतकम् ६
लिंगशुद्धिविहीनं तु पुत्रसौभाग्यहीनकम्
प्रतिमन्त्रं जपेद्धीमान् पुनः कर्म समाचरेत् ७
पंचामृतविहीनं च क्षुधे च क +++ भवेत्
शिवमन्त्रं जपेद्धीमान् पुनः पंचामृतं भवेत् ८
पाद्यादीनि विहीनं तु महामारी प्रकोपनम्
प्रासादबीजमेवं तु पंचविंशति संख्यया ९
पूर्वद्रव्ययुतं पाद्यपाद्यादीनि ग्रहेत्ततः

वारपूजाविहीनं च लोके दुर्भिक्षमेव च १०
नन्दिमन्त्रादिमंत्रं च अष्टोत्तरशतं जपेत्
पुनर्द्वारं समभ्यर्च्य द्वारदेवान्सुपूजयेत् ११
लिंगशुद्धिविहीनं च आसनेन विहीनकम्
अभिषेकविहीनं च सकळीकरणहीनकम् १२
मन्त्रपुष्पविहीनं च अष्टपुष्पविहीनकम्
मन्त्रान्नं हीनमेव स्यात् पर्जन्यं तु विसर्जयेत् १३
शान्तिहोमं च कर्तव्यं पतिपन्नं जपेच्छतम्
तत्क्रियां पुनरेवोक्तक्रमेणैव यथाविधि १४
आभरणार्चनाहीनं वस्त्राभरणहीनकम्
गन्धपुष्पविहीनं च नित्यं शुद्धिविहीनकम् १५
निर्माणदीपहीनं च इति दोषं च संभवेत्
शिवगायत्रिमन्त्रेण पंचविंशतिसंख्यया १६
घृतस्नानं च कर्तव्यं पूर्ववत्सम्यगाचरेत्
गव्यार्चनविहीने तु सकळनिर्माल्यहीनकम् १७
परिवारार्चने हीने महाज्वरमवाप्नुयात्
मृत्युंजयं शतं जप्त्वा शान्तिहोमेन शाम्यति १८
पुनरर्चनमेवोक्तं यथावित्तानुसारतः
पचनालयपूजां च पुल्लीपूजाविहीनकम् १९
काष्ठशुद्धिविहीनं च तन्मूलक्वाळहीनकम्
++ शाश्शुद्धिविहीनं च स्थलिका शुद्धिहीनकम् २०
शंखध्वनिविहीनं च छत्रदीपविहीनकम्
आच्छादनविहीनं च पक्षिणा दर्शनं तथा २१
नैवेद्यं वर्जयित्वा तु तच्छेषं प्राश्य बुद्धिमान्
तिर्यङ्मार्जारमर्त्याश्च कुक्कुटाश्च तथा भवेत् २२
अग्रे गच्छेद्गृहीत्वा तु अबरं तत्र वर्जितम्

पुरोवाच्य जले प्रोक्ष्य अस्त्रमंत्रं समुच्चरन् २३
स्थलशुद्धिविहीनं च स्थलिकापुरणं न हि
व्यंजनं घृतहीनं च नैवेद्यं तु प्रदापयेत् २४
सस्यानां नाशनं प्रोक्तं मूलमंत्रशतं जपेत्
क्षीराभिषेकं कर्तव्यं पुनर्नैवेद्यमाचरेत् २५
मार्जारस्पर्शनेनैव मृगादिस्पर्शने तथा
अघोरास्त्रं जपित्वा तु नैवेद्यं तु निवेदयेत् २६
मरीचीलवणे हीले व्यंजनं तु पृथक्पृथक्
अतिपक्वमपक्वं च कृतकं च विवर्जयेत् २७
पुनर्नैवेद्यपाकं तु गुह्यमंत्रं जपेच्छतम्
स्नानादिमत्स्ययुक्तं चेद् अस्थियुक्तं यथा भवेत् २८
राष्ट्रनाशं प्रकर्तव्यं संप्रोक्षणमथाचरेत्
मार्जारादि च विष्ठाश्च लिंगादि स्पर्शनेऽपि वा २९
स्नपनं शान्तिहोमं च कारयेत्तु विचक्षणः
वेदयेत्परमं प्रोक्तं व्यंजनं तु यथा भवेत् ३०
पाद्याचमनहीनं च निर्माल्यं तु विमर्ज च
नित्याग्निहोमहीने च तद्द्रव्यं तु विहीनके ३१
अन्तर्बलिविहीनं च तन्मन्त्रं च विहीनके
होमयोग्यविहीनं च अनावृष्टिश्च कथ्यते ३२
मधुना स्नापयेद्धीमान् शिवमन्त्रं जपेच्छतम्
पद्यादीनि ततः कुर्यात् क्रमेण विधिवत्कुरु ३३
भेरीताडनहीनं च बलिदानविहीनके
पादपाषाणमावेश्य कणटकं पदमाविशेत् ३४
पीठसंस्कारहीनं च सौख्यदीपविहीनकम्
घणटारवविहीनं च बेरिकापतितं तथा ३५
तत्कोणपतितं चैव बलिपात्रं तथा भवेत्

बलिबेरविहीनं च जीर्णोद्धारक्रमेण तु ३६
तद्बेरपतितं चैव रक्षोघ्नं च समाचरेत्
बालानां नाशनं प्रोक्तं गोनाशं च तथा भवेत् ३७
अघोरास्त्रं शतं जप्त्वा पुनस्सन्धानमाचरेत्
गन्धपुष्पविहीनं च वाद्यवंशविहीनकम् ३८
नृत्तकाले विशेषेण गणिका पतिता भवेत्
श्लोकपाठविहीनं च दुर्भिक्षं जायते मया ३९
बल्यन्ते शान्तिहोमं च पुरुषमन्त्रं जपेच्छतम्
ताम्बूलचर्वणं चैव अपहास्यं च संभवम् ४०
अस्त्रमंत्रशतं जप्त्वा अपवादमिदं तथा
प्रतिलोमानुलोमं च स्पर्शनं कष्टसंभवम् ४१
तत्रस्थानेव कर्तव्यं नवकस्नानमाचरेत्
खड्गमंत्रं शतं जप्त्वा शेषकर्माणि पूर्ववत् ४२
पादप्रक्षाळहीनं च पशुमंत्रदशं जपेत्
पाद्यादीनिविहीनं च धूपदीपविहीनकम् ४३
उपचारविहीनं च सकळादीन्यथा भवेत्
नृपाणां युद्धमाप्नोति क्षीराभिषेकमेव च ४४
मूलमन्त्रशतं जप्त्वा दन्यसंधिसमायुतम्
चण्डपूजाविहीनं च शुचिवोहं जपेद्बुधः ४५
चण्डपूजा च कर्तव्या अन्यसंधिश्च कथ्यते
सायाह्नसमये काले नृत्तवाद्य विहीनकम् ४६
दीपारोहणहीनं च दीपद्रव्यविहीनकम्
पीठद्वारालयोर्मध्ये वर्धनी पतिते यदि ४७
नयनोच्छिष्टं प्रवर्तन्ते शान्तिमंत्रं जपेद्बुधः
काले अधिकहीनं च देवानां च हितासिना ४८
गौरीमन्त्रशतं जप्त्वा घृतस्नानं शतं भवेत्

पुनः कर्मसमायुक्तं युक्तायुक्तिं तु कारयेत् ४९
विनोदालोकनं हीनं गननृत्तविहीनकम्
यौवनागणिकाहीनं विकटांगं च संभवम् ५०
दशबीजं जपेद्धीमान् पंचविंशतिसंख्यया
पादुकाराधनाहीनं उपांगप्रत्यंगहीनकम् ५१
यानकाले तु पतनं परपीडा भविष्यति
क्षीराभिषेकं कर्तव्यं प्रसन्नयजनं कुरु ५२
भोगां रामर्चनाहीनं तदर्थं नैवेद्यहीनकम्
ताम्बूलहीनमेवं च अपूपं च विहीनकम् ५३
नरेन्द्रो देहहीनः स्यात् पतिमन्त्रं शतं जपेत्
ततः कर्मसमायुक्तं भोगांगमर्चनं क्रमात् ५४
क्षेत्रपालार्चने हीने क्षेत्रनाशं यथा भवेत्
मृत्युंजयं शतं जप्त्वा क्षेत्रपालार्चनं कुरु ५५
वस्त्रादि चामरादिर्वा दीपाग्निं दापयेत्ततः
नवकं शान्तिहोमं तु बीजमुख्यं जपेच्छतम् ५६
घटिका न्यूनातिरिक्तं च तत्तत्काले विशेषतः
खड्गमन्त्रं शतं जप्त्वा निधनेश श्रुतं मया ५७
इत्युत्तरस्वायंभुवे नित्यपूजाविधिप्रायश्चित्तविधिपटलः १६

अथातस्संप्रवक्ष्यामि नित्यपूजाविधिं शृणु
अष्टसंधिरहोरात्रौ निधनेशं श्रुतं मया १
संधिश्चतुर्विधः प्रोक्तः तदर्धद्वारपूजनम्
घटिकाद्वे भवेत्स्नानं घटिकैकार्चनं भवेत् २
तदर्धं नैवेद्य इत्युक्तं तत्संख्याहोममाचरेत्
अन्तर्बलिं तथा कृत्वा घटिकार्धसमन्वितम् ३
परिवारबलिं दद्याद् यथाविधिपुरस्सरम्

घटिकैकप्रधूपादि तदर्धमुपचारकान् ४
एवमेव क्रमेणैव महासंधिश्च कथ्यते
उपसंधिश्च कर्तव्यं त्रिपादेन त्रिनाडिका ५
गणेशं देहळिं चैव दावसंख्या समर्चयेत्
पादाधिकैकनाडी स्यात् शम्भवे स्नानमेव च ६
अर्धनाडी निवेद्यं च धूपादीनैकनाडिके
वाद्यादि पादनाडी च उपसंधिश्च कथ्यते ७
अरुणसंधिसमारभ्य तत्पूजा चैव कथ्यते
भास्करस्योदयात्पूर्वे त्रिपादेन त्रिनाडिका ८
देहशुद्धिशुचिर्भूत्वा सकळीकृतविग्रहः
महामण्टपमास्थाय पूजोपकरणायथा ९
एवं सर्वं समासाद्य शुद्धिं कृत्वा महीतले
विघ्नेशं प्रार्थयेत्पूर्वं द्वारपान्पूजयेद्गुरुः १०
पूर्वलब्ध्वा कवाटं च नीत्वा हृदयमन्त्रतः
स्वरूपं प्रार्थयित्वा तु देवेशं प्रार्थयेद्गुरुः ११
शंखध्वनिसमायुक्तं देव्यालयं निवेशयेत्
द्वाररक्षान्समाहूय शीघ्रं नीत्वा कवाटकम् १२
देवदेवीं नमस्कृत्य पूजां विज्ञाप्य देशिकः
स्थलिकोर्ध्वे समारोप्य वस्त्रैरावेष्टयेत्ततः १३
समर्थपरिचाराभ्यां शीघ्रं गत्वा समाविशेत्
मूललिंगे समायोज्य उपांगे दक्षिणे स्थितिः १४
शंनोदेवीति मन्त्रेण प्रत्यंगं नैर्ऋतैः स्थितिः
शुद्धद्वारं च संप्राप्य विघ्नेशं देहळीन्यसेत् १५
लिंगशुद्धिं ततः कृत्वा प्रासादेन तु मंत्रतः
क्षीराभिषेकं कर्तव्यं शुद्धतोयाभिषेचनम् १६
मृत्युंजयं समुच्चार्य अभिषेकं समाचरेत्

मूलमन्त्रमनुस्मृत्य मंत्रपुष्पं सुदापयेत् १७
पायसान्नं ददेत्पश्चाद् धूपदीपं ददेद्गुरुः
सकळादिष्टबेरेण पूर्वपुष्पं व्यपोह्य च १८
पायसं च निवेद्याथ निरोधापं ददेद्गुरुः
चण्डपूजा न कार्यं च उपसंधिरिति स्मृतः १९
प्रातः संधिविशेषेण सौरपूजाविधिं शृणु
इमां पूजां च कर्तव्यं बेरं वा च क्रमेण तु २०
त्रिकोणमध्ये परितः बिन्दुरूपं प्रकल्पयेत्
मायावृत्तकोणदेशे अग्रस्थं त्वष्टपत्रकम् २१
दीप्तमष्टाक्षरं चैव मातृकान्तु बहिर्न्यसेत्
वृत्ते वेदादि मायाभ्यां पतिरितस्सौर च क्रमः २२
प्राणायामत्रयं कृत्वा प्रत्येकं दशमात्रकम्
रेचकं पूरकं चैव कुम्भकं च प्रदापयेत् २३
रेचकादित्रयं प्रोक्तं सर्वदोषनिवारणम्
प्राणायामपरं पुण्यं न भूतं न भविष्यति २४
गुरुप्रसादहीने तु तत्फलेनैव लभ्यते
प्रथमं तु करन्यासं अंगन्यासमतः परम् २५
पृथिव्यादीनि बीजांश्च शिवांगैश्च समन्वितम्
पश्चात्स्नातश्चतस्त्रोश्च त्रयश्च द्वयमेव च २६
फट्कारेण तु मन्त्रेण पंचग्रन्थिस्तु च्छेदयेत्
शून्यं सर्वं निरालम्बं प्रमेयमथ गोचरम् २७
अथानन्दवरं ज्ञेयं विज्ञानं केवलं स्थितम्
हृदयेन त्रयाभ्यस्य च्छयनात्तु निवेशनम् २८
अनादेवं यजेद्विद्वान् शिवे परमकारणे
योजयित्वाग्निना देहं दह्यमानं विचिन्तयेत् २९
भस्मीभूतमिदं ध्यात्वा प्लावयेदमृतेन तु

अधोमुखान्तममृतं स्रवन्तं चिन्तयेत्सदा ३०
प्रणवेन समायुक्तं श्वेतपद्मोपरि स्थितम्
कृत्वा शिवतनुं ध्यायेद् अष्टत्रिंशत्कलामयम् ३१
शिवांगैश्चैव विद्यांगैर्यथास्थानेन विन्यसेत्
करन्यासः कृतः पूर्वं अंगन्यासमतः परम् ३२
हुंफट्कारेण मन्त्रेण वामं सव्यं च शोधयेत्
कनिष्ठाद्यंगुष्ठान्तेषु हृदादिश्चोदिकान्तिषु ३३
पंचब्रह्मशिवांगैश्च न्यासधारणसंस्मृतम्
अष्टत्रिंशत्कलान्यासं मातृकान्यासमेव हि ३४
हृत्पद्मे कल्पयेद्देवं पंचब्रह्मकलामयम्
ब्रह्मांगं विन्यसेत्पूर्वं विद्यांगानि ततो न्यसेत् ३५
अंगुष्ठमात्रमचलं ध्यायेदोंकारमीश्वरम्
आसनानि च सर्वाणि तथैवाभरणानि च ३६
हृत्पद्मे कल्पयेद्विद्वान् यथोक्तं तु यथाक्रमम्
गन्धाद्यैरुपचारैस्तु मनसा कल्प्य पूजयेत् ३७
प्रणवार्घ्यं च संकल्प्य पंचवारं जपेद्बुधः
पूर्वास्यश्चोत्तरास्यो वा भानुं संपूजयेत्ततः ३८
दण्डिनं पिंगळं चैव गणेशं गुरुमेव च
प्रभूतासनमेवं च विमलावरमेव च ३९
सारासननमश्चैव आधाराधेयमेव च
सुखासनं परं प्रोक्तं पद्मासनमिति स्मृतम् ४०
कणिकाय नमो ध्यायै पूजयेत्तु यथाक्रमम्
दीप्तायै चैव सूक्ष्मायै उषायै च नमोन्तकम् ४१
भद्रायै च विभूत्यै च विमलायै नमोन्तकम्
अमोघायै च विद्युत्यै सर्वतो मुख्यमेव च ४२
गन्धपुष्पादिनाभ्यर्च्य मध्यादिशं करक्रमात्

दक्षिणेऽदक्षिणे चैव उषप्रत्युष एव च ४३
तदन्ते यासनं कल्प्य मूर्तिध्यानमनुत्तमम्
श्वेतारविन्दमध्यस्थं जपाकुसुमभासुरम् ४४
भास्वद्रुचिरसंकाशं तेजो मण्डलक्रमम्
गजासक्तसमुत्पुल्यं बनाळाब्जद्विहस्तकम् ४५
एकवक्त्रं रविं ध्यायेत् रक्तवस्त्रं द्विनेत्रकम्
मूर्तिमूर्तिं च विन्यस्य आवाहनादिमुद्रया ४६
धेनुमुद्रां महामुद्रां पद्ममुद्रां प्रदर्शयेत्
विस्फुरा मुद्रया चैव बिम्बमुद्रां च दर्शयेत् ४७
गोविषामुद्रया चैव आसनं चैव दर्शयेत्
वामादीनि च विन्यस्य हृदयादीनि विन्यसेत् ४८
हृदयं च शिरश्चैव शिखा कवचमेव च
नेत्रमस्त्रषडंगानि तन्मन्त्रेण क्रमेण तु ४९
पूर्वे सोमं च कर्तव्यं दक्षिणे बुधमेव च
पश्चिमे तु गुरुः पूज्य उत्तरे भार्गवं यजेत् ५०
अंगारकः शनैश्चरो राहुः केतुस्तथैव च
आग्नेयादिषु कोणेषु अर्चयित्वा यथाविधि ५१
गन्धपुष्पादिनाभ्यर्च्य धूपदीपं ददेद्गुरुः
अन्ते चण्डाय कर्तव्यं मानसं मूर्तिमूलकैः ५२
मण्डपस्योत्तरे भागे पूर्वे वा पश्चिमेऽपि वा
ऐशान्ये वाथ कर्तव्यं रुचिरासनसंस्थितम् ५३
विशेषार्घ्यं च संकल्प्य सकळी कृतविग्रहः
गणानां त्वेति मन्त्रेण गणेशं दक्षिणे यजेत् ५४
वामे वथ प्रकर्तव्यं विघ्नेशं प्रार्थयेद्गुरुः
चतुरश्रं स्थण्डिलं कृत्वा हस्तमात्रेण शालिभिः ५५
द्रोणाद्य ++ कान्तानि उत्तमा मध्यमाधमा

तन्मध्ये नळिनं लिख्य दर्भैः पुष्पैः परिस्तरेत् ५६
शिवगायत्रिमन्त्रेण स्थण्डिलं पूजयेत्तदा
तन्मध्ये वर्धनीं स्थाप्य कूर्चं तत्रैव विन्यसेत् ५७
दर्भद्वयं तु संग्राह्य द्वादशांगुलमानतः
आचार्यं दक्षिणे हस्ते अनामिकं तु बन्धयेत् ५८
प्राणायामत्रयं कृत्वा प्रणवेन समन्वितम्
वामहस्ते तु संयोज्य दक्षजानूपरि न्यसेत् ५९
एतत्कर्म करिष्यामि दर्भौ मां समुद्धरेत्
जलोपस्पर्शनं कृत्वा दर्भौ दत्वा तु देशिकः ६०
पात्रमुद्धारणं कृत्वा गन्धतोयेन पूरयेत्
आपो वा इति मन्त्रेण अस्त्रेणैवाथ कारयेत् ६१
ब्रह्मा विष्णुश्च रुद्रश्च नन्दिकाळौ तथैव च
पूर्वाद्युत्तरपर्यन्तं स्वस्वनामेन पूजयेत् ६२
गंगा च यमुना चैव गोदावरी सरस्वती
नर्मदा सिन्धु कावेरी जले स्मिन्संनिर्भव ६३
स्वस्वमन्त्रैः समभ्यर्च्य गन्धपुष्पैश्च पूजयेत्
शिवतण्डुलमुत्कृष्टं मध्यमं तु तदर्धकम् ६४
द्विप्रस्थमधमं प्रोक्तं तन्मूलै रुन्धिसंनिभैः
कांस्यपात्रं तु संस्थाप्य ताम्बूलं फलसंयुतम् ६५
ब्रह्मदिक्फलसंयुक्तं दर्भपुष्पसमन्वितम्
स्थलिकायां चन्द्रमभ्यर्च्य तण्डुले तारकानपि ६६
पुण्याहं वाचयिष्येंति भवद्भिः पादपूर्वकम्
प्रागु + वाचयित्वा तु वाच्यतामिति विप्रतान् ६७
आपः प्रयुजदाचार्यः शिवोपो द्विब्जवाचकम्
गन्धा चैव तु आचार्यं सुगन्धा प्रतिवाचकम् ६८
देशिकस्सुमनश्चैवे सौमनस्यं च विप्रकाः

अक्षतोशोदकं चैव विप्रैस्तु प्रतिवाचकम् ६९
अन्वाहार्यस्तथा मंत्री अस्तु विप्रैश्च वाचकम्
देशिकस्तु जपित्वा तु जपेयुर्ब्राह्मणैस्सह ७०
वर्धनी धृक्समुद्धृत्वा ऊर्ध्वे तण्डुलपत्रके
देशिको दक्षिणां दत्वा विप्रैस्तु प्रतिवाचकम् ७१
बहुदेवस्तुतो मन्त्री सोऽन्वाहार्योऽस्तु विप्रकाः
मनस्समाधीयतेत्यादि ब्राह्मणैः प्रतिवाचकम् ७२
प्रीयतां देवमित्युक्त्वा प्रियाम ब्राह्मणोत्तमाः
यदेवेदिति पुण्याहं सदैव प्रियतामिति ७३
स्वस्ति मध्येति यत्कर्म तत्कर्म स्वस्तिवाचकम्
साधकः स्वस्ति चोद्वातु अस्तु तत्कर्मविप्रकाः ७४
ऋद्धिवाचकमाचार्य ऋध्यातामिति विप्रकाः
घ्राणेन स्रावयेत्तोयं पूर्व वा चोत्तरो भुवि ७५
तेनैव राक्षसाद्याश्च तृप्तिमाप्नोति तो ध्रुवम्
स्थापयेत्स्थण्डिलोर्ध्वे तु पुनश्चासनमर्चयेत् ७६
आपोहिष्ठेति मन्त्रेण हिरण्यं पवमानकम्
जपान्ते शान्तीत्युक्त्वा धूपदीपादिनार्चयेत् ७७
एवं क्रमेण पुण्याहं पंचगव्यं च कथ्यते
शालिभिः स्थण्डिलं कृत्वा नवकोष्ठसमन्वितम् ७८
पूर्वाग्रं चोत्तराग्रं च भूतसूत्रप्रयोगतः
मध्ये चतुष्पदं त्वेकं पूर्वादिद्विद्विकं पदम् ७९
आग्नेयादीश पर्यन्तं एकैकं पदमेव हि
मध्यमे शिवतत्वं तु पूर्वकोष्ठं सदाशिवम् ८०
विद्यातत्वं तु साक्षिण्यं पुरुषं तत्तथोत्तरे
पश्चिमेकाग्र तत्वं तु ++++ पृथिवी ततः तन्तु पावके
८१

अंसरं निर्ऋतिकोष्ठं च वायुतत्वं मरुत्क्रमात्
ईशे प्रकृतितत्वं च गन्धपुष्पादिनार्चयेत्  ८२
सुप्रतिष्ठां स्वशान्तं च तेजो अग्रत पत्रकम्
कर्तव्यं च यथान्यासं कत्स्नस्थानं प्रकल्पयेत्  ८३
क्षीरं दध्या घृतं गोमूत्रं गोमयाद्यैः क्रमेण तु
सुप्रतिष्ठेति कर्तव्यं मूलमन्त्रेण योजयेत्  ८४
मथनं त्रिप्रदानं च सावित्रं च जपेद्बुधः
धूपदीपसमायुक्तं दर्भैराच्छाद्य देशिकः  ८५
शालिभिः स्थण्डिलं कृत्वा पंचकोष्ठं समालिखेत्
पूर्वाग्रमुत्तराग्रं च द्विद्विसूत्रं प्रदापयेत्  ८६
पूर्वाद्युत्तरपर्यन्तं सूत्राग्रे तिर्यथा लिखेत्
मध्यमे केशवं चैव श्रीभूमिभ्यां च पूजयेत्  ८७
शतक्रतुं शचीं चैव विपुलं चैव पूर्वके
कालकण्ठी पतिं चैव नीलिं चैव तु दक्षिणे  ८८
पश्चिमे वरुणं चैव स्वादिनी हरणी तथा
उत्तरे धननाथं च विरुध्यै निर्ऋध्यै सुपूजयेत्  ८९
रुद्रमासनमूर्तिं च मध्यपात्रे सुपूजयेत्
विधेरासनमूर्तिं च पूर्वपात्रे यजेत्ततः  ९०
विष्णोरासनमूर्तिं च दक्षिणे पात्रमध्यमे
गणेशमूर्तिमूलं च उत्तरे पात्रमध्यमे  ९१
स्कन्दमासनमूर्तिं च पश्चिमे पात्र मध्यमे
ईशानस्य तु मन्त्रेण क्षीरपूर्वे तु विन्यसेत्  ९२
ब्रह्माधिपस्य मन्त्रेण दधिदक्षिणपात्रके
शिवो मे इति मन्त्रेण मधु उत्तरपात्रके  ९३
तत्तद्द्रव्यं च कर्तव्यं पंचब्रह्मेण पूजयेत्
शिवगायत्रिमंत्रेण तत्तद्द्रव्ये जपेद्गुरुः  ९४

स्थापितस्य क्रमेणैव शर्करां मध्यमे न्यसेत्
ईश्वरस्यानु मन्त्रेण स्नापयेत्परमेश्वरम् ९५
धूपदीपसमायुक्तं तोयं स्नानान्तरान्तरे
द्रव्याण्येतानि सर्वाणि प्रतिप्रस्थं विशेषतः ९६
पादहीनं तु मध्यं स्यात् मध्यहीनं विन्यसम्
कामिके नैमित्तिके चैव यथालिंगं प्रयोजयेत् ९७
पात्रे पर्यन्तु शेषाणां प्रोक्षयेत्पुरुषेण तु
शुद्धद्वारं च संप्रोक्ष्य गणेशं पूर्वद्वारके ९८
गणेशं प्रार्थयेद्धीमान् निर्विघ्नं त्वं प्रसीद मे
पतंगं च भुवंगं च विघ्नेशं च सरस्वतीम् ९९
महालक्ष्मीं नन्दिनं च गंगां महाकाळिमेव च
यमुनां वृषभं चैव विमलं च सुबाहुकम् १००
श्रीदेवीमस्त्रराजं च ब्रह्मणे ज्ञानशक्तिका
क्रियाशक्तिं हृदिं चैव ईशाने अस्त्रराजका १०१
घण्टां तु ताडयेद्धीमान् अस्त्रमंत्रमनुस्मरन्
पादांगुष्ठेन कर्तव्यं भूमिमन्त्रेण कारयेत् १०२
दक्षिणां पादमुद्धृत्य मण्टपान्तः प्रवेशयेत्
निर्माल्यं तु विसृज्याथ अनन्तासनमर्चयेत् १०३
गन्धतैलं च संस्नाप्य पिष्टामलनमर्दयेत्
रजनीं मुद्गचूर्णं च धर्षयेत्तु पुनः पुनः १०४
ऋगाद्यध्ययनं कुर्यात् भूसुरान्युग्मसंयुतान्
शुद्धतोयेन सुस्नाप्य शिवगायत्रिमंत्रतः १०५
पंचगव्यं तु संस्नाप्य शिवबीजमनुस्मरन्
पंचामृतेन संस्नाप्य दशबीजमनुस्मरन् १०६
शुद्धतोयेन संस्नाप्य प्रासादं मन्त्रमुच्चरन्
आसनं कल्पयेद्विद्वान् कल्पयेत्तु विचक्षणः १०७

अाधारं शक्तिमुख्यातं कन्दमंकुरमेव च
नाळं च मुकुळं चैव अनन्तं वासुकिं तथा १०८
तक्षकं अम्बुकं चैव महाब्जं शंखपल्लकम्
कार्कोटं गुळिकं चैव अनन्तासनमिष्यते १०९
धर्मं ज्ञानं च वैराग्यं ऐश्वर्यं च चतुर्विधम्
अधर्मा ज्ञानावैराग्यं अनैश्वर्यं तथा भवेत् ११०
सिंहासनमिति प्रोक्तं योगासनमथोच्यते
कृतत्रेतायुगं चैव द्वापरं च कलिर्युगे १११
अव्यक्तं केशवं चैव नियतिं कालमेव च
कालायै चैव कर्तव्यं मूर्ध्नि मूर्ध्निमनन्तु वा ११२
योगासनमिति प्रोक्तं विमलासनमुच्यते
दळं च केशवं चैव कर्णिका बीजमेव च ११३
वामादिशक्ति चक्राष्टौ मनोन्मन्यन्तमेव च
आत्मविद्या शिवे तत्वं पद्मासनमिहोच्यते ११४
अष्टत्रिंशत्कलान्यासं मातृकान्यासमेव च
विद्यादेहं च संकल्प्य मुंद्रा ++ दर्शने च्छिवम् ११५
मूलेनाबाह्य विज्ञाप्य पाद्यादीन्दापयेच्छिवम्
वस्त्रेणोद्वर्तनं कुर्यात् लिंगपीठं विशेषतः ११६
तदन्ते मन्त्रपुष्पं च पतिमन्त्रेण योजयेत्
मन्त्रान्नं च निवेद्याथ शिवमंत्रमनुस्मरन् ११७
धूपदीपसमायुक्तं हृदयेन प्रदापयेत्
वस्त्रमाभरणं चैवं अलंकृत्य विशेषतः ११८
अर्कचम्बकबिल्वैश्च नन्द्यावर्तं च पाटली
करवीरं चम्पकं च नीलोत्पलमथाष्टकम् ११९
पीठमूर्तिशिवांगानां पूज्यं स्यादष्टपुष्पकम्
पंचावरणमार्गेण अर्चयित्वा स्वनामतः १२०

ईशतत्पुरुपाघोरनामसद्यक्रमेण तु
अम्बां सरस्वतीं चैव तत्तन्नाम्ना प्रपूजयेत् १२१
चतुर्थे वज्रं शक्तिं च खड्गं पाशांकुशं तथा
गदां त्रिशूलं चक्रं च पद्मं चेति च कथ्यते १२२
प्रसन्नयां च कोपायां गुणात्यै चैव कोमळम्
विषात्मी विकृतामान्त्री गदा चैव महात्मिका १२३
मंगळायै च कर्तव्यं स्वस्वनाम्ना समर्चयेत्
पंचावरणं ॥ शक्तिमंत्रम् ॥ ब्राह्म्यै नम इत्यादि १२४
+ह्येशानां दळाग्रेषु पीठकस्यगणेश्वरम्
पीठपादेषु इन्द्रादी तदस्त्राणि शिवोपरि १२५
वस्त्रमाभरणं चैव अलंकृत्य विशेषतः
सकळादिषु बेराणि युक्ति स्नानमाचरेत् १२६
गन्धपुष्पैस्समभ्यर्च्य स्वस्वमन्त्रैः समर्चयेत्
तदन्ते गणेशनैवेद्यं गणानां त्वेति मंत्रतः १२७
शाम्भवीमन्त्रमुच्चार्य शिवाय च निवेदयेत्
अहमस्मीति मन्त्रेण भूसुरेण जपेत्ततः १२८
आचमनं च कर्तव्यं अंभसा च निवेदयेत्
सकळादिषु कर्तव्यं निवेद्यं तु यथा क्रमम् १२९
अम्बीगणाम्बि गंगा च गौरी चैव उमापतिः
हृदयं च शिरश्चैव शिखा कवचमेव च १३०
नेत्रसूत्रां च कर्तव्यं शक्तीनां तु ततः परम्
वामी नीली च चक्रांगी पाशांगी खड्गगंहिका १३१
प्रथमम्
अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैकनेत्रकः
एकरुद्रस्त्रिमूर्तिश्च श्रीकराठश्च शिखरिडकः १३२
भूमिस्वहृदतथाक्षान्त्यै प्रभा पुष्टिः श्रुतिस्तथा

महाकाळपदन्त्यैश्च भृंगिणं ह्लादिनी यजेत् १३३
चण्डेशरूपिणी चैव स्वस्वनामेन पूजयेत्
तृतीयं
इन्द्रशक्तिं च विपुलं अग्निः स्वाहा स्वधा तथा १३४
यमाय कालकण्ठी च नील्यै च निर्ऋतिस्तथा
जातायै च सुकेशिन्यै वरुणो ह्लादिनी तथा १३५
हर्षिण्यै चैव कर्तव्यं वायव्ये माष्टिकं तथा
अंगदायै च सोमश्च ऋद्धिश्चैव निवृत्तयेत् १३६
ईशानश्च जिताश्चैव स्वस्वरूपिणिमेव च
विष्णुः श्रीभूमि सहित ब्रह्मा सावित्रमेव च १३७
नित्याग्नियजनं कुर्यात् ऐशान्ये सौम्य एव च
आग्नेय्यां तु विशेषेण कुण्डे वा स्थण्डलेऽपि वा १३८
प्रथमं शोधयेत्कुण्डं पंचसंस्कारमाचरेत्
निरीक्षण प्रोक्षणं च खननोद्धारणं तथा १३९
सेचनं च क्रमेणैव अस्त्रेणैव तु बुद्धिमान्
अग्निबीजमनुस्मृत्य अग्निं प्रज्वाल्य देशिकः १४०
परिस्तरणपरिधी द्वौ देवस्य त्वादि मन्त्रकैः
आज्यसंस्कारकं पंच स्रुवसंस्कारमेव हि १४१
परिषेचनं ततः कृत्वा अदितेन्वादिमन्त्रकैः
व्याहृदं होमयेत्तत्र इध्मं पंचदशं हुनेत् १४२
देशेध्मं वाथ कर्तव्यं पतिमंत्रं विशेषतः
आज्यं हुत्वा हृदामंत्री हविषं चैव हूयते १४३
प्रत्येकं दशसंख्या च सप्तसंख्याभिरेव वा
ब्रह्मांगं च ततो हुत्वा पूर्णाहुतिमथाचरेत् १४४
प्रणीता पात्रसहित ब्रह्मकूर्चं विना चरेत्
त्रिकालं वा द्विकालं वा एककालमथाचरेत् १४५

यावन्मूलोपचारेण तावदग्निं प्रपूजयेत्
ओं पूर्वादीश्वरादिभ्यो दिगीशान्भूतमात्रतः १४६
गणेन्द्रक्षेत्रपालादिग्भ्यः स्वाहा
वह्नेर्बीजं समादाय मूललिंगेषु योजयेत
बलिबेरं समभ्यर्च्य विज्ञापनमथाचरेत् १४७
तत्काले भेरिकायां तु ताडयेत्परसंस्मृतः
सर्ववाद्यसमायुक्तं वीणारवसमन्वितम् १४८
द्वारस्य दक्षिणे भागे नन्दिनं बलिमाचरेत्
वामभागे महाकाळं स्वस्वमन्त्रेण दापयेत् १४९
मातृणां चण्डवाद्यं च विघ्नेशस्य तु संकरी
षण्मुखं कटताळेन ज्येष्ठायां पुन्निताळकम् १५०
तटप्रहारदुर्गायां विषनच्छन्नचण्डकैः
प्रथमे च महापीठे भास्करं बलिमानतः १५१
गोपुरद्वारपार्श्वे तु दण्डमुण्डबलिं ददेत्
वृषस्य वृषताळं च इन्द्रस्य यमताळकम् १५२
गान्धारं भुजगनृत्तं च आग्ने बद्धावरणं तथा
कोल्लिस्वस्त्यकृतं चैव भृंगिण्यां कौशिकं तथा १५३
दण्डपालं च कर्तव्यं धर्मराजबलिं ददेत्
निर्ऋतेर्मल्लिताळं तु नट्टभाषा यथा कुरु १५४
भुजंगत्रासनृत्तं च बलिं दद्यात्स्वनामतः
वारुणे नवताळं च श्रीकाममममिति स्मृतम् १५५
वर्तनीनृत्तमाख्यातं बलिं दद्यात्क्रमेण तु
वायव्येबलिताळं च तक्केशी भूमशी भृशम् १५६
कोटिकन्दर्करागं च आलीढं नृत्तमेव च
धननाथ स्वमन्त्रेण बलिं दद्याभिधीयते १५७
ईशाने संकरी चैव शालापाणि भुगंजकम्

विष्णुब्रह्मा च कर्तव्यं वज्रादीनां बलिं ददेत् १५८
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा
अविघ्नो विघ्नकर्तारं षडेते भूतनायकम् १५९
शामधी मेघरागं च भुजंगत्रासनृत्तकम्
बलिदानं च कर्तव्यं विशेषं कथ्यतेऽधुना १६०
साला मण्टपयुक्तं चेद् अन्तस्थं परिचारकम्
बाह्ये पीठं च संस्थाप्य बलिं तत्रैव कारयेत् १६१
अथ चाघोरपीठं च बाह्ये स्थापनमाचरेत्
पीठयोगं च कर्तव्यं क्रमयोगमथापि वा १६२
वदन्ति योगे विशेषेण ब्रह्मा विष्णुर्विना चरेत्
दण्डमुण्डवृषं चैव भास्करस्य बलिं विना १६३
महापीठं च कर्तव्यं आमोदाद्यष्टमूर्तयः
आमोदं पूर्वभागे तु आग्नेय्यां तु प्रमोदकम् १६४
सुमुखं दक्षिणे चैव दुर्मुखं नैरृते तथा
अविघ्नं पश्चिमे भागे सात्विको वायुदर्शदा १६५
तामसं सौम्यदिग्भागे ऐशान्ये राजसं भवेत्
विघ्नकर्तारमूर्ध्ने तु स्वस्वनाम प्रदापयेत् १६६
गीतनृत्तसमायुक्तं बल्यन्ते वा विशेषतः
शनैः प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति १६७
पादप्रक्षाळनं कृत्वा पूर्वस्थाने निवेशयेत्
पाद्यमाचमनं चार्घ्यं अपूपादि निवेशयेत् १६८
आरात्रिकं च कर्तव्यं भस्मानं दापयेत्तदा
मूळदेवं च संप्राप्य धूपदीपं ददेत्क्रमात् १६९
ताम्बूलं दर्पणं चैव छत्रं चामरमेव च
व्यजनादीनि सर्वाणि हृदयेन प्रदापयेत् १७०
ऋगादीनि पुराणान्तं विज्ञापनं च भूसुरान्

नृत्तगीतं च वाद्यं च गणिका पारशं स्मृतः १७१
दशोपचारं कर्तव्यं महेशस्य प्रदापयेत्
परिवाराणि सर्वाणि धूपदीपं ददेद्गुरुः १७२
भस्मानं दापयेत्पश्चात्परिवाराणि दापयेत्
मध्याह्नपूजा कर्तव्या देशनाड्याधिकं भवेत् १७३
पूर्वस्थानेषु कर्तव्यं पुनः पुण्याहमाचरेत्
विभवश्चेद्विशेषेण पंचगव्यं च पूर्ववत् १७४
पंचामृतं पुराकृत्वा स्नपनं पूर्ववामनः
द्वारादीनां च संपूज्य पूर्वमेव सुभाषितम् १७५
अभिषेकं तथा कृत्वा पूर्वोक्तविधिना तथा
नैवेद्यं च प्रदातव्यं सकळादि निवेदयेत् १७६
वैश्यहोमं तु कर्तव्यं बलिदानं तु पूर्ववत्
धूपदीपं ददेत्पश्चाद् उपचाराणि कारयेत् १७७
महेशमूर्ति व्य ++++ धूपदीपं ददेद्गुरुः
परिवाराणि सर्वाणि नैवेद्यं च प्रदापयेत् १७८
तदन्ते +++ पूजां च तद्भेदमसुषु सुव्रतम्
होमभूमिं त्यजेद्यत्नाद् द्विपादं च चतुष्पदम् १७९
मणयो रत्ननिचयं वेबस्वं परिकीर्तितम्
लेह्यशोषणपानादि ताम्बूलं स्त्रग्विलेपनम् १८०
निर्माल्यं तेजिने तुभ्यं पदं तन्तु शिवाज्ञया
चण्डेशाय प्रदातव्यं शुद्धतोयाभिषेचनम् १८१
तदर्घ्यं च समादाय चण्डेशाय निवेदयेत्
धूपदीपं हृदा दत्वा भस्मानं दापयेत्ततः १८२
सायाह्ने तु प्रकर्तव्यं सायरक्षां समा भवेत्
अस्तमेयं समारभ्य एकद्वित्रि च नाडिका १८३
नृत्यन्तमृत्याग्रपार्श्वे तु सन्ध्यानृत्तं च वादयेत्

देवालये विशेषेण तत्काले ज्वलदीपकैः १८४
मण्डपस्यैशदिग्भागे दक्षिणे वाथ कारयेत्
अग्रे वाथ प्रकर्तव्यं स्थण्डिलं कल्पयेत्स्थली १८५
कृत्वा तु हुतपात्राणि संग्राह्यात्रैव विन्यसेत्
शालिपिष्टमयेंनाथ दीपाराधं च कल्पयेत् १८६
देशिकस्सकळी कृत्य पुण्याहं तत्र कारयेत्
अग्निम् हुत्वा विशेषेण दीपं संग्राह्य बुद्धिमान् १८७
शालिभिः स्थण्डिलं कृत्वा तन्मध्ये नळिनं लिखेत्
दीपधारं न्यसेन्मध्ये महालक्ष्मीं प्रपूजयेत् १८८
आदिबीजं समुच्चार्य एकपादं तिलं न्यसेत्
सर्षपं चैव पात्रेषु महाबीजमनुस्मरन् १८९
राजिकालवणं कल्प्य एकपात्रे सुसंभृतम्
कार्पासबीजमेकं तु बीजमुख्यमनुस्मरन् १९०
एकपात्रं तु कर्तव्यं निम्बं पत्रं च गुह्यकम्
प्लावयेत्तु महाशासु पूर्वभागे द्विपात्रकम् १९१
तत्तन्मंत्रेण संप्रोक्ष्य दीपं तत्र प्रपूजयेत्
मूललिंगे च संप्राप्य पाद्यमाचमनार्घ्यकम् १९२
धूपदीपं हृदा दत्वा नेत्रमन्त्रमनुस्मरन्
आरात्रिका त्रिधा भ्राम्या शिखामन्त्रेण बुद्धिमान् १९३
वादित्रलयसंयुक्तं गणिका नृत्तमाचरेत्
द्रव्याण्यथ क्रमेणैव आवृत्य वृत्य लिंगके १९४
भस्मानं दापयेच्छंभोः दिग्बन्धं चास्त्रमन्त्रतः
दर्पणादीनि सर्वाणि दर्शयेत्तु यथाक्रमम् १९५
तिलादिनिम्बपात्रान्तं तदग्नौ निक्षिपेत्ततः
मद्दणिका गणिकावाग्र विहाय दीपपात्रकम् १९६
सर्ववाद्य समायुक्तं बलिपीठाग्रके क्षिपेत्

सकळादिषु बेराणि धूपदीपं ददेद्गुरुः १९७
सर्वभक्ताश्च सर्वाश्च भस्मानं दापयेत्ततः
लिंगाग्रे वा प्रकर्तव्यं महेशाग्रे विशेषतः १९८
स्तुतिगीतं च वाद्यं च तोषयेच्छम्भुमादरात्
दीपपूजावसाने तु निशि पूजां समाचरेत् १९९
पूर्ववद्वारमभ्यर्च्य लिंगशुद्धिं ततः कुरु
आसनावरणादीनि पूर्ववत्कल्पयेद्बुधः २००
निवेद्यादीनि चण्डान्तं पूर्ववत्सम्यगाचरेत्
अर्धयामं च कर्तव्यं आचार्यं सकळीकृतम् २०१
पुण्याजिनं पुनः कृत्वा पंचामृतं च कल्पयेत्
फलानि रसवस्तूनि स्नानद्रव्यं च कारयेत् २०२
द्वारं पूर्ववदभ्यर्च्य स्नानं पूर्ववदाचरेत्
शुद्धान्नं व्यंजनोपेतं पायसान्नमपूपकम् २०३
ताम्बूलं मुखवासं च तत्तन्मन्त्रेण दापयेत्
धूपदीपसमायुक्तं उपचारैश्च पूर्ववत् २०४
महेशं नृत्तमूर्तिं च नैवेद्यं दापयेत्ततः
आचमनं च कर्तव्यं ताम्बूलं दापयेत्ततः २०५
भोगांगं च ततः कुर्यात् शिवं विज्ञाप्य देशिकः
पादुकौ च समाराध्य स्थलिकामध्यमे न्यसेत् २०६
रथे वा शिबिकायां वा आरोप्याच्छाद्य वस्त्रकैः
वस्त्रं शस्त्रं तथा पुष्पं गन्धादीन्संग्रहेत्ततः २०७
गेयनृत्तसमायुक्तं शंखकाहळघोषकैः
वेदध्वनिसमायुक्तं गणिकादिभिरावृतम् २०८
ताळवृन्तसमायुक्तं मृदुगत्या विशेत्ततः
पादप्रक्षाळनं कृत्वा आलयं तु प्रवेशयेत् २०९
भोगांगस्थानदेश स्यात् देव्यानुग्रहकारणम्

मण्डपे शयनं कल्प्य क्षेमाध्वे पंचतल्पयेत् २१०
अण्डजान्यैस्तु संकल्प्य ऊर्ध्वदाभुच्छादनस्तु वा
शस्त्रं तस्योपरिन्यस्य वस्त्रगन्धसुपुष्पकम् २११
अधस्तात्पादरक्षं तु विन्यसेत्पादपीठकैः
एवं न्यस्त्वा क्रमेणैव देवीमावाहयेद्गुरुः २१२
पयो दधिसमायुक्तं शुद्धान्नं व्यंजनैर्युतम्
सर्वोपचारैः संपूज्य संक्रमेणैव बुद्धिमान् २१३
अथवा पूपभक्ष्यादीन् दापयेत्तु शिवाय च
गौरीसूक्तेन संयोज्यं ताम्बूलं दापयेद्धृदा २१४
धूपदीपं समायोज्य भस्मानं दापयेत्ततः
पुष्पांजलिं ततः कृत्वा क्षिपेद्यवनिकां तथा २१५
तदन्ते क्षेत्रपालस्य पूजनं सम्यगाचरेत्
द्विरपार्श्वे तु कर्तव्यं आनन्दं मण्डभैरवम् २१६
वारुणे पूर्वदिग्भागे अर्चयित्वा विशेषतः
क्षेत्रपालं च संस्नाप्य मूलैरभ्यर्च्य मूलतः २१७
तत्तद्धृदादि मन्त्रेण न्यासं कृत्वा विचक्षणः
पूर्वादीशानपर्यन्तं मण्डजाद्यष्टमूर्तयः २१८
अण्डमाण्डं च विकृतं प्रहोदरं कालभैरवम्
कपालं नागमेवं च कोपमित्यभिधीयते २१९
इत्येतेनैव कर्तव्यं नैवेद्यं धूपदीपकम्
घोषयेत्सर्ववाद्यैश्च पार्थयित्वा विशेषतः २२०
स्वामिन् क्षेत्रपालेश +++ ध्यान्याश्च रक्षयेत्
उद्वास्य सर्वमर्त्यांश्च गृहं प्रति विशेषतः २२१
इत्येवं पूजनं कुर्यात् शिवसांनिध्यकारणम्
तस्मात्सर्वप्रयत्नेन इमां पूजां समाचरेत् २२२
अथार्चनं प्रवक्ष्यामि निर्मितं निधनेशन

वश्यार्थं च जयार्थं च लोकानुग्रहकारणम् २२३
अष्टपत्रदळं वापि चक्रमेव विधीयते
शूलादिलोहजं चैव चन्द्रवैरं च कथ्यते २२४
पूर्वास्यः पश्चिमास्यो वा स्नापयेन्निधनेश्वरम्
मण्डकर्पं वापि तन्मध्ये विन्यसेद्बुधः २२५
षडार्थं मानसं प्रोक्तं तन्मध्ये चन्द्रमूर्तिनम्
अधस्थादीनि कर्तव्यं केसरे सुप्रकल्पयेत् २२६
प्रागाद्यष्टदळेष्वादौ रोहिणीकृत्तिके तथा
रेवती भरणी चैव रात्री आर्द्रां तथैव च २२७
कालायै च कलायै च पूर्वादिक्रमशो यजेत्
सूर्यं चैव बुधं चैव बृहस्पतिं भार्गवं न्यसेत् २२८
आग्नेयादिषु कोणेषु कर्णिकामूलमाश्रितः
अंगारको यती चैव राहुकेत्वितनुं भवेत् २२९
पूर्वादिलोकपालाश्च यथा स्थाने भवेत्क्रमात्
मूर्तिमंत्रमनुस्मृत्य मूर्तिमावाह्य देशिकः २३०
रोहिणी कृत्तिका चैव दक्षिणे दक्षिणे न्यसेत्
सूर्यपूजावसाने तु चन्द्रपूजा विधीयते २३१
शिवपूजावसाने तु महेशादीनि पूजयेत्
एककालं द्विकालं वा पूजयेत्तु यथाविधि २३२
स्वयप्रदानं कर्तव्यं उत्सवादिशिवोत्तमः
सांगं चेत्तु विशेषेण परिवारोक्तक्रमेण तु २३३
इत्युत्तरस्वायंभुवे प्रतिष्ठातन्त्रे नित्यपूजाविधिपटलः १७

स्नपनं संप्रवक्ष्यामि शृणुष्वेकाग्रमानसः
इदानीं नवभेदास्ते उत्तमादि त्रयं त्रयम् १
सर्वरोगनिवृत्त्यर्थं सर्वशत्रुक्षयं भवेत्

नृपाणां कामदं चैव मर्त्यानां भोगमोक्षदम् २
प्रसादस्याग्रके वापि अष्टदिक्षु प्रकीर्तितम्
यथेष्टं कारयेद्धीमान् मनोरम्येऽन्यदेशके ३
मण्डपं कारयेत्तत्र त्रिविधं परिकीर्तितम्
सप्तदशं समारभ्य विंशद्धस्तावसानकम् ४
षट्त्रिंशद्वादिसंयुक्तं युगस्तम्भं त्यजेत्क्रमात्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ५
वितानध्वजसंयुक्तं स्तम्भान्वस्त्रेण वेष्टयेत्
दर्भमालासमायुक्तं सर्वालंकारशोभितम् ६
गोमयालेपनं कृत्वा वास्तुकर्म तदन्तके
संमार्जनं पुनः कृत्वा गोमयालेपनं कुरु ७
प्रथमं सूत्रसंख्याश्च कुम्भसंख्यास्ततः शृणु
प्रागग्रमुदगग्रं च द्विसूत्रं प्रसारयेत् ८
तस्य मध्ये न्यसेच्छंकुं भ्रामयेत्तु विचक्षणः
एकविंशतिसूत्राणि वृत्तवद्भ्रामयेत्ततः ९
सूत्रात्सूत्रान्तराळं + विंशत्यावरणं भवेत्
श्रुतिद्वारसमायुक्तं भूतसूत्राणि संत्यजेत् १०
रजनीपिष्टचूर्णं च पदं द्रोणैश्च शालिभिः
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ११
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तदर्धैर्लाजसंयुक्तं दर्भैः पुष्पैः परिस्तरेत् १२
स्थण्डिलं कल्पयेद्धीमान् पदं प्रति पदं प्रति
पथद्वाराढकान्नं च कलशानां पृथक्पृथक् १३
तन्तुना वेष्टयेद्धीमान् कलशांश्चैव चित्रितान्
पूर्वं प्रक्षाळ्य चास्त्रेण प्रोक्षयेत्पुरुषेण तु १४
शिवकुम्भं च तन्मध्ये तस्य वामे मनोन्मनीम्

पंचरत्नं सुवर्णं च निक्षिपेद्धृदयेन तु १५
वर्धनीं स्वर्णपुष्पं च वस्त्रयुग्मेन वेष्टयेत्
गन्धपुष्पादिभिः पूज्य उपदेशक्रमाद्यजेत् १६
नवोत्तरसहस्रं च नवाधिकचतुश्शतम्
नवाधिकं च द्विशतं नवोत्तरशतं तथा १७
एकाशीतिमतः प्रोक्तं वर्णसंख्याद्विहीनकम्
पंचविंशतिभिः प्रोक्तं सप्तदशभिश्च कथ्यते १८
रन्ध्रसंख्यावदानान्तं नवभेदेषु बुद्धिमान्
अष्टौ षोडश संख्या च चतुर्विंशति संख्यया १९
द्वात्रिंशत्संख्यया चैव षट्पंचाशद्विधीयते
चतुषष्टिश्च कर्तव्यं द्विसप्तति यथाक्रमम् २०
चतुरशीतिसंख्यातं घटाः षण्णवतिस्तथा
शतसंख्या च कर्तव्यं कलशाश्च चतुश्शतम् २१
अष्टोत्तरशतं चैव षड्भिर्दशकं तथा
अष्टाविंशच्छतं चैव एवमेव क्रमेण तु २२
प्रदक्षिणक्रमेणैव पूजयेत्तु विचक्षणः
आग्नेयादिषु कोणेषु नवरत्नानि विन्यसेत् २३
पाद्यमाचमनं चार्घ्यं पंचगव्यं कुशोदकम्
क्षीरं दधि घृतं चैव प्रथमावरणे न्यसेत् २४
हेमं च नाळिकेरं च इक्षुसारं मधुक्रमात्
पुष्पं च सर्वबीजं च कदलीफलमेव च २५
भसितं पंचगव्यं च कषायोदकमेव च
धातुतण्डुलकं चैव अष्टमृद्भिरतिक्रमात् २६
विद्येशाश्चैव चण्डेशो नन्दीशः काल एव च
विघ्नेशो वृषभश्चैव भृंगीशः स्कन्द एव च २७
नन्दः पिनाकपाणिश्च जयभद्रस्तथैव च

विरूपाक्षः सूक्ष्मरूपः पिंगळाक्षः क्रमेण तु २८
एवमावरणादीनां देवता द्रव्यमुच्यते
कुम्भमध्ये क्रमेणैव सदाशिवं यजेद्बुधः २९
वर्धनीं चैव संपूज्य उपदेशक्रमान्न्यसेत्
सर्वगन्धं समाहृत्य सर्वगन्धेषु निक्षिपेत् ३०
गन्धातोयेन संपूर्य कलशान्प्रति संस्थितान्
पिधानकूर्चवस्त्राद्यान् प्रत्येकं कल्पयेत्क्रमात् ३१
धूपदीपसमायुक्तं यथावत्संप्रपूजयेत्
प्रथमावरणं पूज्य तत्तदावरणेषु च ३२
गुळान्नं पायसान्नं च तत्तद्देवान्निवेदयेत्
ताम्बूलं च निवेद्याथ निरोधार्घ्यं ददेद्गुरुः ३३
होमं कुर्यात्तदन्ते तु महाशासु पुरोक्तवत्
दशाहुतिं प्रकर्तव्यं तत्तन्मूलमनुस्मरन् ३४
पूर्णाहुतिश्च शिरसा कलशे तु सुयोजते
कलशानपि सर्वां श्च स्थापितस्य क्रमेण तु ३५
द्वारपूजां पुरा कृत्वा लिंगशुद्धिं तदन्तके
स्नानद्रव्यं च पूर्वोक्तं तत्काले स्नानमाचरेत् ३६
शिवकुम्भं वर्धनीं च बाह्ये वादौ प्रदक्षिणम्
कुम्भाद्बीजं समादाय शिवस्य हृदि विन्यसेत् ३७
वर्धन्यं बीजमादाय पीठं वामे सुयोजयेत्
कलशानपि सर्वां श्च स्थापितस्य क्रमेण तु ३८
एवं स्नानं प्रकर्तव्यं नैवेद्यं धूपदीपकम्
महाहविः क्रमेणैव तोषयेत्परमेश्वरम् ३९
उत्तमोत्तममित्युक्तं उत्तमामध्यमं शृणु
पूर्ववन्मण्डलं कल्प्य शुद्धिं कृत्वा महीतले ४०
द्विद्विसूत्रसमायुक्तं प्रागग्रमुदगग्रकम्

तन्मध्ये चक्रमेवं तु सूत्रबन्धनमिष्यते ४१
पक्षसूत्रेण कर्तव्यं भ्रामयेत्तु विचक्षणः
चतुर्द्वारसमायुक्तं महाशासु प्रकल्पयेत् ४२
आवरणं न संख्या च शेषसूत्राणि लोपयेत्
कलशाश्च चतुर्विं शत् षट्त्रिंशत्परिकीर्तितः ४३
विंशद्द्विगुणकर्तव्यं अष्टाधिकसमन्वितम्
रसोत्तरं बीजसंख्या चतुष्षष्टि ऋगाधिकम् ४४
षट्सप्तति समायुक्तं वेदाधिकमशीतिकम्
एवमेव क्रमेणैव नवाधिकचतुश्शतम् ४५
मध्यमे स्थण्डिलं कल्प्य शालिभिर्विमलैः शुभैः
षट्कोणेन समायुक्तं तन्मध्ये नळिनं लिखेत् ४६
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तदर्धैर्लाजसंयुक्तैः दर्भैः पुष्पैः परिस्तरेत् ४७
आवरणानि सर्वाणि पदं प्रति पदं प्रति
स्थण्डिलं कल्पयेद्धीमान् त्रिःप्रस्थं शालिभिः क्रमात् ४८
तत्पूर्वं लेखयेत्पद्मं पूर्ववत्परिकीर्तितम्
कुम्भं च वर्धनीं पूर्य वस्त्रपूतेन वारिणा ४९
पंचरत्नं सुवर्णं च निक्षिपेद्धृदयेन तु
वस्त्रकूर्चसमायुक्तं चूतपल्लवसंयुतम् ५०
सदाशिवमनोन्मन्यौ पूजयेत्तु यथाविधि
वामादिशक्तिरष्टौ च स्वस्वनाम्ना प्रपूजयेत् ५१
ततो मातृगणांश्चैव क्रमेणावरणे यजेत्
गन्धपुष्पादिभिस्सर्वान् आग्नेयादि समर्चयेत् ५२
पाद्यमाचमनं चार्घ्यं पंचगव्यं कुशोदकम्
क्षीरं दधि घृतं चैव षोदश द्रव्यमेव च ५३
कर्पूरं कुंकुमं पत्रं लवंगं च फलत्रयम्

तुळसी जातिपुष्पं च क्रमेणैव सुयोजयेत् ५४
होमं कुर्याच्चतुर्दिक्षु शान्तिहोमेन कारयेत्
द्वारपूजादिपूजान्तं पूर्ववत्परिकल्पितम् ५५
एवं स्नानं समाख्यातं पुत्रपौत्रविवर्धनम्
उत्तमामध्यमं प्रोक्तं अधमं चाधुनोच्यते ५६
मण्टपं संप्रवक्ष्यामि यथावदनुपूर्वशः
शुद्धिं कृत्वा विशेषेण गोमयालेपनं कुरु ५७
मण्डपस्योत्तरे भागे कलशान्गृह्य देशिकः
तन्तुना वेष्टयेत्सर्वान् क्षाळयेत्पुरुषेण तु ५८
पूर्वाग्रमुदगग्रं च द्विद्विसूत्रं प्रसारयेत्
सूत्रयो दशं प्रोक्तं भ्रामयेत्तु शनैः शनैः ५९
सप्ततालं गृहीत्वा तु शेषसूत्राणि लोपयेत्
द्वारं प्रति विशेषेण महाशासु प्रकल्पयेत् ६०
रजनीपिष्टचूर्णं च पूर्वोक्तविधिना ततः
तन्मध्ये स्थण्डिलं कृत्वा अधमोक्तविधानतः ६१
आसनं कल्पयेत्तत्र स्वस्वमन्त्रं समुच्चरन्
अष्टाविंशतिभिश्चैव द्वात्रिंशत्परिकीर्तितम् ६२
चत्वारिंशति संख्यैश्च अष्टाधिकशतं भवेत्
चतुष्षष्टि गृहीत्वा तु नवाधिकद्विशतं भवेत् ६३
मध्ये सदाशिवं प्रोक्तं तस्य वामे मनोन्मनीम्
पंचरत्नं सुवर्णं च निक्षिपेद्धृदयेन तु ६४
वर्धन्यां स्वर्णपुष्पं च वस्त्रयुग्मेन वेष्टयेत्
एवं प्रति विशेषेण कलशांश्च यथाक्रमम् ६५
भवः प्रजापतिश्चैव रुद्रः केशव एव च
शास्ता च चन्द्रमाश्चैव एतानावरणान्क्रमात् ६६
विष्णुक्रान्तिश्च सिन्दूरं द्रोणं चैव तु पाटली

बिम्बं व्याघ्री च इत्येते ग्रावरणे यथा क्रमम् ६७
ग्रासनं मूर्तिमूलैश्च पूजयेत्तु यथाक्रमम्
नैवेद्यं दापयेत्तस्मात् ताम्बूलं दापयेत्ततः ६८
महाशासु प्रकर्तव्यं होमकार्यं विजानता
द्वारपूजादिपूजान्तं पूर्वोक्तविधिना सह ६९
महाहविर्निवेद्याथ तोषयेत्परमेश्वरम्
सर्वकार्यार्थसिध्यर्थं स्नपनं सम्यगाचरेत् ७०
स्नपनं संप्रवक्ष्यामि भुक्तिमुक्तिप्रदं नृणाम्
ग्रष्टोत्तरशतं चैव एकादशीति च मध्यमम् ७१
एकन्यूनं तु पंचाशन् मध्यमत्रयमुच्यते
सप्तहस्तं समारभ्य एकादशकरान्तकम् ७२
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमुच्यते
चतुर्द्वारसमायुक्तं पूर्ववत्परिकल्पयेत् ७३
प्रागग्रमुदगग्रं च द्विद्विसूत्रं प्रसारयेत्
मध्ये शंकुं न्यसेद्धीमान् भ्रामयेत्तु शनैः शनैः ७४
सूत्रात्सूत्रान्तरं तालं दशसूत्रेण कारयेत्
बाणसंख्या क्रमेणैव शेषसूत्राणि लोपयेत् ७५
स्थण्डिलं कल्पयेद्धीमान् पूर्वोक्तविधिना सह
ग्रष्टद्वादशं चैव ऋगाद्युत्तरविंशतिः ७६
ग्रष्टाविंशतिभिश्चैव षट्त्रिंशच्च यथाक्रमम्
स्थापयेत्पुरुषेणैव गन्धतोयेन पूरयेत् ७७
मध्यमे शिवकुंभं च वर्धनीं तस्य वामके
पंचरत्नं सुवर्णं च निक्षिपेद्धृदयेन तु ७८
वर्धनीं स्वर्णपुष्पं च कूर्चं वस्त्रेण वेष्टयेत्
पाद्यमाचमनं चार्घ्यं पंचगव्यं कुशोदकम् ७९
क्षीरं दधि घृतं चैव निक्षिपेत्पुरुषेण तु

मधु कोष्ठं च कङ्कोलं कर्पूरं च क्रमान्न्यसेत् ८०
कुमुदं च शतावेरी पयसा च दधि क्रमात्
सर्षपं च तिलं बिल्वं मातुलुंगफलं क्रमात् ८१
लघुकोष्ठं च कङ्कोलं हरिबेरं क्षिपेत्क्रमात्
वामादिशक्तयश्चाष्टावीशान्तं द्विद्विकौ मतौ ८२
ज्येष्ठां लक्ष्मीं च दुर्गां च सरस्वतीं च क्रमेण तु
तृतीया वरणे चैव लोकेशान्विन्यसेत्क्रमात् ८३
विघ्नराजं गुहं चैव महाकाळं च नन्दिनम्
गंगां मातृगणांश्चैव पंचमावरणे यजेत् ८४
ईशप्रतिमुखान्सर्वान् स्वस्वनाम्ना तु पूजयेत्
मंत्रान्नं मन्त्रपुष्पं च प्रतिमन्त्रेण पूजयेत् ८५
पूर्वोक्तविधिना चैव शेषकर्माणि योजयेत्
मध्यमोत्तममित्युक्तं मध्यमामध्यमं शृणु ८६
पूर्वोक्तमण्डपं कल्प्य पूर्ववत्सूत्रवर्तनम्
अब्धिद्वयसमायुक्तं भ्रामयेत्तु विचक्षणः ८७
द्वारं संकल्प्य चाशासु त्रीणि सूत्राणि लोपयेत्
स्थण्डिलं कल्पयेद्धीमान्मध्यमोक्तविधानतः ८८
तत्पूर्णं कारयित्वा तु पूर्वोक्तविधिना ततः
तन्तुना वेष्ट्य कलशान् क्षाळयेत्पुरुषेण तु ८९
द्वात्रिंशत्संख्या युक्तं चतुर्विं शतिसंख्यया
तद्व्यष्टसंख्यया युक्तं नागसंख्या समायुतम् ९०
आग्नेयादिषु कोणेषु कलशान्स्थापयेद्बुधः
शिवकुम्भं च तन्मध्ये तस्य वामे तु वर्धनीम् ९१
गन्धतोयेन संपूर्य पंचरत्नं विनिक्षिपेत्
स्वर्णपुष्पसमायुक्तं तदुक्तं कूर्चवस्त्रकम् ९२
पाद्यमाचमनं चार्घ्यं पंचगव्यं परिक्रमात्

चम्पकं तैलनीवारमेघं चैव क्रमेण तु ९३
चन्दनागरुकर्पूरलवंगं च क्रमेण तु
नीलोत्पलं च पद्मं च कुटजं मल्लिका तथा ९४
द्वितीयावरणमारभ्य कार्तिकेयो गजाननः
नन्दिनं च महाकाळं पूजयेत्स्वस्वमन्त्रकैः
अनन्तो वासुकिश्चैव तक्षकश्चाम्बुजस्तथा ९६
महाब्जं शंखपालं च कार्कोटगुळिकं तथा
एवमावरणादीनि पूजयेत्स्वस्वमंत्रकैः ९७
स्थापितस्य क्रमेणैव स्नापयेत्परमेश्वरम्
मन्त्रपुष्पं तदन्ते तु मन्त्रान्नं च निवेदयेत् ९८
मध्यमामध्यमं प्रोक्तं सर्वकर्मसु योजयेत्
पूर्ववत्सूत्रपातं च षट्सूत्रं भ्रामयेद्बुधः ९९
पूर्वादिषु चतुर्दिक्षु द्वारार्थं लोपयेत्ततः
स्थण्डिलं कल्पयेद्धीमान् पूर्वोक्तविधिना सह १००
अष्टषोडशसंख्याश्च ऋगाद्युत्तरविंशतिः
त्रिकाले च क्रमेणैव स्थाप्य सर्वान्प्रपूजयेत् १०१
तस्य मध्ये न्यसेत्कुम्भं तस्य वामे मनोन्मनीम्
स्वर्णरत्नसमायुक्तं पूर्ववत्पूजयेद्बुधः १०२
सर्षपं च तिलं बिल्वं मातुलुंगफलं तथा
लघुकुष्ठं च कञ्चोलं पुष्पं चैव तु दापयेत् १०३
अपामार्गं विष्णुक्रान्तिर्धूर्धूराश्वत्थकं तथा
प्रथमावरणे प्रोक्तविद्येशाः परिकीर्तिताः १०४
पुरुषः पुरुषश्चैव गोविन्दो वित्तनायकः
अदित्य शनिचन्द्राश्च तृतीयावरणे यजेत् १०५
स्थापितस्य क्रमेणैव स्नापयेत्परमेश्वरम्
मध्यमात्कन्यसं प्रोक्तं कन्यसोत्तममुच्यते १०६

पूर्वाग्रमुदगग्रं च द्विद्विसूत्रं प्रयोगतः
चक्रात्सूत्रं परिभ्राम्य तालान्तरे सूत्रकम् १०७
श्रुतिद्वारसमायुक्तं पूर्वं + लोपयेत्क्रमात्
स्थण्डिलं कल्पयेद्धीमान् कन्यसोक्तक्रमेण तु १०८
अष्टषोडशसंख्यैश्च क्रमेण स्थापयेद्गुरुः
मध्यमे शिवकुम्भं तु वर्धनीं तस्य वामके १०९
रत्नं वापि सुवर्णं वा निक्षिपेद्धृदयेन तु
पाद्यमाचमनं चार्घ्यं पंचगव्यं क्षिपेत्क्रमात् ११०
मधुकोष्ठं गुळं चैव सर्षपं च क्रमेण तु
कन्यसोत्तममित्युक्तं तन्मध्यममथोच्यते १११
पूर्ववत्सूत्रपातं च भ्रामयेत्तु त्रिसूत्रकम्
पूर्ववद्द्वारमेवं तु स्थण्डिलं पूर्ववद्गुरुः ११२
मध्यमे शिवकुम्भं तु तस्य वामे मनोन्मनीम्
अनन्ता दिशिखण्ड्यन्तान्प्रथमावरणे यजेत् ११३
द्वितीयावरणे चैव लोकपालांस्तथाष्टकान्
पाद्यमाचमनं चार्घ्यं पंचगव्यादिकं न्यसेत् ११४
सक्तुं भसितरात्रिं च मेघमेवक्रमेण तु
इतराण्यपि सर्वाणि पूर्ववत्परिकीर्तितम् ११५
कन्यसात्कन्यसं वक्ष्ये भ्रामयेत्तु द्विसूत्रकम्
मध्यमं शिवकुम्भं तु तस्य वामे मनोन्मनीम् ११६
आग्नेयादिषु कोणेषु अनन्तादिद्विकौ मतौ
उशीरं चन्दनं चैव कर्पूरं मेघमेव च ११७
शिवकुम्भे च वर्धन्यां स्वर्णपुष्पं च विन्यसेत्
एवं स्नपनमाख्यातं सर्वकाले तु योग्यकम् ११८
इति स्वायंभुवे स्नपनविधिपटलः १८

अयुतस्नपनं वक्ष्ये श्रूयतां निधनेश्वर
सर्वशत्रुक्षयकरं शिवसायुज्य कारणम् १
तस्मात्सर्वप्रयत्नेनायुतस्नपनमाचरेत्
सर्वमासेषु कर्तव्यं प्रतिष्ठादिषु योग्यकम् २
कर्तुर्जन्म दिने वापि पुण्यकालेऽथ मंगळे
युद्धारम्भावसाने ह्ययुतस्नपनमाचरेत् ३
एवं कालविधिः प्रोक्तः तदर्थं मण्डपं शृणु
पंचविंशत्समारभ्य पंचहस्तविवर्धनात् ४
चत्वारिंशत्करं मानं मानसूत्रं तदुच्यते
चतुष्षष्टिगायत्रियुक्तं युग्मयुक्तमशीतिकम् ५
मण्डपं वा प्रपां वापि कूटाकारमथापि वा
चतुर्द्वारसमायुक्तं भद्रयुक्तं तु मण्डपम् ६
भद्रं सोपानयुक्तं तु हस्तिहस्तिविभूषितम्
सर्वलक्षणसंयुक्तं तोरणाद्यैरलंकृतम् ७
कलशान्क्षाळयेद्धीमान् सूत्रेणैव तु वेष्टितान्
मनोरम्येऽन्यदेशे वा दर्भशय्योपरिन्यसेत् ८
अधोमुखं शयित्वा तु एककूर्चोपरि न्यसेत्
अस्त्रमन्त्रेण संप्रोक्ष्य कलशान्द्रव्यदेशिकः ९
प्रधानं द्रोणपूर्णं च शिवपूर्णां च वर्धनीम्
द्वादशप्रस्थपूर्णान्तु अन्यत्सर्वघटान्प्रति १०
आढकं प्रस्थमेकं वा त्रिप्रस्थं वा द्वितीयकम्
द्विप्रस्थं वा तृतीयं तु कलशानां विधीयते ११
तन्त्रं च त्रिगुणीकृत्य कलशेषु सुयोजयेत्
त्रिगुणीद्विगुणीकृत्य अन्यत्कुम्भेषु योजयेत् १२
त्रिगुणीद्विगुणीकृत्य शिवकुंभं च वेष्टयेत्
एकतन्तुविहीनं तु वर्धन्यां योजयेत्सुधीः १३

शिवकुम्भस्य वस्त्रं च उत्तमं युग्ममेव च
उत्तमं कूर्चमेवं तु नवरत्नानि विन्यसेत् १४
सार्धनिष्काब्जपुष्पं च तप्तकांचननिर्मितम्
द्राळितं गन्धतोयेन शिवकुम्भं च पूरयेत् १५
आम्रपल्लवयुक्तं च नाळिकेरसमन्वितम्
लम्बकूर्चसमायुक्तं शिवकुम्भस्य लक्षणम् १६
वस्त्रमध्यमयुग्मं तु कूर्चमध्यममेव च
अर्धनिष्काब्जपुष्पं च पंचरत्नानि योजयेत् १७
रजनीतोयपूर्णं च नाळिकेरं च पल्लवम्
लम्बकूर्चसमायुक्तं वर्धन्यां संप्रयोजयेत् १८
अन्येषां चैव कुम्भानां वस्त्रं कूर्चं च मध्यमम्
स्वर्णपादेन पुष्पं च पंचरत्नानि योजयेत् १९
++++++++++ नाळिकेरं च पल्लवम्
कन्यसाम्बरकूर्चादिकलशानां विधीयते २०
ताम्रपात्रेण संयुक्तं कलशानां पृथक्पृथक्
पदं प्रति विशेषेण कलशद्वयसंयुतम् २१
तं पूर्वे द्रव्यदेवाश्च क्रमेणैव तु चोच्यते
सहस्रद्वयमेकं च गुरुणोक्तविधानतः २२
प्रथमं शोधयेद्भूमिं अस्त्रमंत्रेण देशिकः
गोमयालेपनं कृत्वा घोरमन्त्रेण बुद्धिमान् २३
सूत्रन्यासमघोरेण सूत्रसंख्याक्रमं शृणु
प्रागग्रमुदगग्रं च चतुस्सूत्रं प्रसारयेत् २४
एवं नवपदं ग्राह्य मध्यभागे विशेषतः
पूर्वाग्रमुत्तराग्रं च द्विद्विसूत्रं प्रसारयेत् २५
शंकुं तन्मध्यमे स्थाप्य भ्रामयेत्तु शनैः शनैः
सूत्रं त्रयोदशान्तं तु रविष्वेकैकतालकम् २६

मध्ये द्वितालविस्तारं चतुर्द्वारसमन्वितम्
नवावरणदेशेषु घटसंख्यां ततः शृणु २७
युगाग्रेकाग्रेचाष्टकलशं तन्मध्ये शिवकुम्भकम्
मध्यमेशानयोर्मध्ये वर्धनीं न्यस्य देशिकः २८
अष्टचत्वारि षष्टिश्च द्विसप्तति यथाक्रमम्
द्व्यशीतिसंख्यया प्रोक्तं विंशत्यूर्ध्वशतं भवेत् २९
द्विचत्वारिंशकशतं चतुश्चत्वारिंशकं शतम्
द्विपंचाशद्युतशतं अशीत्या संयुतं शतम् ३०
द्विद्विसंख्या क्रमेणैव द्विसहस्त्रं क्रमान्न्यसेत्
सहस्त्रद्वयमाख्यातं महाशासु हुनेत्ततः ३१
लवंगं चैव कर्पूरं नाळिकेरं फलत्रयम्
कदळीफलं च पनसं विष्णुक्रान्तिसमं भवेत् ३२
पंचगव्यादिसंयुक्तं द्रव्यमेवं विधीयते
गौरी चण्डेशनन्दीशौ महाकाळश्च माधवः ३३
गणो गणेशः स्कन्दश्च महालक्ष्मीन्निवाधिपाः
शिवं प्रधानकुम्भे तु वर्धन्यां च मनोन्मनीम् ३४
परितश्चाष्टकुम्भेषु विद्येशान्संप्रपूजयेत्
देवाद्रव्याणि चान्यस्त्र पूर्वोक्तान्ग्राहयेद्बुधः ३५
अन्येष्वेकैकपदके त्रिंशत्सूत्राणि पातयेत्
पूर्वाग्राश्चोत्तराग्राश्च चतस्त्रो वीथयः स्मृताः ३६
प्रागग्रमुदगग्रं च वीथीनामष्टकं भवेत्
पंचविंशतिव्यूहाश्च नवव्यूहाश्च मध्यमे ३७
गृहीत्वा तु चतुष्कोणं तत्तद्रूणं प्रकल्पयेत्
महाशासु चतुर्व्यूहं होमार्थं संप्रकल्पयेत् ३८
मध्यव्यूहे विशेषेण महेशं संप्रकल्पयेत्
एकैकं कोणदेशे तु महाशासु चतुष्टयम् ३९

आवृतं भानुसंख्या च घटं व्यूहाश्च विंशतिः
प्रथमावृतिकोणेषु व्यूहाश्च चतुरः स्मृताः ४०
तदावृतौ कलासव्यूहाश्चैवं व्यूहाश्च विंशतिः
विंशद्व्यूहं समाख्यातं तत्तद्व्यूहं प्रति प्रति ४१
व्यूहेशकुम्भस्त्वेकस्तदावृतिद्वयमेव वा
चतुर्विं शत्पदे कुर्याद् एकैकस्मिन्घटद्वयम् ४२
एवं विंशतिव्यूहेषु सहस्रकलशाः स्मृताः
कलशाश्चैवमाख्याता द्रव्याणां विधिरुच्यते ४३
पाद्यमाचमनं चैव मध्यव्यूहे प्रकल्पयेत्
तिलं च सर्षपं चैव नीवारं यवमेव च ४४
नारंगस्य द्वयं चैव उशीरं चन्दनं तथा
तक्कोलं कोष्ठमेवं तु पत्रजातिर्घने भवेत् ४५
हिमं कुंकुमकस्तूर्यौ तुटिस्तुम्बूवराळिका
वराळी क्रकिळा दूर्वा द्रोणपुष्पं च पाटली ४६
राजपुष्पकम्
मन्दारं करवीरं च रक्तमन्दारमालती
अगरुद्वयलाजाश्च लाजचूर्णं च भस्मकम् ४७
निगुण्डी तुळसी चैव मुण्डी वारित्रणं भवेत्
शकृच्चूर्णं च भद्रा च श्वेतलोध्रं प्रकल्पयेत् ४८
स्वर्णपुष्पप्रदाने तु व्यूहेशेषु प्रकल्पयेत्
स्वर्णपुष्पं च रत्नं च पूर्ववत्परिकल्पयेत् ४९
एवं द्रव्यं समापाद्य तत्तदावरणे न्यसेत्
द्रव्याणामेवं विन्यासं देवानां विधिरुच्यते ५०
विद्येशान्भास्करं चैव मध्यव्यूहे प्रकल्पयेत्
इन्द्रादीनां च वस्त्राद्यं व्यूहेशानां प्रकल्पयेत् ५१
अनन्तानाथसूक्ष्माश्च किमर्दे विद्रुमस्तथा

किरीटी किंशुपाणिश्च सर्पपाणिर्वतेश्वरः ५२
वसुप्रदेशो वक्षस्थ खड्गपाणिन्निकुब्जकः
कार्तिकेयश्च ++++ करण्डः कालदेहकः ५३
कपाली पिनश्चैव शंकुकर्णो गदाधरः
पेचकः पद्मनाभश्च वल्कलाम्बरवासकः ५४
कृशानुः पाण्डुदेहश्च वायुः पाणिस्तथैव च
रक्तांगी चैव कृष्णांगी पीतांगी श्वेतरागिणी ५५
धीवर्णी वीरभद्रा च कासः कारणनायकः
वसुप्रिया वसुमतीत्येवमावरणे न्यसेत् ५६
हेमशाली महाशाली सौगन्धिकमथोत्तमः
मध्यव्यूहे विशेषेण चाष्टद्रोणाप्तशालिना ५७
व्यूहानामाढकप्रस्थं तदर्धं तण्डुलं भवेत्
तदर्धं तिलमित्युक्तं तदर्धं लाजमेव च ५८
शालिनां प्रस्थमेवं तु कलशानां पृथक्पृथक्
स्थण्डिलं कल्पयेद्धीमान् बहुरूपमनुस्मरन् ५९
गुरुपदिष्टमार्गेण पूजयित्वा यथाक्रमम्
नवाग्निर्वाथ पंचाग्निरेकाग्निर्वा समाचरेत् ६०
पूर्ववद्धोमकार्यं तु वह्नीन्कुम्भेषु योजयेत्
ऐन्द्रस्सर्वं समाख्यातं आग्नेय्यामधुनोच्यते ६१
पूर्ववत्सर्वमेवं तु देवताद्रव्यमुच्यते
पाद्यमाचमनं चैव मध्यव्यूहे प्रकल्पयेत् ६२
अर्घ्यं च पंचगव्यं च इक्षुसारं फलं गुळम्
पनसाम्रफलं चैव नवनीतं घृतं तथा ६३
गुग्गुलु सितं माषं पलाशं पद्मतुषण्डकम्
नारंगं दाडिमी कुन्दं कपित्थस्य शरल्यकम् ६४
बिल्वपत्रं तपस्वी च तुळसी गन्धपुष्पकम्

धात्रीं च माधवीं चैव हरेणुं कर्णिकारकम्  ६५
एलालवंगकर्पूरचन्दनं श्वेतजीरकम्
पद्मं दान्तं सिताब्जं च कुटजं जातिमेव च  ६६
नीलोत्पलं च कुमुदं चम्पकं च स्थलाब्जकम्
मुद्गं माषं तिलं चैव श्वेतलोध्रं च गैरिकम्  ६७
++विद्येश्वरानष्टौ द्रव्यं वाथ पृथक्पृथक्
विद्येश्वरं च वृषभं कारणेशं हिलारिणम्  ६८
प्रेतेशं पुरुषं चैव क्रुद्धं पापविनाशनम्
करेशं वालिनं दण्डं पिंगाक्षं प्रमदं हरम्  ६९
वारुणं वणिजं भ्रासिं करण्डं कुण्डलाक्षकम्
पाशधारिं सिंहनादं खड्गधारिं महेश्वरम्  ७०
चक्रधारिं सिंहधरं पाशधारिं सृणीधरम्
दुर्भरं ज्येष्ठां च मातृंश्च वनमातृंश्च दीपकम्  ७१
जलेशीं हर्षिणीं चैव पर्वतेशीं यमेश्वरीम्
पक्षिणीं पूर्णदेहीं च पंचमीं केशधारिणीम्  ७२
चिन्तामणिं कामदेवीं एतान्देवान्प्रचक्षते
आग्नेयस्थेश्वरस्य विधिः प्रोक्तो याम्यव्यूहविधिं शृणु  ७३
क्रमश्च पूर्वमेवोक्तो देवताद्रव्यमुच्यते
वराळं मंजरी चैव मध्यव्यूहे प्रकल्पयेत्  ७४
प्रथमावरणे तत्र ++++++++++
अष्टमृद्वल्कलोदं च लोहं धातु जलं भवेत्  ७५
स्वर्णोदकं रत्नजलं कान्तोदं कुंकुमं भवेत्
फलोदकं च पत्रोदं पुष्पोदकमतः परम्  ७६
रजतोदं ततः पश्चान्मार्जनोदकमेव च
परिमार्जनं च चन्द्रोदं कन्दोदं द्रव्यमेव च  ७७
बीजोदकं कृष्णजलं गन्धोदकमतः परम्

अष्टमृद्वल्कलं चैव गव्यं धातु पृथक्पृथक् ७८
एवं द्रव्यं समाख्यातं व्यूहं प्रति विशेषतः
विद्येशानां च वामादि वृषभं पावकं तथा ७९
मातृर्विघ्नेश्वरं चैव स्कन्दं ज्येष्ठां तथैव च
दुर्गां सूर्यं च वह्निं च पितरं च यमं तथा ८०
रोहिणीमश्वनीत्युक्तं बलं च निर्ऋतिं तथा
अप्सरं वरुणं चैव वायुर्षं भयमेव च ८१
रुद्रं चैव क्रमेणैव खकारान्तं क्रमेण तु
एताश्च देवताः प्रोक्ता निर्ऋतौ च प्रवर्तते ८२
सर्वं पूर्ववदुद्दिष्टं द्रव्यदेवमिहोच्यते
हिमतोयं मध्यमे च कुंभं प्रति विनिक्षिपेत् ८३
दशपुष्पं क्रमेणैव क्षीरादिद्रव्यपंचकम्
बृहत्यौ लिकुचं चैव श्वेतार्कं द्रोणपुष्पकम् ८४
दशपत्रं चतन्मूलं क्रमेणैव निवेशयेत्
अनन्तादिशिखण्ड्यन्तान्भृगुरत्रिस्तथैव च ८५
सोमं च क्षेत्रपालं च इशो द्वादशभास्कराः
विक्रमः क्रमपादश्च विकेशश्चोर्ध्वकेशकः ८६
सनन्दश्च क्रमेणैव क्षीरादिद्रव्यपंचकम्
+++++++++ तत्तत्प्रथममेव च ८७
गकारादि फकारान्तं अधिदेवानतः परम्
स्वस्वमंत्रैः समभ्यर्च्य गुरुणोक्तविधानतः ८८
निर्ऋतौ देवताः प्रोक्तो वारुणे विधिरुच्यते
सर्वं पूर्ववदेवं तु द्रव्यदेव इहोच्यते ८९
मध्ये व्यूहे विशेषेण मुक्तपुष्पमिति स्मृतम्
दशपत्रं रुद्रपर्णी चूतं पुष्पद्वयं मतम् ९०
सर्जनं मार्जनं मंजी मंजरी चैव संमतम्

पटोली गुग्गुलं माषं त्रिपुषं कोष्ठमेव च ९१
पुंनागं शंखपुष्पं च श्रियावर्तिद्विकर्णिका
बहुकर्णिका च मन्दारं करजं जातिमालती ९२
लक्ष्मी बकुळश्वेतार्कं मालती श्वेतलोध्रकम्
अतसी विषकासी च भद्रा च क्रमयोगतः ९३
एवं द्रव्यं समाख्यातं अनन्तादिरिहोच्यते
द्वितीयं सर्पराजं च मध्यमे तु विशेषतः ९४
मेषाद्यधिपतिश्चैव नक्षत्राधिपतीनपि
श्रीधरं च क्रमेणैव पूजयेत्तु यथाक्रमम् ९५
वरुणे सर्वमाख्यातं वायव्ये विधिरुच्यते
पूर्ववत्सर्वमेवं तु द्रव्यदेवविधिं शृणु ९६
महाभद्रा पलाशं च धूर्धूरं मौसली तथा
वेदका चम्पकं कर्णी पट्टिका हेमधूर्धुरम् ९७
कोरण्डं गैरिकं बिल्वं तपस्वी ह भद्रिका
धातकी तुळसी चैवापामार्गं जम्बुरेव च ९८
नागादिविष्णुक्रान्तिः भूपाटली जपा मतम्
माधवी जम्बकपुष्पं च निगुण्डी पीवरं तथा ९९
वरणं चारणं चैव व्याघ्री कर्पूरयुग्मकम्
सर्षपद्वयमेवं च कर्तव्यं विनिवेशयेत् १००
विळंगं नाळिकेरं च रास्नासर्षपमेव च
मृगमदं च निर्यासं रक्तचन्दनतैलकम् १०१
घृतं क्रमेण कर्तव्यं तत्तत्कुम्भे सुयोजयेत्
अनन्तादिभवं चैव मध्यव्यूहे प्रकल्पयेत् १०२
पूर्वादीशानपर्यन्तं कोटिसूक्ष्मस्तथैव च
गौरीशब्दस्तथा ब्रह्मा शिवो विष्णुर्भृगुस्तथा १०३
ईशानः कौशिकश्चैव एकाक्षो विघ्ननायकः

सरस्वतीमहालक्ष्मीरेकरुद्रस्त्रिदण्डकः १०४
पशुः पतिः पंचपाणिः कामरूपी हलायुधः
कंकणी फणिकर्णी च पर्णाशनविकारिणः १०५
ऊर्ध्वरूपस्ततोन्मत्तो युगनाथस्सुपेशलः
पेशलो भ्रात्रदारी च पक्षधारी करण्डकः १०६
क्रूरजन्मा कृपा++ हुतभुक् कृत्तिकापतिः
कौशिकादिषु पंचैते देवताः परिकीर्तिताः १०७
वायुव्यूहः समाख्यातः सोमव्यूह इहोच्यते
सर्वं पूर्ववदाख्यातं देवता द्रव्यमुच्यते १०८
अश्रं वाथ सुवृत्तं वा राजतं चक्रमाहरेत्
कुजयद्वयं च माषं स्याच्चक्रं प्रति पृथक्पृथक् १०९
यवद्वयसुविस्तारं तन्मध्ये वर्णमालिखेत्
ककारादिसकारान्तं मकारादिदशाक्षरम् ११०
लिखित्वा तु विशेषेण एकैकं कलशं प्रतिः
तत्तद्वर्णादि देवेशं तत्तत्कुम्भे सुयोजयेत् १११
सोमव्यूहं समाख्यातं ईशानव्यूह उच्यते
पूर्ववत्सर्वदेवानां स्वर्णचक्रं लिखेत्ततः ११२
तत्तदक्षरसंयुक्तं बीजाक्षरमिति स्मृतम्
अक्षराधिपतीन्देवांस्तत्तच्छक्त्या सहार्चयेत् ११३
एवं क्रमेण कर्तव्यं उपदेशस्य मार्गतः
अनुक्तमव्यतो ग्राह्यं अयुतस्नानकर्मणि ११४
महाहविर्निवेद्याथ तोषयेत्परमेश्वरम्
देवदक्षिणभागे तु पूर्वस्यो देशिकः स्थितः ११५
कर्तारं विन्यसेदग्रस्त्रवन्यासं च शृंखलाम्
हंसन्यासं च कर्तव्यं कर्तृदेहे न्यसेत्क्रमात् ११६
कर्तुर्दक्षिणकर्णे तु रहस्यं मन्त्रमुच्चरन्

आचार्यं पूजयेत्पश्चात् कर्ता श्रद्धानुसारतः १९७
इति स्वायंभुवे अयुतस्नानविधिपटलः १९

अथातस्संप्रवक्ष्यामि प्रायश्चित्तविधिं शृणु
कृत्तिकाख्ये तु मासे तु कृत्तिका दीपहीनकम् १
तत्तत्कालविहीनं च न्यूनातिरिक्तमेव च
एवं हीनस्य कर्तव्यं लोके दुर्भिक्षमेव च २
स्नपनं शान्तिहोमं च घृतस्नानं विशेषतः
अग्निबीजं जपेद्धीमान् पुनर्दीपं समाचरेत् ३
रक्षाबन्धविहीनं च दीपस्थाली विहीनके
मशकादि लूतिकान्तं च दीपस्थालीं प्रवेशयेत् ४
लोकस्य रोगसंपन्नं तदर्थं शान्तिहोमकम्
पुनर्योग्य क्रमेणैव दीपारोहणमाचरेत् ५
कृत्तिकायां यथोक्तं यद् हीनं चेद्यधिकं तु वा
सस्यानां नाशनं प्रोक्तं शान्तिहोमेन शाम्यति ६
तत्काले दीपमारोप्य पूर्वोक्तविधिना सह
एवमेव क्रमेणैव प्रायश्चित्तमिहोच्यते ७
आयुश्रीकीर्तिपुष्टिं च धनधान्यप्रदं भवेत् ८
इति स्वायंभुवे कृत्तिका दीपप्रायश्चित्तविधिपटलः २०

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शृणु
आर्द्रमासविहीने च घटिका हीननाडिके १
मासपक्षवारादि विपरीतं च संग्रसेत्
सस्यानां नाशनं प्रोक्तं भोगजानां तु नाशनम् २
महाभिषेकः कर्तव्यो रुद्रमन्त्रं शतं जपेत्
शान्तिहोमं ततः कृत्वा पूर्ववद्व्रतमाचरेत् ३

स्नानकार्यविहीनं च रक्षाबन्धविहीनकम्
होमकर्मविहीनं च रक्षाबन्धविहीनकम् ४
होमर्कर्मविहीनं च द्रव्यसंपातहीनकम्
ईतिदोषविवृध्यर्थं तद्दोषशमनाय च ५
मूलमन्त्रं शतं जप्त्वा शान्तिहोमं तु कारयेत्
पुनः कर्म समारभ्य यावत्कर्म समाचरेत् ६
स्थण्डिलस्य विहीनं च पायसा पूपहीनकम्
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं तथा भवेत् ७
क्रमस्य विपरीतं च राष्ट्रदुर्भिक्षमेव च
मूर्तिहोमं ततः कृत्वा पयसा स्नापयेच्छिवम् ८
मूलमन्त्रं शतं जप्त्वा पूर्वमेव समाचरेत्
डोलारोहणहीनं च प्रदक्षिणविहीनकम् ९
वेदघोषविहीनं च नृत्तवाद्यविहीनकम्
दीपहीनं च तत्काले श्लोकादीनां च हीनकम् १०
गौरीबीजं शतं जप्त्वा शेषकर्माणि योजयेत्
शूद्रादि स्पर्शनं कर्तुः तत्र स्नपनमाचरेत् ११
मर्त्या शृंगादि हीनं च चाग्निना केशहीनके
उत्तरास्य विहीनं च शान्तिहोमं समाचरेत् १२
तद्बीजेन शतं जप्त्वा प्रायश्चित्तमिहोच्यते १३
इति स्वायंभुवे आर्द्राव्रतप्रायश्चित्तविधिपटलः २१

मासपूजाविधिं वक्ष्ये श्रूयतां निधनेश्वर
मासं द्विविधमाख्यातं स्थूलं सूक्ष्ममिति स्मृतम् १
धनुर्मकरमेषादि स्थूलं त्रिविधमुच्यते
उत्तमादिक्रमेणैव तत्फलं चाधुनोच्यते २
पुष्टिरारोग्यजयदं अन्ते सालोक्यमाविशेत्

तत्सूक्ष्मं विविधं प्रोक्तं दीनं लग्नं च संगृहेत् ३
कर्कलग्नं च तल्लग्नं अनुकूलं वरं भवेत्
कर्तुर्व्याधिविनाशः स्यादपवर्गप्रदायकम् ४
उदयाद्युदयान्तं च सर्वमासं च संग्रहेत्
अहोरात्रं प्रकर्तव्यं सर्वपूजां समाचरेत् ५
भोगमोक्षप्रसिध्यर्थं सूक्ष्मपूजाफलं विदुः
अयने विषुवे चैव अन्यत्पुण्यदिने मतम् ६
मासपक्षे विशेषेण तत्तन्मासर्क्षमेव वा
इहलोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ७
यागशालामथो वक्ष्ये मण्डपं वा प्रपां कुरु
तन्मासं पर्ववत्कुर्यात् सर्वालंकारशोभितम् ८
पश्चिमे चोत्तरे वापि मध्यवेदी समन्वितम्
हस्तमात्रप्रविस्तारं त्र्यश्रकुण्डमुदाहृतम् ९
पूर्ववत्स्रुक्स्रुवादींश्च कारयेन्निधनेश्वर
निश्चित्य दिवसात्पूर्वे रात्रौ पूजावसानके १०
विघ्नेश्वरं समभ्यर्च्य संकल्पमिह बुद्धिमान्
पुण्याहं वाचयेत्तत्र स्थण्डिलं कल्पयेत्ततः ११
गोघृतं विंशति प्रस्थं मृत्पात्रे पूरयेत्सुधीः
स्थण्डिलोर्ध्वे तु संस्थाप्य त्र्यम्बकं तद्धटे न्यसेत् १२
पंचबिल्वैस्समभ्यर्च्य पायसं च निवेदयेत्
नववस्त्रेण संछाद्य द्रव्यलिंगमिति स्मृतम् १३
ततो होमं प्रकर्तव्यं वापाताहुतिमाचरेत्
स्नानार्थं गोघृतेनैव तत्प्रमाणमिहोच्यते १४
शतप्रस्थं पदप्रस्थं उत्तमं मध्यमं भवेत्
पंचाशत्प्रस्थसर्पिः स्यात् कन्यसं परिकीर्तितम् १५
अपरेद्युः प्रभाते च स्नानाद्यैस्सकळी कृतम्

देवदेवस्य विज्ञाप्य दिव्यसंपातमारभेत् १६
पाद्यमाचमनार्घ्याय दूर्वा तुळसितण्डुलम्
पंचगव्यं च तद्द्रव्यं पूर्ववद्गृह्य बुद्धिमान् १७
पंचामृतं विधानेन साधयेद्देशिकोत्तमः
स्नानद्रव्याणि सर्वाणि यथालाभं परिग्रहेत् १८
स्नानार्थं नवमं कल्प्य पूर्ववद्द्रव्यसंयुतम्
कान्तोदकेन संस्नाप्य अष्टपुष्पं च साधयेत् १९
शुक्लवस्त्रं सुसूक्ष्मं च गन्धद्रव्यमुशीरकम्
सर्वाभरणसंयुक्तं अर्कपुष्पसमन्वितम् २०
कुंकुमागरुकर्पूरं धूपद्रव्यमिति स्मृतम्
दीपाश्च पदसंख्याः स्युः मन्त्रान्नं पायसं मतम् २१
मृदुव्रीही निवेद्यार्थं तण्डुलं भारसंख्यया
अष्टांशमुद्गसंयुक्तं षोडशांशं घृतं मतम् २२
तत्समं सूपसंयुक्तं गुल्माषं तु कलांशकम्
अष्टांशं व्यंजनं प्रोक्तं नानाविधफलानि च २३
माधूकमिन्धनं प्रोक्तं समिद्बिल्वमिति स्मृतम्
पूर्वद्रव्यसमायुक्तं पूपे क्षीरफलादिकम् २४
तत्तत्संख्यां जपेद्धीमान् उमासूक्तं च भूसुराः
प्रधानभेरिकायुक्तं सर्ववाद्यसमन्वितम् २५
कर्पूरमिश्रपानीयं मुखवासं मुरादिकम्
गान्धारो द्राविडं भाषा नृत्तं वैणवमेव च २६
मट्टताळं पत्रदूर्वे गानं श्रीकामरं तथा
एवं संपाद्य तत्काले पूजाक्रम इहोच्यते २७
यागमण्डपमावेश्य वेद्यूर्ध्वे स्थण्डिलं कुरु
मध्यमे शिवकुम्भं च उत्तरे वर्धनीं न्यसेत् २८
अनन्तादिशिखण्ड्यन्तान् दिग्विदिक्षु यजेत्क्रमात्

सूत्रवेष्टनमारभ्य पूजान्तं पूर्वदिग्भवेत् २९
सौम्ये वेद्यूर्ध्वभागे तु सूत्रन्यासं तु कारयेत्
राशिमण्डलमार्गेण पंचचूर्णैरलंकृतम् ३०
त्रियम्बकाधिदैवत्यं पूजयेद्गुरुमार्गतः
मण्डपं पूजयेद्धीमान् पूर्वोक्तविधिना सह ३१
पूजान्ते द्रव्यलिंगं तु स्वनाम्ना तु समर्चयेत्
अग्निकार्योक्तमार्गेण होमं कुर्याद्विशेषतः ३२
तन्मन्त्रेणैव कर्तव्यं विशेषद्रव्यमाहुतिम्
पूर्णाहुतिं च शिरसा स्नानमण्डपमाविशेत् ३३
गणेशं पूजयेत्पूर्वं संकल्पमिह बुद्धिमान्
पुण्याहं वाचयित्वा तु सूत्रन्यासमतः परम् ३४
दळक्रमेण संस्थाप्य देवद्रव्याणि पूर्ववत्
द्वारं पूर्ववदभ्यर्च्य लिंगशुद्धिं च पूर्ववत् ३५
स्नानद्रव्याणि सर्वाणि स्नानकालेऽभिषेचयेत्
यागमण्डपकुम्भैश्च क्रमेणैवाभिषेचयेत् ३६
पतिमंत्रं जपेद्धीमान् घृतस्नानं तदन्तके
मन्त्रपुष्पं समभ्यर्च्य यागमण्डपमाविशेत् ३७
परिचारकमाहूय सोष्णीषः सोत्तरीयकः
तन्मूर्ध्नि प्रणवं न्यस्त्वा द्रव्यलिंगं वहेत्ततः ३८
स्वस्तिवाचनसंयुक्तं सर्ववाद्यसमाकुलम्
धामप्रदक्षिणं कृत्वा देवाग्रे विन्यसेत्ततः ३९
वाद्यं नृत्तं च गानं च कारयेद्देवसंनिधौ
अष्टपुष्पं समभ्यर्च्य पाद्यादीन्धूपदीपकम् ४०
तद्धृतं कल्पयेल्लिंगं अष्टपुष्पं च धूपकम्
स्नपनं तत्र कुर्वीत तद्वस्त्रं वेष्टयेत्ततः ४१
तद्गन्धं लेपयित्वा तु तत्पुष्पं विन्यसेत्ततः

तद्भूषणैरलंकृत्य तत्पात्रेण समर्चयेत् ४२
तद्द्रव्यैर्धूपदानं च तत्संख्यादीपमाचरेत्
तदन्नं विनिवेद्याथ पानीयं च निवेदयेत् ४३
मुखवासं च तत्काले नित्याग्नियजनं परम्
नित्योत्सवं ततः कुर्याद् धूपं नृत्तान्तमाचरेत् ४४
उपचारांश्च सर्वां श्च पूर्ववत्परिकल्पयेत्
जयमन्त्रं समुच्चार्य कर्ता पुष्पं समर्चयेत् ४५
ततः प्रभृति जप्त्वाथ पुष्यमासमुखेऽपि तु
मंत्राणामर्पणं कृत्वा द्रव्याणामर्पणं शृणु ४६
स्नानं च लेपनं चैव धारणं दर्शनं क्रमात्
किंचिद्भेदविशेषोऽस्ति तदिदं कथ्यते धुना ४७
स्नानं च लेपनं चैव स्नानकाले समर्चयेत्
तत्परं स्नपनं स्नाप्य मन्त्रं पुष्पादि कल्पयेत् ४८
धारणं चान्यसंध्यायां तन्मन्त्रेण विसर्जयेत्
स्नापनं तत्र कुर्वीत चान्यसंध्यां समाचरेत् ४९
सर्वं निवेद्य देवाय तोषयेच्चण्डमूर्तिनम् ५०
इति मार्गशीर्षकमासपूजाविधिपटलः २२

अथ वक्ष्ये विशेषेण पुष्यमासे प्रकीर्तितम्
क्षौद्राधिवासनं पूर्वं शृणुष्व निधनेश्वर १
द्रव्यलिंगं च मधुना षोडशप्रस्थसंयुतम्
पूर्वरात्रे विशेषेण नैवाद्यान्तेऽधिवासयेत् २
गणेशं पूजयेत्पूर्वं संकल्पं च यथाक्रमम्
पुण्याहं वाचयेत्तत्र स्थण्डिलं च यथाक्रमम् ३
क्षाळितं मधु संग्राह्य मृद्धटे पूरयेत्ततः
त्रिपाद्यूर्ध्वे तु संस्थाप्य महादेवं समर्चयेत् ४

करवीरं चार्कपुष्पं पद्मं चैव समर्चयेत्
शुद्धान्नं च निवेद्याथ शुक्लवस्त्रेण वेष्टयेत् ५
द्रव्यलिंगं स्मरेद्विद्वान् संपाताहुतिमाचरेत्
स्नानार्थमुत्तमं वक्ष्ये शतप्रस्थं प्रकीर्तितम् ६
अशीतिप्रस्थं मध्यं स्याच्चतुश्चत्वारि कन्यसम्
एवं त्रिविधमित्यादि मधुसंख्या मम प्रिया ७
अशक्तश्चेद्विशेषेण यथा लाभं सुयोजयेत्
अपरस्मिन्दिने प्राप्ते नित्यस्नानादिकं चरेत् ८
प्रातस्सन्ध्यावसाने तु देवदेवं प्रविश्य च
क्षौद्रपूजां करोम्यद्य त्वत्प्रसादान्महेश्वर ९
एवं विज्ञाप्य तत्काले दिव्यसंपात उच्यते
पाद्यमाचमनं चार्घ्यं चन्दनं बिल्वपत्रकम् १०
अर्घ्यद्रव्यं च सिद्धार्थमाढ्योदकमुदाहृतम्
पंचगव्यं पुरा प्रोक्तं पंचामृतं तथैव च ११
स्नानद्रव्याणि संपाद्य स्नापनं वद मार्गतः
द्रव्यदेवाः पुरा प्रोक्ताश्चाष्टपुष्पं च संगृहेत् १२
सुवर्णं मेघवर्णं च गन्धद्रव्यागरुं तथा
मुक्ताभरणमेवं स्यात् पुन्नागं पुन्नमेव च १३
चन्दनागरुकर्पूरं धूपद्रव्यमिति स्मृतम्
विंशोत्तरशतं दीपं मन्त्रान्नं पायसं भवेत् १४
गुळान्नं च निवेद्याथ शिवत्रयविवर्धनात्
पानीयमेलासंयुक्तं अपूपं च निवेदयेत् १५
षोडशांशगुळे मिश्रं तत्सख्या घृतसंयुतम्
अष्टादशांशं सूपं तु गुल्माषं विंशदंशकम् १६
दशांशं व्यंजनोपेतं मूलकन्दादिसंयुतम्
युगाश्रं कुण्डमेवं च एकांगुलविवृद्धितः १७

इन्धनं वागुळं प्रोक्तं उदुम्बरसमित्ततः
पूर्वद्रव्यसमायुक्तं इक्षुखराडं गुळं तथा १८
नाळिकेरं गुळं चैव सक्तुं पृथुकमेव च
होमद्रव्यमिति ख्यातं तत्संख्याजपमारभेत् १९
भूसुराः स्कन्दसूक्तं च तत्संख्याद्विगुणं जपेत्
सर्ववाद्यसमायुक्तं मर्दळं तु विशेषतः २०
लवंगं शर्करादिस्तु मुखवासं प्रकीर्तिताः
मेघरागं च वैशाखनृत्तं पूर्ववदाचरेत् २१
मल्लिकामोदताळं च वराटिं च तथैव च
दाडिमी पत्रमेवं तु द्रव्यसाधनमाचरेत् २२
यागार्थमराडपं प्राप्य वेद्यूर्ध्वे स्थरिडलं कुरु
पूर्ववत्स्थरिडलं कल्प्य तन्मध्ये शिवकुम्भकम् २३
उत्तरे वर्धनीं स्थाप्य विघ्नेशान्परितो न्यसेत्
सूत्रवेष्टनमारभ्य पूजान्तं पूर्ववन्नयेत् २४
तत्पश्चिमे वेद्यूर्ध्वे सूत्रपात्रं तु कारयेत्
मराडलं नाभितिलकं पञ्चपञ्चैरलंकृतम् २५
विघ्नेश्वरादिदैवत्यं यजेदावाहनादिभिः
मराडपं पूजयेद्धीमान् पूर्वोक्तविधिना सह २६
तद्रलिंगं तदन्ते तु तन्मन्त्रेण समर्चयेत्
कुराडसंस्कारमारभ्य होमयेत्तु विशेषतः २७
तद्द्रव्यं होमयेत्पश्चाद् अष्टोत्तरशतं भवेत्
व्याहृतिं च ततो हुत्वा स्नानमराडपमाविशेत् २८
भूमिशुद्धिं ततः कृत्वा सूत्रन्यासमतः परम्
गणेशं पूजयित्वा तु संकल्पं च यथाक्रमम् २९
पुरायाहं प्रोक्षणं कृत्वा वृत्तं कुर्यात्पदं प्रति
सूत्रवेष्टनमारभ्य कुर्यात्पूजां पुरोक्तवत् ३०

देवद्रव्यं विशेषेण पूर्ववत्पूजयेत्क्रमात्
द्वारादि लिंगशुध्यन्तं पश्चाद्द्रव्याभिषेचनम्  ३१
यागमण्डपकुम्भैश्च अभिषेकं क्रमेण तु
कुम्भैश्च स्नापयेद्धीमान् अयुतं स्नानं तदन्तके  ३२
अष्टपुष्पं समभ्यर्च्य निरोधार्घ्यं ददेद्गुरुः
परिचारकमाहूय अलंकृत्य विशेषतः  ३३
द्रव्यलिंगं समादाय देशिकः प्रणवं न्यसेत्
तस्य मूर्ध्नि न्यसेत्पश्चात् स्वस्ति सूक्तसमन्वितम्  ३४
तद्वाद्यादि समायुक्तं प्रदक्षिणमथाचरेत्
गर्भगेहं ततः प्राप्य देवाग्रे विन्यसेत्ततः  ३५
वाद्यं नृत्तं च गानं च ताळादि शिवसंनिधौ
पुष्पैरभ्यर्च्य विधिवद्धूपदीपं ददेत्क्रमात्  ३६
द्रव्यलिंगेण संस्नाप्य मन्त्रपुष्पं समर्चयेत्
तद्वस्त्रं वेष्टयित्वा तु तद्गन्धं लेपयेत्ततः  ३७
पुष्पमाभरणं पार्श्वं तत्पत्रं सम्यगर्चयेत्
धूपद्रव्यं तदा कुर्यात् तत्संख्यादीपमाचरेत्  ३८
नैवेद्यक्रममार्गेण तदन्नं विनिवेदयेत्
पानीयं मुखवामं च तत्तद्द्रव्यसमन्वितम्  ३९
होमान्तकोपचारान्तं मध्याह्नयजनाश्रितम्
गौळमन्त्रैस्समुच्चार्य मुक्तापुष्पं समर्चयेत्  ४०
तदाप्रभृति जप्त्वा तु मासमासविधिक्रमम्
मन्त्रं समाप्य तत्काले तत्फलं संग्रहेद्बुधः  ४१
द्रव्यं समाप्य चण्डेशं पूर्ववत्परिकल्पयेत्
सायरक्षां समारभ्य निशि पूजा पुरोक्तवत्  ४२
आचार्यं पूजयित्वा तु यथाशक्ति विशेषतः

इति पुष्यमासपूजाविधिपटलः २३

घृतकम्बलपूजा च माघमासे प्रकीर्तिता
सप्तहस्तं समारभ्य त्रयोदशकरान्तकम् १
रोमकम्बलमेवं स्यादुत्तमामध्यमाधमम्
चित्रकम्बलमेवं वा श्वेतकम्बलमेव वा २
कम्बलं लेपयेदाज्यं चतुः प्रस्थविधिक्रमात्
तत्कम्बळद्रव्यलिंगं अधिवासनपूर्वकम् ३
नीलोत्पलं च दान्तं च मल्लिकाजातिमिश्रकम्
अर्चयित्वा क्रमेणैव विरूपाक्षं स्मरन्गुरुः ४
पुष्यमासक्रमेणैव कम्बळं चाधिवासयेत्
पयो दधि घृतं चैव यथालाभं च कल्पयेत् ५
स्नानद्रव्याणि सर्वाणि साधयित्वा क्रमेण तु
प्रातस्सन्ध्यावसाने तु शिवं संप्रार्थयेद्गुरुः ६
द्रव्यसंपादनं पश्चात् पाद्यादि परिकीर्तितम्
तुटितिम्बुलवंगं च पाद्यादिद्रव्यमुच्यते ७
कषायमुदकं चैव कलशाः षोडश स्मृताः
स्नपनं वृत्तमार्गेण स्नानद्रव्याणि पूर्ववत् ८
नित्यपवित्रं चाष्टपुष्पं कल्पयेत्तु विशेषतः
सवस्त्रं धूम्रवर्णं च गन्धं कोष्ठसमन्वितम् ९
वस्त्रमाभरणं प्रोक्तं नन्द्यावर्तं प्रधानकम्
मेघं मांसी मुरं चैव धूपद्रव्यमिति स्मृतम् १०
चत्वारिंशच्छतं दीपं मन्त्रान्नं पायसं भवेत्
शुद्धोदनं निवेद्याथ शिवत्रयविवर्धनात् ११
काश्मीरमिश्रपानीयं सक्तुकं मुखवासकम्
व्यंजनं तु चतुर्थां शं अष्टांशं घृतमेव च १२
दशांशेनैव सूपं तु गुल्माषं तु यथामतम्
नानाविधफलान्येव मूलकन्दादयस्तथा १३

पंचाश्रकुण्डमेवं तु द्व्यंगुलाधिकमानकम्
त्रुडनं कुन्तमेवं स्याद् अश्वत्थसमिदेव च १४
पूर्वद्रव्यसमायुक्तं नाळिकेरादिसक्तुकम्
होमद्रव्यमिति ख्यातं अष्टोत्तरशतं हुनेत् १५
तत्संख्या जपमाप्नोति शुचिवोहं च भूसुराः
सर्ववाद्य समायुक्तं वल्लिका वाद्यमेव च १६
एलालवंगकर्पूरैः मुखवासमिति स्मृतम्
तक्करागं विशेषेण प्रत्यालीढं च नृत्तकम् १७
ताळं श्रीकामतः प्रोक्तं देशागिरि तथैव च
चूतपल्लवपत्रं तु गौरीतिलकमण्डलम् १८
वृषध्वजोऽधिदेवेशो द्रव्यसाधनमेव च
यागशालां प्रविश्याथ वेद्यूर्ध्वे स्थण्डिलं क्रमात् १९
शिवकुम्भं च तन्मध्ये वर्धनीं तस्य वामके
पूर्वाद्यैशानपर्यन्तं विद्येशान्क्रमतो यजेत् २०
तदुत्तरे वा वेद्यूर्ध्वे सूत्रपातं तु कारयेत्
गौरीतिलकमेवं स्यात् सर्ववर्णैरलंकृतम् २१
यदीश्वरां समाराध्य पाद्याद्यैरुपचारकैः
मपं पूजयेत्पूर्वं पूर्वोक्तविधिना सह २२
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत्
तद्द्रव्यं होमयित्वा तु होमसंख्या च पूर्ववत् २३
महाव्याहृतिहोमश्च ततः स्नपनमाचरेत्
विघ्नेशं पूजयित्वा तु संकल्पादि यथाक्रमम् २४
पादमार्गक्रमेणैव लूताकारं च कल्पयेत्
शालिभिः स्थण्डिलं कृत्वा पूर्ववत्परिकल्पयेत् २५
कलशद्रव्यदेवांश्च पूर्ववत्परिकल्पयेत्
मध्याह्नपूजनं मिश्रं कलशस्नानमाचरेत् २६

अष्टपुष्पं च मन्त्रान्नं दापयेत्तु विशेषतः
तत्कम्बलं समादाय प्रदक्षिणमथाचरेत् २७
प्रथमं वस्त्रमाच्छाद्य तद्गन्धं लेपयेत्ततः
तद्भूषणैरलंकृत्य नन्द्यावर्तं च दापयेत् २८
गाननृत्तादयस्सर्वे पूर्ववच्छिवसंनिधौ
घृतकम्बळमाच्छाद्य धूपदीपं च पूर्ववत् २९
नैवेद्यं दापयित्वा तु पानीयं मुखवासकम्
बलिं होमादिकं सर्वं पूर्ववत्परिकल्पयेत् ३०
रहस्यं मन्त्रमुच्चार्य कर्ता पुष्पं समर्चयेत्
तदाप्रभृति जप्त्वाथ फाल्गुनादौ समर्चयेत् ३१
अवतार्य च देवेशात् चण्डेशाय निवेशयेत्
आचार्यपूजां कुर्वीत यथाशक्ति विशेषतः ३२
इति माघमासपूजाविधिपटलः २४

अथ वक्ष्ये विशेषेण फाल्गुने दधिपूर्वकम्
द्रव्यलिंगं च विधिवत् खारिमानं प्रकीर्तितम् १
पूर्वरात्राधिवासं च विघ्नेशं पूजयेत्ततः
संकल्पविधिमार्गेण पुण्याहं वाचयेत्ततः २
तत्संख्यादधिसंग्राह्य मृत्पात्रे पूरयेत्सुधीः
स्थण्डिलोर्ध्वे तु विन्यस्य वृषभं ++ जमर्चयेत् ३
कुटजं मल्लिकां चैव गिरिबेरं समर्चयेत्
कृसरान्नं निवेद्याथ कृष्णवस्त्रेण वेष्टयेत् ४
द्रव्यलिंगमिति ख्यातं संपाताहुतिमाचरेत्
स्नानार्थं दधि संग्राह्य भारद्वयसमानकम् ५
उत्तमादिक्रमात्प्रोक्तं क ++ वा लभ्यते मतः
एवं स्यादधिवासं च द्रव्यसंग्रहणं परम् ६

पाद्यमाचमनं चार्घ्यं जातिकर्पूरवैणवम्
मूलोदकं पंचगव्यं पंचामृतं तथा भवेत् ७
स्नानद्रव्याणि संपाद्य षोडशस्नपनं मतम्
पीतवस्त्रं सुसूक्ष्मं च गन्धद्रव्यं घनं मतम् ८
वस्त्राभरणमेवं तु चाम्बुजं पुष्पमेव च
कर्पूरं बिल्वपत्रं च निर्यासं धूपवस्तुकम् ९
त्रिशतार्धं दीपयुक्तं शुद्धोदनमपूर्वकम्
पूर्ववद्व्यंजनाद्यादि षडश्रं कुण्दमेव च १०
इन्धनं च मकं चैव अपामार्गं समित्ततः
पंचाशद्धोमसंयुक्तं तत्संख्याजपमेव च ११
मौनकुम्भजले चैव पानीयमिदमुत्तमम्
मुखवासं लवंगादि रागं कौशिकमेव च १२
प्रतिसुन्दरनृत्तं च ताळं कोकुलमेव च
चूळागिरि यथा रागं वाद्यं दुन्दुभिरेव च १३
नारंगद्वयपत्रं च मन्त्रं +++ ध्वजं तथा
धूर्धूरं जातिपुष्पं च रक्तमन्दारशंखिनी १४
द्रव्यलिंगाय तत्पूर्वमर्चयित्वा क्रमेण तु
पायसं कन्दमूलं च वैणवं शालिमाषकम् १५
पूर्वद्रव्यसमायुक्तं शेषं पूर्ववदाचरेत्
द्रव्यसंवादमेवं स्यादर्चनक्रममुच्यते १६
प्रातस्संध्यावसाने तु देशिकस्सकळीकृतः
देवदेवस्य विज्ञाप्य यागमण्डपमाविशेत् १७
पूर्वरात्रौ नयेद्धीमान् मध्यवेद्यां शिवं यजेत्
वर्धनीमुत्तरे स्थाप्य विद्येशान्परितो यजेत् १८
पश्चिमे चोत्तरे वापि वेद्यूर्ध्वे सूत्रपातनम्
+द्रमण्डलमार्गेण पंचचूर्णैरलंकृतम् १९

पुनर्मण्डपमाराध्य मण्डलेशं समर्चयेत्
प्रायश्चित्तं ततो हुत्वा वह्नौ बीजं सुयोजयेत्  २०
वह्निमण्डपमावेश्य भूमिशुद्धिं ततः कुरु
सूत्रन्यासमघोरेण विकारदळसंयुतम्  २१
पूर्ववत्कलशास्सर्वा गणेशादि पुरोक्तवत्
पंचगव्यं च संस्थाप्य पंचामृतं च साधयेत्  २२
कषायोदं च संस्थाप्य स्नानद्रव्याणि साधयेत्
द्रव्यसंग्रहमार्गेण द्रव्यसाधनमाचरेत्  २३
द्वारं पूर्ववदभ्यर्च्य लिंगशुद्धिं समाचरेत्
स्नानद्रव्याणि सर्वाणि स्नानकालेऽभिषेचयेत्  २४
यागमण्डपकुम्भैश्च क्रमेणैवाभिषेचयेत्
मूर्तिमन्त्रं जपेद्धीमान् दधिस्नानं समाचरेत्  २५
गन्धतोयेन संस्नाप्य चाष्टपुष्पं समर्चयेत्
यागमण्डपमावेश्य मण्डलेशं सुयोजयेत्  २६
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
तन्मूर्ध्नि प्रणवं न्यस्त्वा तदूर्ध्वे द्रव्यलिंगकम्  २७
स्वस्तिवाचकसंयुक्तं सर्ववाद्यसमन्वितम्
धामप्रदक्षिणं कृत्वा देवाग्रे स्थण्डिलं न्यसेत्  २८
नृत्तं गीतं च वाद्यं च स्तोत्रं कुरु यथेप्सितम्
वादित्रलयसंयुक्तं गणिकानुत्तमाचरेत्  २९
जयशब्दसमायुक्तं सर्वदेवेशसंनिधौ
तत्पाद्यादिसमायुक्तं तद्धूपं च प्रदापयेत्  ३०
तद्दीपं रोपयेद्धीमान् द्रव्यलिंगं च लेपयेत्
स्नानलेपनमेवं तु चाष्टपुष्पं समर्चयेत्  ३१
कृष्णवस्त्रेण संवेष्ट्य गन्धपुष्पैरलंकृतम्
धूपदीपं ददेत्पश्चान् नीराजनभ्रमं नयेत्  ३२

स्नपनं तत्र कुर्वीत मन्त्रान्नं मन्त्रपुष्पकम्
तद्वर्तनं ततः पश्चात् तद्वस्त्रं वेष्टयेद्बुधः  ३३
तद्गन्धं लेपयित्वा तु तत्पुष्पं विन्यसेत्ततः
तद्भक्षणैरलंकृत्य तत्पात्रेण समर्चयेत्  ३४
धूपदीपं तथा कृत्वा तं मन्त्रं समनुस्मरन्
तदन्नं विनिवेद्याथ तत्पानीयं निवेदयेत्  ३५
मुखवासं च तत्काले नित्याग्निं च ततः परम्
नित्योत्संवादिदीपान्तं पूर्ववत्सम्यगाचरेत्  ३६
मृत्युंजयं समुच्चार्य कर्ता पुष्पं समर्चयेत्
तदाप्रभृति जप्त्वाथ चैत्रमासमुखेऽपि च  ३७
मन्त्रार्पणं च कर्तव्यं चण्डपूजामथाचरेत्
माध्याह्नपूजनान्ते तु नित्यवच्चण्डमर्चयेत्  ३८
आचार्यं पूजयेत्पश्चाद् यथाशक्ति विशेषतः  ३९
इति फाल्गुनमासपूजाविधिपटलः  २५

चैत्रमासविधिं वक्ष्ये श्रूयतां निधनेश्वर
यागार्थमण्डपं वापि पूर्वे उक्तविधन्नयेत्  १
निश्चित्य पूर्वरात्रे तु दीपान्ते अधिवासयेत्
लिंगपीठं प्रमाणान्तं पूरयेद्दान्तमेव वा  २
अथवा सर्वपुष्पैश्च तत्समं पूज्यमुच्यते
गणेशं पूजयेत्पूर्वं संकल्पं च ततः परम्  ३
पुण्याहं वाचयित्वा तु पंचगव्यं ततः परम्
मध्यवेदसमायुक्तं पश्चिमे वेदिका मता  ४
वेद्यूर्ध्वे स्थण्डिलं कल्प्य तण्डुलाद्यैरलंकृतम्
कुम्भवर्धनिविघ्नेशान् पूर्ववत्पूजयेत्क्रमात्  ५
मण्डलार्थं च तद्वेद्यां सूत्रपातं च कारयेत्

श्रीकान्ति तिलकं कुर्यान् मृडाकान्तं समर्चयेत् ६
मराडपं पूर्ववत्पूज्य तत्पुष्पं चाधिवासयेत्
भृगेश्वरं समावाह्य पश्चाद्बिल्वैस्समर्चयेत् ७
मृदुवस्त्रेण संछाद्य निरोधार्घ्यं ददेद्गुरुः
सप्ताश्रं कुराडमेवं तु तन्मानं सप्तहस्तकम् ८
अग्निकार्योक्तमार्गेण होमं कुर्याद्विचक्षणः
सप्ताहुतिश्च कर्तव्या अधिवासं समापयेत् ९
अधिवासं समाख्यातं द्रव्यसंपात उच्यते
पाद्यमाचमनं चार्घ्यं सिद्धार्थं त्रिणकुराडकम् १०
गन्धोदकं रक्तवस्त्रं गन्धे मृगमदं भवेत्
गोमेदाभरणं चैव बृहतीपुष्पमेव च ११
गुग्गुळुं घृतमेवं तु धूपद्रव्यमिति स्मृतम्
सप्तत्यूर्ध्वशतं दीपं नैवाद्यार्थं तिलान्नकम् १२
पनसादिफलं चैव चन्दनं रक्तचन्दनम्
वटशाखासमिच्चैव आहुतिः सप्ततिः क्रमात् १३
स्वर्णोदकं च पानीयं यन्त्रमार्गे प्रकल्पयेत्
मुखवासं च कर्पूरं गानं गोलिरिति स्मृतम् १४
भुजंगलळितं नृत्तं लक्ष्मीवर्णं तु ताळकम्
देशागिरी तु गानं च वाद्यं पटह एव च १५
महाद्रोणस्य पत्रं च मृडाकान्तेश्वरं यजेत्
स्कन्दसूक्तं शुचीवोहं गौळामन्त्रमतः परम् १६
पद्ममूलं फलं कन्दं अपूपादि सहैव तु
द्रव्यसंपादनं प्रोक्तं तत्पूजात्वथ कथ्यते १७
गणेशं पूजयेत्पूर्वं संकल्पश्च ततः परम्
पुरायाहं पंचगव्यं च पंचामृतं च पूर्ववत् १८
स्नानद्रव्याणि सर्वाणि साधयित्वा क्रमेण तु

पंचविंशतिमार्गेण स्नपनं तत्र कल्पयेत् १९
तलामार्गेण कर्तव्यं गुरुणोक्तविधानतः
द्वारं पूर्ववदभ्यर्च्य लिंगशुद्धिं च पूर्ववत् २०
स्नानद्रव्याणि सर्वाणि स्नानकालेऽभिषेचयेत्
यागमण्डपकुम्भैश्च क्रमेणैवाभिषेचयेत् २१
खण्डवस्त्रेणसंमृज्य मन्त्रपुष्पं च दापयेत्
मन्त्रान्नं च निवेद्याथ धूपं दत्वा विचक्षणः २२
तद्वस्त्रेणैव संवेष्ट्य तद्गन्धं चैव लेपयेत्
तद्भक्षणैरलंकृत्य यागमण्डपमाविशेत् २३
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
द्रव्यलिंगं समादाय तस्य मूर्ध्नि न्यसेद्गुरुः २४
स्वस्तिवाचकं संयुक्तं छत्रचामरसंयुतम्
सर्ववाद्य समायुक्तं ततो धामप्रदक्षिणम् २५
गर्भगेहं ततः प्राप्य त्रिपाद्युपरि विन्यसेत्
तद्दिनादि समारभ्य देवाग्रे तु नयेत्क्रमात् २६
तं मन्त्रं च स्वनुस्मृत्य द्रव्यलिंगं च योजयेत्
धूपदीपं ददेत्पश्चात् तदन्नं विनिवेदयेत् २७
पानीयं मुखवासं च तत्काले योजयेत्क्रमात्
नित्याग्नियजनं पश्चान्नित्योत्सवमतः परम् २८
उपचाराणि सर्वाणि पूर्वोक्तविधिना सह
पतिमन्त्रमनुस्मृत्य कर्ता पुष्पं समर्चयेत् २९
नैवेद्यादिसुचण्डाय तोषयित्वा विचक्षणः
तद्द्रव्यं चान्यसंध्यायां तन्मन्त्रेण व्यपोह्य च ३०
स्नानं चैवाभिषिच्याथ तन्पूजां च पुरोक्तवत्
आचार्यं पूजयेत्पश्चाद् यथाशक्ति विशेषतः ३१
दान्तपूजाविधिः प्रोक्तो गन्धपूजाविधिं शृणु

## इति चैत्रमासपूजाविधिपटलः २६

अथ वक्ष्ये विशेषेण वैशाखे गन्धपूजनम्
यागशालां प्रविश्याथ प्राग्वत्सर्वं समाचरेत् १
किंचिद्भेदविशेषोऽस्ति चाष्टाश्रं कुण्डमेव च
मण्डलं भद्रतिलकं देवज्ञं सम्यगर्चयेत् २
लिंगस्य पूरणार्थं च द्रव्यलिंगं प्रकल्पयेत्
शतविंशत्यूनशतं षष्ठिसंख्या फलं मतम् ३
यथा लाभं प्रकर्तव्यं गन्धसंख्या प्रकीर्तिता
दशफलं द्रव्यलिंगं स्या गन्धद्रव्यसमन्वितम् ४
दशांशं वाथ भान्वंशं षोडशांशमथापि वा
सर्वद्रव्यं यथा लाभं तदंशो रोचना मता ५
पूर्ववदधिवासं च स्नानद्रव्याणि साधयेत्
शेषं पूर्ववदुद्दिष्टं द्रव्यसंग्रहणं परम् ६
पाद्यमाचमनं चार्घ्यं मुरं कर्पूरकुंकुमम्
बकुळं भंच वस्त्रं तु गन्धोदं चापि रोचनात् ७
गन्धद्रव्यमिति ख्यातं इन्धनं पनसद्रुमः
भूषणं पद्मरागं स्यात्पाटली पुष्पमेव तु ८
++++++++++ धूपद्रव्यमिहोच्यते
गुग्गुलुं लघुकोष्ठं मधुमिश्रं सुपूजितम् ९
पादोत्तरशतं दीपं हरिद्रान्नं निवेदयेत्
कुण्डमष्टाश्रसंयुक्तं इन्धनं पनसद्रुमम् १०
पलाशसमिदाख्याता पंचाशद्धोमसंख्यया
पानीयं हिमतोयं च काश्मीरं मुखवासकम् ११
श्रीमरन्द्रं विडं चैव पद्मावर्तं च नृत्तकम्
मृदंगवाद्यमेवं तु चण्डभिन्ना तु ताळकम् १२

मुखारिगानमेकं तु कुटजं पत्रमेव च
भूसुरो रुद्रसूक्तं च षडध्वं वर्णमेव च  १३
शेषं पूर्ववदुद्दिष्टं अन्यत्सर्वं  सहैव तु
स्नपनादिसमारभ्य चण्डान्तं पूर्ववन्नयेत्  १४
एवं समाप्य विधिवत् नववर्णं  जपेत्तदा
आचार्यपूजां कृत्वाथ भस्मरक्षासमन्वितम्  १५
इति वैशाखपूजाविधिपटलः  २७

ज्येष्ठमासे तु कर्तव्यं फलपूजाविधिं शृणु
पनसाम्रकदळ्यादि सुपक्वं फलमानयेत्  १
श्रीकान्तितिलकं कल्प्य द्रव्याधिवासनं विना
तत्काले अधिवासादि पूर्ववत्परिकल्पयेत्  २
पाद्यमाचमनं चार्घ्यं  मेघं गन्धतिलास्तथा
पुष्पोदकं श्यामवस्त्रं गन्धद्रव्यागरुर्मतः  ३
मुक्ता भूषा द्रोणपुष्पं कृष्णागरु घृतप्लुतम्
धूपद्रव्यमिति ख्यातं द्विशतं दीपमेव च  ४
वेणुतण्डुलनैवेद्यं सुवृत्तं कुण्डमेव च
अश्वत्थमिन्धनं चैव जम्बुजं च प्रकीर्तितम्  ५
होमार्थं  पदसंख्या च होमद्रव्यं फलं मतम्
पानीयं बिल्वतोयं च कस्तूरी मुखवासकम्  ६
तक्करागं दण्डपादं मुरजं वाद्यमेव च
उद्घट्टं ताळमेव स्यात् देशीगानमिति स्मृतम्  ७
शमीपत्रं वामदेवं त्रिवर्णं  मन्त्रमेव च
आत्वाहार्षमित्यादि भूसुरेण जपेत्सह  ८
एवं सर्वं  समापाद्य द्वारपूजादि पूर्ववत्
मन्त्रमेकाक्षरं जप्त्वा शेषं पूर्ववदाचरेत्  ९

## इति ज्येष्ठमासपूजाविधिपटलः २८

अथ वक्ष्ये विशेषेण क्षीरलेपनमुच्यते
पयः पाकेन कम्बलं नवभाण्डं नियोजयेत् १
पूर्ववद्यागशाला च कुण्डवेदीसमन्वितम्
श्रीगन्धं पूर्वकृत्वा तु कुण्डं कल्प्य विशेषतः २
मण्डलं मुष्टितिलकं पंचचूर्णैर्विचित्रयेत्
त्रिहारादिनवभारान्तं लिंगमार्गेण कल्पयेत् ३
द्रव्यलिंगप्रमाणं स्यात् स्नानार्थं क्षीरमुच्यते
सहस्त्रं वा तदर्धं वा तदर्धार्धमथापि वा ४
तत्संख्या च नवया प्रस्थेन प्रतिमितं ध्रुवम्
मान ++ कल्प्य मानं तत्स्वयंभुवि विशेषतः ५
स्नानद्रव्याणि सर्वाणि यथालाभं च कल्पयेत्
मण्डपार्चनमारभ्य त्वधिवासनमारभेत् ६
स्नानान्ते च निवेद्यान्ते दीपान्ते चाधिवासयेत्
तच्छेषं पूर्ववत्कृत्वा संपातं पंचविंशतिः ७
अधिवासमिदं प्रोक्तं द्रव्यसंग्रहणं शृणु
पाद्यमाचमनं चार्घ्यं कुष्ठं चैव लवंगककम् ८
रक्तचन्दनमेवं तु रत्नोदकमिति स्मृतम्
वस्त्रं कपोतवर्णं च चन्द्रचन्दनमेव च ९
प्रवाळाभरणं चैव पुष्पं बकुळमेव च
चन्दनागरुकर्पूरं धूपद्रव्यमिति स्मृतम् १०
पूर्वदीपद्विसंख्या च न्यग्रोधं पत्रमेव च
फलान्नं च निवेद्यं स्यात् इन्धनं खदिरं भवेत् ११
हुतसंख्याष्टोत्तरशतं तत्संख्याजपमेव च
पानीयं हिमतोयं च मुखवासं च चन्दनम् १२

तक्केशीरागमेवं तु नन्द्यावर्तं भुजंगकम्
ताळं शेखरि संयुक्तं पंचबिल्वं च पत्रकम् १३
मन्त्रदेवेशमूर्तिं च पंचपुष्पं च संग्रहेत्
नित्यसंध्यासु संमिश्रं गणेशं पूजयेत्क्रमात् १४
एकोनपंचाशत्स्नपनं कल्पयेत्पूर्ववर्त्मनि
द्वारं संपूज्य विधिवत् लिंगशुद्धिं समाचरेत् १५
स्नानद्रव्याणि सर्वाणि स्नानकालेऽभिषेचयेत्
यागमण्डपकुम्भैश्च स्नापयेत्परमेश्वरम् १६
खण्डवस्त्रेण संपूज्य मन्त्रपुष्पं च दापयेत्
मन्त्रान्नं च निवेद्याथ निरोधार्घ्यं च दापयेत् १७
तद्वह्नाद्यलंकृत्य यागशालां प्रवेशयेत्
द्रव्यलिंगं समादाय प्रदक्षिणमथाचरेत् १८
गर्भगेहं ततः प्राप्य त्रिपाद्युपरि विन्यसेत्
तद्वन्द्यादि समारभ्य तोषयेत्परमेश्वरम् १९
तं मन्त्रं समनुस्मृत्य द्रव्यलिंगं सुयोजयेत्
धूपदीपादिनैवेद्य नित्यहोमादि पूर्ववत् २०
पूर्ववत्पुष्पमभ्यर्च्य तं मन्त्रं समनुस्मरेत्
मध्याह्नयजने काले कुर्याद्द्रव्यावरोहणम् २१
तत्काले स्नापनं कल्प्य संध्याशेषं समाप्य च
चण्डनाथं समभ्यर्च्य तद्द्रव्यं च निवेदयेत् २२
आचार्यं पूजयेत्पश्चाद् यथा वित्तानुसारतः
इति आषाढपूजाविधिपटलः २९

श्रावणे शर्करापूजा सर्वं प्रागुक्तवर्त्मना
विशेषमधुना वक्ष्ये श्रूयतां निधनेश्वर १
मण्डपस्य च कुण्डस्य मानं पूर्ववदुच्यते

मण्डलं पद्मतिलकं पादाधिकमथोच्यते २
पाद्यमाचमनं चार्घ्यं माञ्ची जीरकचन्दनम्
धातूदकं श्यामवस्त्रं गन्धद्रव्यं च कुंकुमम् ३
पुष्यरागं चाभरणं कुरवपुष्पमिति स्मृतम्
धूपद्रव्यं च मेघं स्याद्दीपं तद्द्विगुणं भवेत् ४
तत्संख्या जपमेवं तु यानीयं तु विशेषतः
नीलोत्पलस्य तोयं च त्वगरिर्मुखवासकम् ५
द्राविडं नट्टभाषाश्च भुजंगं नृत्तमेव च
झर्झरी ताळगानं च पत्रं धातकिमेव च ६
वाद्यं दुन्दुभिरेवं स्याद् मन्त्रकालान्तवर्णकम्
इतराण्यपि सर्वाणि पूर्ववत्संग्रहेत्ततः ७
अधिवासं समारभ्य नृत्तान्तं पूर्ववत्क्रमात् ८
इति श्रावणपूजाविधिपटलः ३०

भाद्रमासविधिं वक्ष्ये श्रूयतां निधनेश्वर
मण्डपं पूर्ववत्कल्प्य तत्कुण्डं प्रतिबन्धकम् १
देशिको मण्डलं कृत्वा तिलकं प्रतिसुन्दरम्
अपूपद्रव्यलिंगं च कुरु सद्योधिवासनम् २
पाद्यमाचमनं चार्घ्यं कच्चोलं कुंकुमं तथा
तिलं भूतोदकं चैव रक्तवस्त्रं च कल्पयेत् ३
गन्धद्रव्यं च कस्तूरी वैडूर्यभरणं मतम्
बृहतीकुसुमं धूपद्रव्यं मार्जनमेव च ४
दीपं तद्द्विगुणं प्रोक्तं पत्रमारग्वधं परम्
वेणुतण्डुलनैवेद्यसंयुक्तं पूर्वसंख्यया ५
इन्धनं चार्जुनं चैव द्विशतं होमसंख्यकम्
तत्संख्याजपमित्युक्तं पानीयं मौनकुम्भके ६

मुखवासं च रात्र्यादि रागं कौशिकमेव च
भुजंगलळितं नृत्तं एकताळमिति स्मृतम् ७
पत्रं श्रीपत्रमेवं तु शूलिमन्त्राधिदैवतम्
द्रोणद्वयं च शंखं च लालती पुष्पमेव च ८
द्रव्यलिंगस्य पुष्पं चाप्येकं संगृह्य देशिकः
अधिवासनादि सर्वं च पूर्ववत्परिकल्पयेत् ९
अपूपयजनं प्रोक्तं अन्नपूजाविधिं शृणु १०
इति भाद्रपदमासपूजाविधिपटलः ३१

अन्नपूजाविधिं वक्ष्ये तुलामासे प्रयत्नतः
हेमशालिमहाशालिसौगन्धिकमथोत्तमम् १
तारवत्तण्डुलं ग्राह्य भारादिनवभारकम्
स्थालीपाकक्रमेणैव तण्डुलं पाचयेद्बुधः २
तदन्नं द्विविधं प्रोक्तं तल्लिंगं पूर्ववद्भवेत्
अन्नाभिषेकमेवं तु मानुषेषु विशेषतः ३
केसरिपद्मकुण्डं च सबन्धतिलकं मतम्
पाद्यमाचमनं चार्घ्यं मेघकेसरमेव च ४
सर्षपं लोहमुदकं चित्रवस्त्रं च कल्पयेत्
गन्धद्रव्यं भ्रममतं भूषणं चेन्द्रनीलकम् ५
रक्तमन्दारपुष्पं च कुटजं पत्रमेव च
मधु कुष्ठं गुळं चैव धूपद्रव्यमिति स्मृतम् ६
दीपं पंचशतं चैव तृणतण्डुलमेव च
ममथं चेन्धनं चैव होमसंख्या चतुश्शतम् ७
पानीयं पक्वसलिलं चन्द्रादिमुखवासकम्
राजं कुर्जरिसंयुक्तं वर्धनीनृत्तमेव च ८
ताळं दर्पणमेवं तु पत्रं तु गिरिधातकी

रुद्रमूर्तिमनुं चैव शेषं पूर्ववदेव हि ९
सर्ववाद्यसमायुक्तं सर्वं पूर्ववदाचरेत्
मध्याह्नयजने काले अन्नलिंगं विसर्जयेत् १०
जलमध्ये विनिक्षिप्य तत्कुम्भैरभिषेचयेत्
संध्याशेषं तु विधिवत्प्रार्थयेत्तद्गुरूत्तमः ११
अन्नपूजाविधिः प्रोक्तो दीपपूजाविधिं शृणु
इति तुलामासपूजाविधिपटलः ३२

कृत्तिकादीपपूजां तु वक्ष्येऽहं निधनेश्वर
मण्डपं पूर्ववत्प्रोक्तं कुण्डवेदी समन्वितम् १
पद्मकुण्डसमायुक्तं कल्याणतिलकं मतम्
कुण्डमण्डलमाख्यातं द्रव्यसंपाद उच्यते २
पाद्यमाचमनं चार्घ्यं कुटजं पत्रपूर्वकम्
पत्रोदकं गन्धयुक्तं मिश्रवर्णं च वस्त्रकम् ३
गन्धद्रव्यं मृगमदं भूषणं रत्नमिश्रकम्
श्वेताब्जं शंखपत्रं च धूपद्रव्यमिहोच्यते ४
गुग्गुलं पत्रपुष्पं चाज्यं दीपसंख्यासहस्रकम्
पूर्वसंख्या तु माषान्नं इन्धनं च शिखा ++ ५
होमसंख्या सहस्रं च तत्संख्या जपमुच्यते
पानीयमिति पाकं च मध्वादिमुखवासकम् ६
तक्केश्याम्बलिताळं च मुष्टिबन्धं च नर्तनम्
कालाग्निरुद्रदैवत्यं तन्मन्त्रं समनुस्मरन् ७
शेषं पूर्ववदुद्दिष्टं दीपं चैवाधिवासयेत्
यागशालां प्रविश्याथ सौरादिगुरुमर्चयेत् ८
नवकं तिलकं पूज्य यागेशं च सुपूजयेत्
होमं कृत्वा विधानेन संपातं स ++ तन्नयेत् ९

पंचसप्तनवा दीपान् एकदीपमथाचरेत्
पश्चिमे चोत्तरे चैव स्थरिडलद्वितयं भवेत् १०
मध्ये मनोन्मनीं पूज्य वामाद्यावृतमेव च
सदाशिवादि विद्येशान् विन्यसेत्तु क्रमेण तु ११
सनकादि ऋृषींश्चैव मध्ये सदाशिवं न्यसेत्
मध्ये सदाशिवं चैव चतुर्मुदरुदाहृतम् १२
एकं चेद्रुद्रमभ्यर्च्य क्रमादेवाधिवासनम्
अधिवासमिति ख्यातं संध्याशेषं समापयेत् १३
इति कृत्तिकापूजाविधिपटलः ३३

प्रायश्चित्तविधिं वक्ष्ये सर्वसम्पत्करं नृणाम्
प्रायो विनाशमित्युक्तं सिन्धुरं चित्तमेव च १
कृत्वा संधानकं चैव प्रायश्चैत्तं तथा भवेत्
भवहीने न कर्तव्यं धामहीनं न कारयेत् २
संप्रोक्षणं ततः कृत्वा जपेत्पाशुपतं शतम्
न्यूने च जीर्णिते चैव नन्द्यावर्तस्य लेपि च ३
तत्तद्वर्गे तु संयोज्य पुरा वातोपहीनके
पुनस्संधानकं कृत्वा शान्तिकुंभं तु कारयेत् ४
स्फुटिते खरिडते भिन्ने जीर्णहीनं तु कारयेत्
हर्म्यस्य चलितादास्या पूजायोग्यं तु कारयेत् ५
पादवर्गं तु चांगुल्यं दोषहीनं तु कारयेत्
तद्वर्गसहितं कृत्वा शान्तिं कृत्वा तु होमकम् ६
हीनाधिकं तु यद्वर्गं राजराष्ट्रं विनश्यति
संप्रोक्षणं ततः कृत्वा मूर्तिहोमं समाचरेत् ७
प्रार्थयेत्तु नमस्कृत्य मूर्तिहोमं समाचरेत्
प्रार्थयेत्तु नमस्कृत्य सर्वालंकारसंयुतम् ८

प्रस्तरस्य गळे वर्गद्व्यंगुलं वा ++ हीनके
तद्दोषशमनार्थाय शान्तिकुम्भाभिषेचनम् ९
भवने स्फुटिते चैव जीर्णिते शत्रुवर्धनम्
तत्त + कमनुस्मृत्य पुण्याहं वाचयेत्ततः १०
स्थूपीं प्रधानतूलस्य पिप्पली कोटरे तथा
चलिते वर्गहीने च राजराष्ट्रविनाशनम् ११
नवमन्यं परिग्राह्य पूर्वोक्तलक्षणान्वितम्
संप्रोक्षणं ततः कृत्वा शान्तिहोमेन शाम्यति १२
शिवमंत्रं सहस्रार्धं जपेत्पाशुपतं स्मृतम्
ध्वजदण्डस्य हीने च रोगशोकभयावहम् १३
पुनस्संस्कारकं कृत्वा शान्तिकुभाभिषेचनम्
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमार्गतः १४
प्लक्षो पश्चिमभागेन नाशिते शत्रुपीडिते
श्रामश्रीत्वन्यथा चैव शान्तिं कृत्वा विशेषतः १५
गर्भगेहे प्रविष्टे च स्पृष्टे लिंगानुकौतुकम्
तद्दोषशमनार्थाय पुण्याहं वाचयेद्बुधः १६
क्षीराभिषेकं कर्तव्यं मूर्तिं कृत्वा तु होमकम्
संप्रोक्षणं ततः कृत्वा पुनस्सन्धानमाचरेत् १७
सिंहासनं च हीने च राजराष्ट्रभयावहम्
संप्रोक्षणं ततः कृत्वा शान्तिकुम्भाभिषेचनम् १८
दीपदण्डविहीने च शोकदुःखभयावहम्
तत्काले दीपदण्डं स्यात्पुण्याहं वाचयेत्ततः १९
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
पलाशसमिधा चैव ईशानेन तु मन्त्रतः २०
कवचेन चरुं हुत्वा सर्षपं पुरुषेण तु
अघोरेण तिलं हुत्वा क्रमेणैव तु होमयेत् २१

पूर्णाहुतिं च शिरसा स्विष्टमग्नेति मंत्रतः
पुनर्दीपं समादाय मूलमन्त्रेण योजयेत् २२
पूर्वोक्तलक्षणैर्युक्तं दीपदण्डं समाचरेत्
अधिवासादि यत्सर्वं सर्वकर्मेण योजयेत् २३
केशरोमनखादींश्च जटामकुटनेत्रकम्
शिरते भूषणैर्युक्तं उपांगं वा विशेषतः २४
पूर्ववत्संधयेत्पश्चात् शान्तिकुम्भं समाचरेत्
पादुकाचैवमादीनि भूषणं चेन्दुशेखरे २५
छन्नवीराभरणं शंखं मूलं तथैव च
कह्लारमक्षमालानि पाशशस्त्रयुतान्यपि २६
पीठं च कर्णभूषं च प्रत्येकं च विहीनकम्
नृपस्य मरणं शीघ्रं दुर्भिक्षं जायते भुवि २७
राजवाहनहीने च चतुरंगविहीनके
शेषाण्यलंकृतानां च नाशनं भवति ध्रुवम् २८
पुनस्सन्धानकं कृत्वा संप्रोक्षणमथाचरेत्
पानकाले तथा वापि नाशिते पतिते भुवि २९
तद्ग्रामवासिनां चैव शोकदुःखभयावहम्
तद्दोषशमनार्थाय पुण्याहं वाचयेद्बुधः ३०
संप्रोक्षणं ततः कृत्वा शान्तिहोमं समाचरेत्
स्तम्भभूषणहीने च राजा मरणमाप्नुयात् ३१
पुण्याहं च ततः कृत्वा संप्रोक्षणमथाचरेत्
परियष्टिविहीने च भूपतेर्दुर्जयो भवेत् ३२
तद्दोषशमनार्थाय पुण्याहं तु तथा भवेत्
संप्रोक्षणं ततः कृत्वा शान्तिकुम्भाभिषेचनम् ३३
तत्तन्मन्त्रशतं जप्त्वा परिवेषं तथा भवेत्
ताम्बूलापूपनैवेद्यं धूपदीपं च हीनकम् ३४

संप्रोक्षणं ततः कृत्वा शान्तिहोमेन शाम्यति
पुनस्सन्धानकं कृत्वा पूर्वोक्तैर्लक्षणैर्युतम् ३५
नीराजनविहीने च दासीदासविनाशनम्
संप्रोक्षणं ततः कृत्वा पुनस्सन्धानमाचरेत् ३६
नृत्तहीने च कर्तव्यं राजदुःखभयावहम्
तद्दोषशमनार्थाय मूर्तिहोमं तु कारयेत् ३७
भेरिका घोषहीनं चेद् लोकदुःखस्य वर्धनम्
पुनस्सन्धानकं कृत्वा शिवमन्त्रं शतं जपेत् ३८
बलिदीपविहीने तु रोगशोकभयावहम्
तद्दोषशमनार्थाय दिशाहोमं तु कारयेत् ३९
प्राकारे गोपुरे चैव वल्मीके तु समुत्थिते
तद्दोषशमनार्थाय अवटं खानयेत्ततः ४०
मूर्तिहोमं ततः कृत्वा संप्रोक्षणमथाचरेत्
अथवा लिंगपीठे तु वल्मीके तु समुत्थिते ४१
ग्रामश्रीस्त्वन्यथा चैव राजा दुर्जयमाप्नुयात्
तद्दोषशमनार्थाय दिशाहोममिति स्मृतम् ४२
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिधाघारचरुणा ब्रह्मकूर्चं विना चरेत् ४३
अष्टबन्धनहीने तु सर्वलोकजलक्षयम्
राजराष्ट्रविनाशं तु रोगशोकभयावहम् ४४
शान्तिहोमं ततः कृत्वा अष्टबन्धनमाचरेत्
भवनं चाग्निदण्डं च तल्लिंगं योजयेद्बुधः ४५
माषं माषत्रियं चैव तिलं तिलत्रयं तथा
दृष्टवद्दर्शयेत्कृत्वा पूजाकार्यन्नदो भवात् ४६
सद्येन शान्तिकुम्भं तु तिथिवारं विना चरेत्
शैलजं चैव कर्तव्यं लोहजं तु विशेषतः ४७

कर्णौ शिरसि बाहू च गरडू च कोर्परं तथा
कटिजंघे महांगानि कर्णौ चैव तु कारयेत् ४८
राजराष्ट्रविनाशं च पुनस्सन्धानमाचरेत्
मूलमन्त्रं शतं जप्त्वा शिवमंत्रं शतं जपेत् ४९
यानकाले तथा कृत्वा प्रतिमासं भवेदिह
नृपस्य मरणं शीघ्रं दुर्भिक्षं जायते यदि ५०
स्नपनं शान्तिहोमं च जपेत्पाशुपतं शतम्
परिवारांगवैकल्ये पुनस्सन्धानमाचरेत् ५१
विष्ठा च प्रस्तवोद्वारवक्त्रमण्डपमाविशेत्
वारयेत्ताळमात्रं तु सद्यः पुण्याहमाचरेत् ५२
गर्भगेहे च लिंगे च कल्पवल्लीकमुद्धरेत्
तद्ग्रामवासिनः सर्वे शोकदुःखभयावहम् ५३
तस्य लिंगस्य कर्तव्यं उष्णोदैरभिषेचनम्
अन्तर्मण्डलकारं च नराणां रुधिरं विशेत् ५४
अवटं खानयित्वा तु पुण्याहं प्रोक्षणं कुरु
पचनालये निवेशश्च नारीणां तु भयं भवेत् ५५
व्यपोह्यांगारकान्सर्वान् पश्चात्संधानमाचरेत्
शिलायां तु शिलाघर्षे गुष्टका च तथा भवेत् ५६
द्वितीयावरणे विष्ठा संमार्जनं च लेपयेत्
तद्दोषशमनार्थं तु पुण्याहं तस्य वाचयेत् ५७
चोरैर्वा अग्निदग्धे वा शान्तिकुम्भाभिषेचनम्
अथवा भद्रपीठांश्च नराणां स्नावमाचरेत् ५८
तद्दृष्ट्वा भूतवेताळपिशाचा ब्रह्मराक्षसाः
एताश्च देवतास्सर्वे आश्रयन्ति न संशयः ५९
राजराष्ट्रभयं चैव भूपतिस्त्वन्यदेशिकः
खानयेत्तत्र कुर्वीत बिल्वपत्रेण चार्चयेत् ६०

पुरयाहं गव्यसेचं च मूलमन्त्रं शतं जपेत्
बलिदीपविहीने तु शिवमन्त्रशतं जपेत् ६१
भेरीकाघोषहीने तु अर्चयेन्मरणं ध्रुवम्
मूर्तिहोमं च कर्तव्यं जपेत्पाशुपतं शतम् ६२
एकसंधिविहीने च अन्यसंधिफलद्वयम्
स्तम्भभूषणहीने च धनधान्यविहीनके ६३
शान्तिहोमं शतं जप्वा पुनर्भूषणमाचरेत्
कपोताण्डे मृते जाते वाहनानां क्षयं भवेत् ६४
पाशुपतं सहस्रं च तदर्थं मूलमन्त्रकम्
लिंगपीठस्य मध्ये तु स्थलरन्ध्रविहीनके ६५
क्षीरधाराभिषेकं तु जलधाराभिषेचयेत्
स्नपनं तत्र कुर्वीत शीतकुम्भं च कारयेत् ६६
ध्वजदण्डस्य विच्छिन्ने मालाबोधिकमालिके
स्थलकर्मविहीनं तु धामहीनं न कारयेत् ६७
आरोप्यमन्यकाले तु धान्यानां बन्धनक्षयम्
पुण्याहं प्रोक्षणं कृत्वा पंचामृताभिषेचयेत् ६८
स्थलशुद्धिक्रमेणैव लिंगशुद्धिं तु पूर्ववत्
आस्थानमण्डपाहीने कर्षणालं कृते तथा ६९
ग्रामश्रीस्त्वन्यथा चैव धामश्रीस्त्वन्यथा भवेत्
तद्दोषशमनार्थाय मूर्तिहोमं समाचरेत् ७०
पुनस्संधानकं कृत्वा पुनर्भूषणमाचरेत्
संप्रोक्षणं ततः कृत्वा शान्तिहोमेन शाम्यति ७१
शिखरे वर्गहीने तु संप्रोक्षणमथाचरेत्
सुरा च विष्ठा मूत्रं च उद्गारं तु तथा भवेत् ७२
मन्दिरे गर्भगेहे च प्रतिमामण्डपे तथा
स्पर्शिते चैव कर्तव्यं राजा मरणमाप्नुयात् ७३

तद्दोषशमनार्थाय सप्ताहं धारयेत्क्रमात्
कृककुं चेरकं चैव पूर्ववत्परिकल्पयेत्  ७४
भोगांगमराडपं चैव जीर्ण ++++ संभवे
नृपस्य मरणं शीघ्रमुष्णारोगेन संभवेत्  ७५
तद्दोषशमनार्थाय संमार्जनं च लेपयेत्
पुनस्सन्धानकं कृत्वा संप्रोक्षणमथाचरेत्  ७६
एवं यः कुरुते मर्त्यः प्रायश्चित्तं समाचरेत्
इहैव धनवान्छ्रीमान् सोन्ते च मोक्षमाप्नुयात्  ७७
इति स्वायंभुवे प्रतिष्ठातन्त्रे सर्वप्रायश्चित्तविधिपटलः  ३४

जीर्णोद्धारविधिं वक्ष्ये शृणुष्वैकमनाधुना
लिंगस्य प्रतिमासं च पिरिडकायास्तथैव च  १
विमानस्य च जीर्णस्य नवीकरणकर्म च
परिवारालयस्यैव भक्तानां च विशेषतः  २
अन्येषामपि जीर्णानां बिल्वार्चाविष्टरादिषु
+++ चोत्तरतरैः नाशिते मरुताग्निना  ३
एवमादिविशीर्णे तु देवता न वसन्ति हि
जीर्णमुत्सृज्य विधिवत् तिष्ठन्त्यब्दत्रयावधि  ४
गतं गतं च कृत्वा तु स्थानं दादित्यमराडलम्
आमिषग्रहणार्थाय चरतैतियु पक्षिवत्  ५
तत्रत्यं यजमानश्च स्थानिनो मन्त्रवित्तमान्
मद्भक्तान्वीतरागांश्च सदा कांक्षन्ति देवताः  ६
ततोऽर्कं  मराडलं प्राप्य शपन्त्येता न संशयः
ततो जीर्णानि वस्त्राणि वेताळा ब्रह्मराक्षसाः  ७
कूष्माराडाश्च पिशाचाश्च आश्रयन्ति न संशयः
तस्माच्छीघ्रं प्रकर्तव्यं नवी करणकर्म च  ८

मूलालयप्रमाणेन कर्तव्यं तरुणालयम्
अर्धं वाथ त्रिभागं वा तरुणोक्तविधानतः ९
मूलालये यथाद्वारं प्रतिद्वारं विशेषतः
बालालयस्य द्वारं स्यात् पूर्ववत्पूजनं नव १०
चतुर्द्वारार्चने यत्तु यथा द्वारादिपूजनम्
प्रतीच्यां च यथा द्वारं त्रिशं पूर्ववत्स्मरेत् ११
तस्मात्सर्वप्रयत्नेन नित्यपूजादिपूजनम्
ततो मूलालयं प्राप्य सर्वमेव क्रमेण तु १२
एवं बालालयं प्रोक्तं बाललिंगस्य कथ्यते
यथाश्लोक्तवृक्षेण बाललिंगं प्रकल्पयेत् १३
मूललिंगस्य पूजांशे त्रिभागैताथ निर्मितम्
तं नाहं सममेवं स्यात् सुवृतं सूत्रवर्जितम् १४
तस्मिन्नवास्य देवेश दारुलिंगेऽथ लोहजे
घटचित्रपटे वापि दर्पणादो यथाविधि १५
कपे किंचिद्विशेषोऽस्ति सप्ताहमुत्तमं स्मृतम्
पक्षांशं मध्यमं प्रोक्तं मांसकन्यसमुच्यते १६
नित्यं नवजलं लोज्य पूजयेत्तु विचक्षणः
संनिवेद्याथ देवेशं सायुधं च सवाहनम् १७
आवृतीशान्परीवारांस्तथा तत्रैव योजयेत्
विमानस्थस्तथा देवांस्तद्विमाते नियोजयेत् १८
प्रतिष्ठादीनि सर्वाणि बाह्यस्थानोक्तवन्न्यसेत्
यात्राहोमादिकं सर्वं तत्तद्युक्त्या निवेशयेत् १९
तदालये तु कर्तव्यं पूजा नित्यं प्रयत्नतः
यावन्न विकृतं लिंगं प्रासादाद्यं यथाविधि २०
तावत्पूजादिकं सर्वं कारयेत्तरुणालये
कर्मसादाख्य हीनं तु अर्धमाषविहीनकम् २१

ब्रह्मभागे चतुर्माषं विष्णुभागे त्रिमाषकम्
एवं हीनं गृहीत्वा तु तदूर्ध्वेन प्रशस्यते २२
बाललिंगे समायोज्य नवीकरणकर्म च
गाणवे तु विशेषेण माषादिदशतान्तकम् २३
हीनं चेत्तु गृहीत्वा तु तदूर्ध्वं न विचारतः
पूर्वमेव क्रमेणैव नवीकरणमेव च २४
दैविके तु विशेषेण माषादिद्विदशान्तकम्
एवं हीनं गृहीतव्यं तदूर्ध्वं न प्रशस्यते २५
आर्षे तु च विशेषेण अंगुलादित्रियंगुलम्
एवं हीनं गृहीत्वा तु तदूर्ध्वं तु विशेषतः २६
गाणवे दैविके चैव आर्षेष संप्रकल्पयेत्
पूर्वस्थाने खनित्वा तु तल्लिंगं च निधापयेत् २७
अथवा भिन्ने च स्फोटने चैव छिन्ने चैवाग्निदग्धके
एवं न्यस्त्वा विशेषेण तत्समानं प्रगृह्यताम् २८
भुक्तिमुक्तिप्रदं चैव मानवस्थापनं क्रमात्
मानुषादिषु लिंगेषु पठेष्वेव समाचरेत् २९
दृष्ट्वाथ ++ क्षयं लिंगं कृत्वा लिंगं पुरोक्तवत्
यथा लिंगं तथा पीठे योजयेत्तु विचक्षणः ३०
कृत्वा लिंगं क्षयं पीठं तत्क्रमेणैव बुद्धिमान्
स्वायंभुवे विशेषेण जीर्णोच्छिन्नं च संग्रहः ३१
छिन्नं चेत्पट्टबन्धं च संप्रोक्षणमथाचरेत्
शिवं सादाख्यकर्तव्यं मूलसंकोचमाचरेत् ३२
अन्यसादाख्यकर्तव्यं बालसंकोचमाचरेत्
स्थूपाद्यवयवच्छेदे एकांगुलं च संभरेत् ३३
तदूर्ध्वं न प्रशस्तं स्याद्द्व्यंगुलं पद्महीनकम्
तदूर्ध्वं नेषदेवं स्याद् महानासी त्रयांगुलम् ३४

तत ऊर्ध्वं न कर्तव्यं शिखरे देशांगुलं भवेत्
पश्चात्तेषु न कर्तव्यं कर्णे तु त्र्यंगुलं भवेत् ३५
वाहनादीनि कर्तव्यं द्व्यंगुलं संमतं भवेत्
शक्तिध्वजमिदं प्रोक्तं एवमेवं च संग्रहेत् ३६
होमादिप्रस्तरान्तं च सप्तांगुलसमाविधि
एवं गृहीत्वा तु कर्तव्यं मूर्धन्यस्त्वा प्रयत्नतः ३७
प्राकारं परिवारं च यथायोग्यं प्रयत्नतः
बालहर्म्याणि हर्म्याणां प्रतिमां बाललिंगकम् ३८
अल्पनासी च शालां च कपोतं कूटपंजरम्
विष्टरं बलिपीठं च यद्द्रव्येण तु तत्तथा ३९
देवांश्च तद्विमानस्थान् पीठाग्रे वा नियोजयेत्
दैविके मानुषे वापि पदे संयोजयेत्सुधीः ४०
पैशाचेऽपि न कर्तव्यं मण्डपस्यान्तराकृते
अष्टदिक्षु च कर्तव्यं भद्रपीठे यथा पुनः ४१
धिष्ण्यं विमानसंकल्प्य तस्मिन्नाविश्य रक्षयेत्
यात्राहोमादिकं सर्वं गुरुणोक्तविधानतः ४२
कुम्भादिके समादाय तस्मिन्धिष्ण्ये नियोजयेत्
पीठाग्रे वाथ लिंगे वा यथा गुप्तिर्यथा रुचिः ४३
विमानस्थापनं काले यथापूर्वं नियोजयेत्
मानुषादिषु लिंगेषु विमानेष्वेवमाचरेत् ४४
सकळादिषु जीर्णेषु कुम्भे वा मण्डलादिके
षोडशप्रतिमादीनि दारुलिंगे सुयोजयेत् ४५
मानुषादिषु ++++ सकले वाथ योजयेत्
एवमुद्धारणं प्रोक्तं शेषं पूर्ववदाचरेत् ४६
मूलालयप्रवेशान्ते दारुलिंगं च दाहयेत्
अथवा सद्य एवं तु जले वापि स्थलेऽपि वा ४७

विज्ञाप्य विधिवद्देवं प्रभूतहविषं ददेत्
व्योमव्यापि विधानेन पंचब्रह्मषडंगकैः ४८
पूजयित्वा तु देवेशं षडध्वन्यासमार्गतः
तत्संभ्रन्ति तथा कुर्याद् रक्षाबलिमथाचरेत् ४९
प्रवेशबलिमार्गेण बलिं सम्यक्समाचरेत्
एवमादीनि कार्याणि तत्तत्काले समाचरेत् ५०
अकृतं चेन्निहन्त्याशु तत्रस्थं मानुषं ध्रुवम्
शान्तिहोमं दिशाहोमं राक्षोघ्नं च तथैव च ५१
कृत्वा संभोजयेद्विप्रान् मद्भक्तांश्च प्रपूजयेत्
वेदाध्ययनसंयुक्तं विशेषात्पंचशान्तिकम् ५२
दक्षिणां तु गुरोर्दत्वा यथाशक्ति विशेषतः
अष्टबन्धनकर्मे तु कलास्थलनवीकृता ५३
पक्षाहं सप्तभागर्वा मासं कुम्भे तु पूजयेत्
तदूर्ध्वं शेषमित्युक्तं त्रिदिनैकदिनेऽपि वा ५४
सप्तनज्यवसानैर्वा पुनर्यजनमाचरेत्
स्नपनं शान्तिहोमं च प्रोक्षणं च यथाविधि ५५
अथवान्यप्रकारेण ग्रहार्चादिषु कथ्यते
बाललिंगादिलिंगेषु पीठे जीर्णे तथैव च ५६
आत्मन्युद्वास्य विधिवत् कुम्भादौ वा यथा विधि
शकलानि परित्यज्य यथा स्वर्णेन कारयेत् ५७
रजतेनाथ ताम्रेण शिलया दारुणाथवा
यथा पूर्वं तु संस्थाप्य यथा पूर्वं नियोजयेत् ५८
अष्टबन्धविहीने तु बाणलिंगे विशेषतः
स्वर्णेन रजतेनैव अष्टबन्धं तु कारयेत् ५९
कुम्भादौ पूर्ववद्योज्य कर्मान्ते योजयेच्छिवम्
स्नपनं शान्तिहोमं च प्रायश्चित्तास्त्र जापकम् ६०

प्रभूतहविषं चैव कृत्वा संकोचयेच्छिवम्
सकळं पूर्ववत्कुर्यात् अनेन विधिना सुधीः ६१
चित्रे चित्राब्जके वापि कुम्भादौ विनिवेश्य च
शान्तिहोमादिकं कृत्वा वर्णशुद्धिमथाचरेत् ६२
संप्रोक्षणादिकं कृत्वा पूर्ववत्पूजयेद्बुधः
बलिपीठादिके वापि ध्वजदण्डादिकेऽपि वा ६३
प्राकारादिविशीर्णे तु एवमेवं समाचरेत्
जपं विशेषतः कृत्वा चास्त्रमन्त्रैरतन्द्रितः ६४
पुनस्संस्थापनं कुर्यात् तत्प्रमाणवशेन तु
तद्द्रव्येण विशिष्टेन प्रमाणेनाधिकेन वा ६५
तस्माद्धीनं न कर्तव्यं येन केन प्रकारतः
अंगोपांगविहीने तु प्रत्यंगानि विशीर्णिते ६६
शिरो वक्त्रं च हृदयं गळं चेति प्रकीर्तितम्
कक्षौ कर्णौ स्तनौ बाहू नाभिगुह्योदरस्तथा ६७
ऊरूजानुद्वयं चैव पृष्ठं चेति प्रकीर्तितम्
नेत्रनासाग्रकर्णौ च पाणिपादतलांगुलि ६८
जटामकुटयुक्तं च सांगं चेति प्रकीर्तितम्
वस्त्रोपवीतमाला च कुर्यादाभरणं तथा ६९
गंगाचन्द्रमपस्मारं नागकूर्मं तथैव च
पद्मपीठं प्रभा चैव आसनादि क्रमेण तु ७०
शिलादिं मृण्मयं चैवोपांगमिति प्रकीर्तितम्
मृण्मयं दारुजं वापि लोहजं वा शिलामयम् ७१
स्थापितं पूजितं बेरं जीर्णं वा हीनमेव च
छिन्नं वाप्यग्निदग्धं वा घ्राणं सुषिरमेव वा ७२
भ्रूरेखा पक्ष्मरेखा च आस्यरेखा च रासिका
एवमे संक्षयं दृष्ट्वा प्रतिमां तु विशेषतः ७३

मृण्मये पूर्णहीनं चेद् पुनः कृत्वा समारभेत्
छिन्नं भिन्नं हि न ग्राह्यं जीर्णं चेत्तु नवीकृतम् ७४
प्रतिमा शूलहीनं चेत् जीर्णोद्धारं तु कारयेत्
दारुजं बेरमाख्यातं तत्तदंगेषु हीनकम् ७५
तन्धुने तत्तदंगे च तद्बिम्बं परिवर्जयेत्
पादपेन यथा कुर्याद् पूर्ववद्रूपमाचरेत् ७६
पुनः संस्थापनं चैव लक्षणोक्तक्रमेण तु
लोहजे तु तथा वापि किंचिद्भेदं विशेषतः ७७
उत्तमांगविहीने तु त्यक्त्वा बिम्बं प्रयत्नतः
तद्द्रव्यं च समादाय तत्प्रमाणैव बुद्धिमान् ७८
तद्रूपं च यथा कुर्यात् स्थापयेच्च नवं पुनः
मानोत्कृष्टं प्रकर्तव्यं मानहीनं न कारयेत् ७९
उपांगं च तथा दृष्ट्वा शुचिलोहं जपेद्बुधः
दिनत्रयादि मासान्तं पुनस्सन्धानमाचरेत् ८०
परोक्तक्रमेणैव स्थापनं सम्यगाचरेत्
प्रत्यंगं च तथा दृष्ट्वा पुनस्संधानमाचरेत् ८१
शिवबीजं स्मरेन्नित्यं मासान्तं क्रमशः कुरु
शिलायां वाथ रूपं तु तत्तद्धीनं तु संभवेत् ८२
पूर्ववद्बिम्बमुद्धृत्य बिम्बमध्ये निवेदयेत्
शिलामन्यां गृहीत्वे त्थं शिलाग्रहणमार्गतः ८३
स्थापयित्वा विशेषेण पूर्ववत्कारयेद्बुधः
अथवान्यप्रकारेण हीनं चेत्तु विशेषतः ८४
माषादि पंचमाषान्तं हीनमेवं न विद्यते
शिलारूपेण कर्तव्यं शिलायां योजयेत्सुधीः ८५
मृण्मयं दारुजं वापि पूर्वमेव क्रमेण तु
एतत्सर्वं च कर्तव्यं ततः स्थापनवत्कुरु ८६

इहैव पुत्रवाञ्छ्रीमान् सोऽन्ते सायुज्यमाप्नुयात् ८७
इति स्वायंभुवे संकोचविधिपटलः ३५

अथ वक्ष्ये विशेषेणारुणपूजाविधिक्रमम्
कुरूपविकाराद्यानां देवैयुद्धं पुनर्वर्तते १
तत्र देवाश्च संत्रस्ता विष्णुमूर्तिमुपाश्रिताः
अशक्ता विष्णुना चापि शिवमूर्तिं समाश्रिताः २
देवदेव नमस्तुभ्यं विश्वरूपाय ते नमः
इति विज्ञाप्य सर्वे ते तुष्टुवुः शिवमादरात् ३
दक्षिणान्ते प्रभाते च तत्काले परमेश्वरम्
सांगुदेवसमं पूज्य त्यैनासाक्षादीन्प्रताडयेत् ४
असुराणां क्षयं दृष्ट्वा अच्युतप्रमुखाः सुराः
प्रभोराज्ञां समासाद्य लोकरक्षार्थमादरात् ५
संधिद्वययथाकामिं तत्काले शिवमर्चयेत्
सर्वदेवाश्च संपूताः पूजयन्तः शिवं विभुम् ६
तस्मात्सर्वप्रयत्नेनारुणपूजां समाचरेत्
तत्पूजा द्विविधा ज्ञेया नित्यां नैमित्तिकेति च ७
अब्दं प्रतिविशेषेण मार्गशीर्षे च मासके
नित्यं नैमित्तिकं चैव तत्पूजाविधिरुच्यते ८
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिका
पूजाकालस्तु विज्ञेयः तत्काले शिवमर्चयेत् ९
निवेद्यार्थं शिवस्येह तण्डुलानां विधिं शृणु
द्रोणद्वयं समारभ्य द्रोणद्रोणविवर्धनात् १०
त्रिभारान्तं यथा योग्यं उत्तमं मध्यमाधमम्
व्यंजनं तु चतुर्थां शं तत्समं फलमुच्यते ११
अष्टांशं च घृतं प्रोक्तं सूपं तत्सममुच्यते

पयो मधु गुळं चैव यथा वित्तानुसारतः  १२
अष्टांशार्धार्धभागं वा मुद्गमेवं प्रकल्पयेत्
नन्द्यावर्तं च दान्तं च गन्धादीन्संग्रहेत्ततः  १३
पूजोपकरणं यद्यत् सर्वं संपाद्य यत्नतः
भोगांगनिलयं गत्वा द्वारदेवान्समर्चयेत्  १४
शीघ्रं नीत्वा कपाटं च प्रविश्यान्तस्तु देशिकः
देवदेवं नमस्कृत्य विज्ञापनमथाचरेत्  १५
देवस्य चाज्ञया चैवारुणपूजां समाचरेत्
नित्यस्नानादिकं कृत्वा सकळीकृतविग्रहः  १६
गणेशं पूजयित्वा तु स्नानद्रव्याणि साधयेत्
द्वारपूजां ततः कृत्वा लिंगशुद्धिं समाचरेत्  १७
स्नानद्रव्यादिभिस्सर्वैः स्नानकालेऽभिषेचयेत्
तदन्ते मंत्रपुष्पं च गौळामन्त्रेण दापयेत्  १८
प्रथमस्य द्वितीयं च चन्द्रमेकं निवेशयेत्
चतुर्थस्वरसंयुक्तं सप्तमादिद्वितीयकम्  १९
पंचमात्पंचमं चैव तच्चतुर्थमुदाहृतम्
सप्तमस्य त्रयं वापि द्वितीयप्रथमं भवेत्  २०
चतुर्थस्य द्वितीयं तु पंचमप्रथमान्तकम्
सप्तमाद्यं समायोज्य गौळामन्त्रमितीरिता  २१
चतुश्चत्वारिंशित्संख्यैः मन्त्रपुष्पं च दापयेत्
मन्त्रांश्च दापयेच्छंभोः मन्त्रेणैव तु बुद्धिमान्  २२
वस्त्रादिभिरलंकृत्य स्थलशुद्धिं ततः कुरु
पश्चात् त्रिपादीन्यस्य पंचसप्तनवान्तकम्  २३
सर्वालंकारसंयुक्तं पात्रमन्नेन पूरयेत्
तन्मध्यमेऽवटं कल्प्य पयः शुष्केन पूजयेत्  २४
अन्यानि रसवस्तूनि मध्वाद्यानि विनिक्षिपेत्

अहमस्मीति मंत्रं च भूसुरैस्सहितो यजेत् २५
देशिको दापयित्वा तु कूष्माण्डैरेव बुद्धिमान्
परिवारामरादीनां पूर्वोक्तविधिना सह २६
निवेद्यैवं विसृज्याथ स्थलशुद्धिं समाचरेत्
ताम्बूलं च निवेद्याथ धूपदीपं ददेद्गुरुः २७
मुखवासं ददेत्पश्चाद् दर्पणादीनि दर्शयेत्
दान्तं च नन्द्यावर्तं चाप्यरविन्दं च मिश्रितम् २८
एकपात्रे समापूर्य तत्काले शिवमर्चयेत्
श्रीकण्ठाय नमस्तुभ्यं गंगाधर नमो नमः २९
पिनाकिने नमस्तुभ्यं शूलपाणे नमो नमः
कपालिने नमस्तुभ्यं विश्वरूप नमो नमः ३०
जगत्कर्त्रे नमस्तुभ्यं लोकसाक्षिन्नमो नमः
ईशानाय नमस्तुभ्यं अम्बिकापतये नमः ३१
चिदम्बर नमस्तुभ्यं चित्प्रकाराय ते नमः
अरूपिणे नमस्तुभ्यं रूपिणे च नमो नमः ३२
एवं मन्त्रेण विधिवद्गुणासंख्यां समर्चयेत्
उपचाराणि सर्वाणि पूर्ववत्कल्पयेद्गुरुः ३३
वेदाध्ययनमन्त्रेण यागमण्डपमाविशेत्
शिवदीक्षाविहीनाश्च द्वारबाह्ये प्रवेशयेत् ३४
आचार्यः सुप्रसन्नात्मा बीजमुख्यं शतं जपेत्
चण्डपूजां विना कार्यारुणपूजा विशेषतः ३५
एवं क्रमेण कृत्वाथ प्रातस्सन्ध्यां समाचरेत्
इति स्वायंभुवे प्रतिष्ठातन्त्रे अरुणपूजाविधिपटलः ३६

+++++++पूजारोहणमारभेत्
न वाहे त्रियहे वापि सप्ताहनि तथापि वा १

प्रासादपुरतो विद्वान् मराडपे संस्कृते शुभे
गोमयालेपनं कृत्वा प्रोक्षयेत्पुरुषेण तु २
स्थरिडलस्य त्रयं कृत्वा शालिभिर्विमलैस्तिलैः
तराडुलैः शोभितं कुर्यात् अयोषकसमन्वितम् ३
परिस्तीर्य ततो दर्भैः लोकपालान्समानयेत्
अन्तिके स्थरिडले स्थाप्य ध्वजं लक्षणसंयुतम् ४
षड् हस्तमधमं प्रोक्तं मध्यमं सप्तहस्तकम्
उत्तमं चाष्टहस्तं स्यात् पंचभागैकविस्तृतम् ५
विस्तरेण समं पुष्पं तदर्धं न्नुशिरो भवेत्
वृषभं चामरं छत्र तन्मध्ये लांछयेत्ततः ६
एवं लक्षणसंयुक्तं अर्चयेद्वृषभं तथा
तीक्ष्णश्रृंगाय विद्महे वेदपादाय धीमहे ७
तन्नो वृषः प्रचोदयात्
एवं मन्त्रं जपित्वा तु गन्धाद्यैरर्चयेद्ध्वजम्
तदर्धे स्थरिडलं सम्यक् कलशान्नव साधयेत् ८
विद्येश्वरसमायुक्तं मध्ये वृषभदैवतम्
सकूर्चान्सापिधानांश्च सहिरराया‍न्सवस्त्रकान् ९
गन्धाद्यैरार्चयित्वा तु स्वैः स्वैर्मन्त्रैर्विशेषतः
तदग्रे स्थरिडले स्थाप्य भेरीं वस्त्रसमावृताम् १०
दक्षिणे रुद्रमभ्यर्च्य वामे विष्णुमथार्चयेत्
मध्ये प्रजापतिं न्यस्य प्रहरं स्कन्ददैवतम् ११
अर्चयित्वा सुगन्धाद्यैः वाद्यागायत्रिमंत्रतः
आचार्यपूजनं कृत्वा वाद्यकं पूजयेत्ततः १२
हृन्मन्त्रेण समभ्यर्च्य पुष्पं हस्ते प्रदापयेत्
तत्पुष्पं तत्र निक्षिप्य वाद्यं ताळविताळयेत् १३
स्नपनं तत्र कुर्वीत स्वेतिमन्त्रैर्वृषं तथा

ध्वजारोहणपूर्वे तु स्थरिडलद्वितयं भवेत् १४
कलशस्थापनस्यैकं ध्वजस्यैकं विधीयते
शंखादिवाद्यनिर्घोषैः गीतनृत्तसमायुतम् १५
पिंछचामरसंकीर्णं धूपदीपसमाकुलम्
सर्वालंकारसंयुक्तं त्रिशूलेन समायुतम् १६
ग्रामप्रदक्षिणं कृत्वा संधिदेवान्समर्चयेत्
अष्टादशगणैश्चैव त्रयस्त्रिंशच्च देवताः १७
आहूय लोकपालांश्च सलं दद्याद्विशेषतः
आश्रा ++ दिवस + माचार्यः प्रीतमानसः १८
मार्गशीर्षकमासे तु आर्द्रान्तं तु शिवोत्सवम्
पुष्यमासे तु पुष्यान्तं माघमासे मघान्तकम् १९
फाल्गुने चोत्तरान्तं तु चैत्रे चित्रान्तमुच्यते
वैशाखे तु विशाखान्तं मूलान्तं ज्येष्ठमासके २०
आषाढे चोत्तराषाढे श्रावणे श्रवणान्तकम्
पूर्वाषाढे तथा मासे पूर्वान्तं चैवमेव च २१
अश्व्यन्तमश्वयुङ्मासि कार्तिके कृत्तिकान्तकम्
सर्वमासे तु कर्तव्यं आर्द्रां तु शिवोत्सवम् २२
प्रतिष्ठात्सर्वकर्तव्यं यावत्स्नप्रदिवासरम्
राज्ञां जन्मदिनांतं च मरणान्तमथापि वा २३
पीठगोपुरयोर्मध्ये पुरतो वृषभस्य वा
अत्यच्चरत्निमात्रस्यात् खात्वाप्यावां वटं बुधः २४
कूर्मं वा वृषभं वापि हैमं तत्रैव निक्षिपेत्
वेणुदरडं च संयुक्तं धायथां वर्धमानतः २५
अथवा द्वितलान्तं तु दशैकादशतलान्तकम्
ध्वजदरडमृदं स्थाप्य प्रासादसमदैर्घ्यकम् २६
वृषगायत्रिमंत्रेण ध्वजघराटासमायुतम्

आरोपयेत्ततो मन्त्री रज्जुं मन्त्रेण मन्त्रवित्  २७
अथवा ध्वजदण्डेन बद्धं संस्थापयेद्ध्वजम्
चम्पको देवदारुं च ताळस्तम्भक एव च  २८
क्रमुकं चन्दनं चैव ध्वजदण्डं प्रकीर्तितम्
गन्धादिकं ततो दत्वा मुद्गान्नं तु निवेदयेत्  २९
तस्य मूले तु कर्तव्यं वेदी पाद्यसमायुतम्
ध्वजं प्रति समभ्यर्च्य संवृतं गुळसंयुतम्  ३०
मुगान्नं दापयेद्विद्वान् स्वमन्त्रेण तु देशिकः
ततोंकुरार्पणं कुर्यात् उत्सवस्य दिनादितः  ३१
तद्दिना ++++  तद्रात्रौ चाधिवासयेत्
प्रत्यग्रे मण्डपं कुर्यात् दीशान्ये पावकेऽथवा  ३२
नवहस्ताष्टहस्तं वा सप्तहस्तमथापि वा
तत्र ब्रह्मपदे कुर्याद् वेदिकां रत्निमात्रतः  ३३
कलशान्वेदिकामध्ये विन्यसेत्स्थण्डिलोपरि
पिधानं वस्त्रकूर्चासन् सहैमान्पल्लवैर्युतान्  ३४
शिवकुम्भं न्यसेन्मध्ये वर्धनीं तस्य वामतः
परितोष्टौ न्यसेत्तत्र विद्येश्वरसमन्वितम्  ३५
अर्चयित्वा सुगन्धाद्यैः स्वैः स्वैर्मन्त्रैस्तु देशिकः
दशायुधानि परितः पूजिते स्वाधिदैवतः  ३६
अष्टमंगळरूपाणि वेदिमध्ये तु पूजयेत्
तोरणानि ध्वजान्यत्र पूजयेत्तु विधानयेत्  ३७
दर्भमालापरिक्षिप्तं सर्वालंकारसंयुतम्
कुर्यादध्ययनं प्रोक्तं नवमं चैकवा पुनः  ३८
वृत्तं वा चतुरश्रं वा सर्वकुण्डानि कारयेत्
पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत्  ३९
गन्धाद्यैरर्चनं वातु होमं कुर्याद्विचक्षणः

समिदाज्यचरुं लाजान् वेणुबिल्वयवैस्तथा ४०
प्रत्येकं शतमर्धं वा कुर्यात्तु +++ शं पुनः
समिधा पंचमेनैव वस्त्रेणाज्यं तथैव च ४१
अघोरेण चरुं हुत्वा लाजं वामेन चैव हि
आद्येन वेणुबीजानि बिल्वपत्रं हृदा तथा ४२
नेत्रेण तु यवान्हुत्वा प्रत्येकं व्याहृतिं तथा
प्रजापतिं च शिरसा प्रतिद्रव्यं विशेषतः ४३
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन्
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ४४
जयादिरभ्यातानं च राष्ट्रभृच्च क्रमात्पुनः
हुत्वान्ते तु यदस्येति जुहुयात्तु विशेषतः ४५
सायं प्रातर्बलिं दद्याद् होमान्ते तु विशेषतः
षोडशांगुलमुत्सेधं उत्तमं तत्प्रचक्षते ४६
द्वादशांगुलमुत्सेधं मध्यमं समुदाहृतम्
उत्सेधाद्द्विगुणं नाहं मूलतः परिकीर्तितः ४७
अग्रमंगुलविस्तारं कृत्वा संपूजयेत्ततः
अस्त्रराजाधिदैवत्यं पूजयित्वा तु देशिकः ४८
शिरसा धारयित्वा तु दशायुधसमन्वितम्
वितानच्छत्रसंयुक्तं पिंछचामरसंयुतम् ४९
प्रथमं विघ्नरात्रं स्याद् द्वितीयं ब्राह्ममुच्यते
++ रात्रं तु तृतीयं स्यात् गन्धर्वाणां चतुर्थकम् ५०
ऐन्द्रं तु पंचमं प्रोक्तं ऋषीणां षष्ठमुच्यते
सप्तमं वैष्णवं प्रोक्तं अष्टमं राक्षसं तथा ५१
नवमं शैवमुद्दिष्टं दिवसानां तु दैवतम्
भूतानां दिवसानां तु गाणवं समुदाहृतम् ५२
ऐन्द्रादिस्तु विमूर्तिः स्यात् गौणवं वैष्णवादिकम्

शैवं तु शैवमेवोक्तं दिवसं परिकीर्तितम्  ५३
बन्धुकं मोदकं चैव मुद्गान्नं गुळसक्तुकम्
प्रथमेऽहनि दातव्यं विघ्नरात्रमनुस्मरन्  ५४
हरिद्रान्नं सर्पिस्संयुक्तं नाळिकेरसमन्वितम्
चतुर्थेऽहनि दातव्यं गान्धर्वं  मन्त्रमुच्चरन्  ५५
इन्द्रवल्लिसमायुक्तं प्रियं च घृतसंयुतम्
पंचमेऽहनि दातव्यं ऐन्द्रं मन्त्रमनुस्मरन्
वेणवन्नं दधिसंयुक्तं बृहतीफलसंयुतम्
सप्तमेऽहनि दातव्यं वैष्णवं मंत्रमुच्चरन्  ५६
माषान्नं घृतसंयुक्तं माढतीमांससंयुतम्
अष्टमेऽहनि दातव्यं राक्षसं मन्त्रमुच्चरन्  ५७
शुद्धान्नं दधिसंयुक्तं बृहतीफलसंयुतम्
नवमेऽहनि दातव्यं ऐश्वरं मन्त्रमुच्चरन्  ५८
अलाभे चान्यद्रव्याणां शुद्धान्नेनाथ नित्यशः
ब्रह्मामीशानसंयुक्तान् गन्धपुष्पादिभिः क्रमात्  ५९
विघ्नराजादिमंत्रास्तु प्रणवादि नमोन्तकैः
पूजयित्वा यथान्यायं स्वाहान्ते च बलिं ददेत्  ६०
प्रथमं बलिदानान्ते कुर्याद्ग्रामप्रदक्षिणम्
एकं वापि द्वितीयं वा पत्रं वा सर्वमेव वा  ६१
पश्चात्तु विद्यते यत्र द्वादशप्रतिमेनथा
कौतुकं बन्धयेद्विद्वान् उत्सवार्थं  हृदा तु तत्  ६२
++ तं कौतुकं यस्मिन् तत्कौतुकमुदाहृतम्
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम्  ६३
रंगे वा शिबिकायां वा रथे वा सेप्य भक्तितः
उत्सार्यं  तु तेनैव कारयेदुत्सवान्ततः  ६४
राक्षसे दिवसे चैव युद्धारंभं प्रभावयेत्

धनुर्धरास्तथा केचित् केचिद्खड्गधरास्तथा ६५
केचिदश्वसमारूढा ++ क्षैद्वै गजवाहनाः
केचिद्युद्धसमोपेता भीताः केचित्तथैव ६६
एवं कृत्वा तु दिवसे रात्रौ कौतुकबन्धनम्
सौवर्णं पूर्णपात्रं वा सूत्रं कार्पासमेव वा ६७
पुण्याहं वाचयित्वा तु कौतुकं बन्धयेद्धृदा
आवाह्यं पूर्वदेवांस्तु गन्धाद्यैरर्चयेद्धृदा ६८
तीर्थसंग्रहणं वापि कर्तव्यमुषसि क्रमात्
सा विखैः कलशैः सूत्रैः मूलं वै ++ प्रयत्नतः ६९
चूर्णोत्सवं ततः कुर्याच्छैवेषु दिवसे तथा
प्रासादस्याग्रतो वापि याम्ये वा पावकेऽन्यथा ७०
स कृत्वा मण्डपं सम्यग्गोमयालेपनं तथा
संस्थाप्य मूलं तत्रैव अघोरेणासनोपरि ७१
गतदग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्तथा
विन्यसेच्च क्रमेणैव लूखलं वस्त्रवेष्टितम् ७२
दूर्वा च सहदेवी च बन्धयेल्लूखलं हृदा
पवमानेन संप्रोक्ष्य पुण्याहं वाचयेत्ततः ७३
अर्चयित्वा सुगन्धाद्यैः त्रिशूलं लूखलस्तथा
घृतं शिरोर्पणं कुर्याल्लूखलं मुसलं तथा ७४
स घृतैस्सद्यमन्त्रेण हेमदूर्वां कुराक्षतैः
सुशुष्कां रजनीं शुद्धां निक्षिपेदाढकत्रयम् ७५
चतुष्पदफलं ज्ञेयं आढकं तत्प्रमाणतः
आढकद्वितयं कार्यं ग्राह्यं ग्राह्यांक्रुमेव वा ७६
चूर्णयेद्देशिकस्तत्र हृदयेन तु मन्त्रतः
जयशब्दादिसंयुक्तं हरशब्दसमाकुलम् ७७
गीतवाद्यसमायुक्तं स्तोत्रमंगळवाचकैः

ततो भक्तजनैस्सार्धं ++ तेन तु देशिकः ७८
स्नापयेच्छिवमन्त्रेण शिवमभ्यर्चयेत्ततः
तैलाभ्यञ्जनशूलं तु चूर्णेन स्नापयेत्ततः ७९
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
ग्रामप्रदक्षिणं कृत्वा ततस्तीर्थं समाचरेत् ८०
कलशान्स्नापयित्वा तु सहिरण्यान्सवस्त्रकान्
प्रासादस्याग्रतः सम्यग्विद्येश्वरशिवात्मकान् ८१
संग्राह्य कलशांश्चापि दीदे++ तथैव च
जादिकं च संग्राह्य गीतवाद्यसमायुतम् ८२
गच्छेद्भक्तजनैस्सार्धं ततस्तीर्थं तु देशिकः
तीरे स सम्यक्कृत्वा तु ++ स्थण्डिलद्वयम् ८३
स्थण्डिले स्थाप्य देशं तु ++ लोकेशान् ++ विन्यसेत्
अर्चयित्वा तथान्यायं शूलं वै कलशां स्थितान् ८४
शूलस्य मध्यमे पात्रे शिवमावाहयेद्बुधः
दक्षिणे विष्णुमाबाह्य वामपार्श्वे प्रजापतिम् ८५
पार्वतीं पालिकायां तु कुम्भे चैव तु षण्मुखम्
विघ्नेशं तदधस्तत्र दण्डमध्ये तु भास्करम् ८६
चण्डेशं दण्डमूले तु दण्डाग्रे मदनं तथा
त्रिदेवीं पूर्वदिग्भागे दक्षिणे मातरस्तथा ८७
ज्येष्ठां तु पश्चिमे चैव दुर्गादेवीं तथोत्तरे
लोकपालान्सितं चैव त्रयस्त्रिंशति देवतान् ८८
पाताळान्सप्तमूल +++++++ समारभेत्
अनन्तादिशिखण्ड्यन्तान् कलशेष्वभितो न्यसेत् ८९
गंगा च यमुना चैव नर्मदा च सरस्वती
सिन्धुर्गोदावरी चैव कावेरी चैव सप्त च ९०
आवाह्य मध्यमे चैव कलशे देशिकोत्तमः

तन्मन्त्रेण ततः स्थाप्य स्नानतीर्थे समाचरेत् ६१
सहस्नानं तु यः कुर्यात् सर्वपापात्प्रमुच्यते
दिनेष्वेतेषु सर्वेषु ष्वांगवि धूपदीपकैः ६२
विशेषात्पूजनं कुर्याद् विभवस्यानुरूपतः
स्नपनं तु ततः कुर्यान् मूलबिम्बं विशेषतः ६३
कौतुकं प्रतिमां चापि स्नपनं कारयेत्ततः
संदितान्वेदिका मध्ये स्नपनं कारयेच्छिवम् ६४
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्तु शिवाम्भसा
ध्वजावरोहणं कुर्याद्वृषभान्तं विसर्जयेत् ६५
ग्रामप्रदक्षिणं कुर्याद्बलिं दत्वा विशेषतः
विसर्जनं ततः कुर्याद् ब्रह्मादीन्परितस्तथा ६६
एवं यः कुरुते मर्त्य उत्सवं विधिपूर्वकम्
कुलैकविंशतिं मुक्त्वा रुद्रलोके महीयते ६७
इति स्वायंभुवसूत्रे उत्सवविधिपटलः ३७

शिवोत्सवादिपूर्वोक्तिरंकुरार्पणमुत्तमम्
दीक्षितैः साधकैश्चैव स्नपने प्रोक्षणे तथा १
स्नपने शोभने चैव कुर्याद्घोरं च चार्चयेत्
कर्षणे वृतमाकारा विलाग्रेण प्रवेशके २
नवभोजनकल्याणशक्तिकादीपिके तथा
पंचमे सप्तमे चैव दिने चैवांकुरार्पणम् ३
पालिका घटिका चैव शरावं च त्रिधा भवेत्
सुवर्णं रजतं वापि ताम्रं वा मृण्मयं तु वा ४
अष्टपालिकमंगुल्याद्द्वादशांगुलमायतम्
पालिकामुखविस्तारं षोडशांगुलमुच्यते ५
तदर्धं पादविस्तारं षड्भागैकक्रमोष्पकम्

विस्तारस्य त्रिभागैक वर्जितं बलमुच्यते ६
एवं पादक्रमं प्रोक्तं शेषदगडमिहोच्यते
विस्तारस्य त्रिभागैकं दगडविस्तारमुच्यते ७
घटिकाघटविस्तारं अष्टांगुल्यसुवाहनम्
दगडं वा चतुरंगुल्यं पालिकावत्कृतं शुभम् ८
पंचद्वारसमायुक्तं घटिकां कारयेत्ततः
शरावमुखविस्तारं अष्टांगुलमुदाहृतम् ९
पादविस्तारमर्धं वा उत्सेधाष्टांगुलं भवेत्
वाहं स्यात्पालिकादीनां विस्तारार्धैरवस्थिते १०
भिन्नं च सुषिरं काळं भेदं कोणं च नीलकम्
आपंचरसिरिं चैव वर्जयेत्साधकोत्तमः ११
शूली मुखं दधारा च पालिकायाधिदेवता
इत्येवं पालिकारुस्य दशदिक्स्थाप्यमेव च १२
प्रासादपूर्व ऐशान्ये उत्तरे दक्षिणे तथा
गोमयालेपनं कृत्वा शुद्धे भस्मात्रियायिके १३
ग्रामदेवोत्सवं प्रोक्तं वीरशक्त्युत्सवं शृणु
देवीयागमथो वक्ष्ये सर्वकामार्थसाधनम् १४
प्रथमं विघ्नोत्सवं प्रोक्तं आदित्योत्सवमेव च
काळ्युत्सवं तदन्ते तु महाशास्त्रस्य चोत्सवम् १५
भैरवस्योत्सवं पश्चाद् स्कन्दोत्सवमनन्तरम्
दुर्गाया उत्सवं पश्चात् वैष्णवत्सवमेव च
पश्चाच्छिवोत्सवं कार्यं वीरशक्त्युत्सवं परम्
विघ्नेशं विघ्ननाशार्थं भास्करं रोगनाशनम् १७
यक्षादिपीडाशान्त्यर्थं महाकाळ्युत्सवं मतम्
ग्रहपीडादि दोषघ्नं शास्तोत्सवमिहोच्यते १८
जयं भैरवकल्याणं काम्यादि स्कान्दमेव च

दुर्गायास्तु विशेषेण परसंहारकारणम् १६
सृष्ट्यर्थं वैष्णवं प्रोक्तं सालोक्यादिशिवोत्सवम्
वीरशक्त्युत्सवं कार्यं सर्वकामार्थसाधनम् २०
एवं दशविधं प्रोक्तं शक्त्युत्सवमिहोच्यते
नवाहं वाथ सप्ताहं पंचाहं वा प्रकल्पयेत् २१
ध्वजारोहं नवाहे ++ चैव कल्पयेत्
सप्त पंचदिने चेत्तु ध्वजारोहं न विद्यते २२
भेर्यादितीर्थपर्यन्तं यथाविधिपुरस्सरम्
बेरोदय ऋृक्षं वा मासनक्षत्रमेव वा २३
राज्ञां जन्मावसानर्क्षं अन्यत्पुण्यदिने मतम्
एवं तीर्थं विनिश्चित्य अधिवासनमारभेत् २४
त्रिचतुर्हस्तमारभ्य द्विगुणान्तं क्रमेण तु
तदर्धं वा तदर्धं वा पदविस्तार उच्यते २५
शिरः पुच्छसमायुक्तं वेत्रद्वयसमन्वितम्
तत्पदं सप्तधा भज्य शिरःपुच्छैद्विंयंशकौ २६
मध्ये त्रिभागमेवं तु सिंहं वा वृषभं नयेत्
अधोभागे विशेषेण चाष्टमंगळकान्यसेत् २७
ऊर्ध्वभागे तु कर्तव्यं पद्मं वा छत्रमेव वा
सिंहं वा वृषभं वापि लक्षणं च पुरोक्तवत् २८
उक्तवर्णसमायुक्तं आयादिशुभसंयुतम्
एवं पटं समापाद्यं ध्वजदण्डमथ शृणु २९
याज्ञिकैः सारवृक्षै+ त्वक्सारक्रमुकादयः
रुद्रहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ३०
एवं त्रिविधमाख्यातं अन्यत्सर्वं पुरोक्तवत्
एतत्सर्वं समापाद्य अधिवासनमारभेत् ३१
रात्रौ पूजावसाने तु गणेशं पूजयेद्बुधः

त्रिविधं स्थण्डिलं कृत्वा देवीं तत्संनिधौ क्रमात्  ३२
पश्चिमे तु पटं न्यस्य तत्पूर्वे नवकं न्यसेत्
तत्पूर्व चास्त्रमूर्तिं  च तत्पूर्वे होममेव च  ३३
नेत्रोन्मीलनपूर्वं  तु शुद्धिं कुर्यात्ततः परम्
परं प्राणप्रतिष्ठां च रक्षाबन्धमतः परम्  ३४
मन्त्रन्यासं ततः प्रोक्तं तत्तन्मूलषडंगकैः
वाहनं मध्यकुम्भे तु लोकपान्परितो यजेत्  ३५
तत्तत्स्वबीजमुच्चार्य गन्धपुष्पादिनार्चयेत्
अस्त्रं संपूज्य विधिवत् त्रिखण्डा द्वौ प्रकल्पयेत्  ३६
अग्निकार्योक्तमार्गेण चाग्निकार्यं  समाचरेत्
विशेषाहुतिसंस्कारं संपातकन्तसमाचरेत्  ३७
वह्ने बीजं समादाय कुम्भमध्ये सुयोजयेत्
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं नयेत्  ३८
प्रातर्मध्याह्न सायेषु ध्वजमारोपयेद्गुरुः
निर्माल्य धारिणीं देवीं प्रतिशोधनधारकम्  ३९
भेरीसन्ताडनं रात्रौ पूर्वोक्तविधिना सह
अष्टादशगणाश्चैव आहूय शिष्य एव च  ४०
एवं देवं समावाह्य चास्त्रमूले समर्चयेत्
अस्त्रं भेरीं च संपूज्य भेरीं तत्रैव ताडयेत्  ४१
गौरीगायत्रिमन्त्रेण एकद्वित्रि च ताडयेत्
पश्चात्परशिवं चैव वादयेत्ताळकः क्रमात्  ४२
आवाहनबलिं दत्वा ध्वजादिर्वा वृषादिकम्
पश्चादुत्सवमारभ्य चांकुरं पूर्ववत्कुरु  ४३
उत्सवप्रतिमां तत्र तद्बेरं त्रिविधं भवेत्
यागार्थं  प्रथमं प्रोक्तं नित्यबेरं ततः परम्  ४४
वाहनार्थं  तृतीयं च तद्भेदमिह कथ्यते

चतुर्हस्तं ++ वा आसीनं वा स्थितं तु वा ४५
भद्रं वा पद्मपीठं वा कल्पयेत्कल्पवित्तमः
वीरशक्तिरिति ख्यात नित्योत्सवसमुच्यते ४६
ध्रुवबेरस्य यन्मानं यथा कृतिस्तथा भवेत्
वाहनारूढशक्तिश्च आसीनं वा स्थितं तु वा ४७
एतत्त्रिविधबेरं च मूलशक्तिवदुच्यताम्
प्रथमं मूषिकं चैव द्वितीयं पिंछवाहनम् ४८
गणेशस्कन्दसंयुक्तं वीरशक्तिसहैव तु
उत्सवोद्दिश्यदेवानां कौतुकं बन्धयेत्ततः ४९
यागशालां प्रविश्याथ तोरणादीन्सुपूजयेत्
वेद्यूर्ध्वे स्थण्डिलं कल्प्य मध्यकुम्भे मनोन्मनीम् ५०
वामादिशक्तयश्चाष्टौ पूर्वादि क्रमशो न्यसेत्
योनिकुण्डं विशेषेण एकाग्निस्तु मनोन्मनीम् ५१
अर्चनं पूजनं होमं क्रियाभेदानभेदितः
मण्डपाराध्यहोमान्ते देवामुद्धूय ताडयेत् ५२
द्वारादिबलिपीठान्तं शुद्धान्नं वा बलिं ददेत्
बलिदानावसाने तु यानक्रममिहोच्यते ५३
वीथीसंमार्जनोपेतं तोरणाद्यैरलंकृतम्
उत्सवेशीमलंकृत्य सर्ववाद्यसमन्वितम् ५४
शनैः प्रदक्षिणं कृत्वा सर्वभक्तजनैस्सह
यानान्ते परिवेषं च प्रायश्चित्तादिकं ततः ५५
एवं क्रमेण कर्तव्यं वाहनं च पुरोक्तवत्
शिरोत्सवं विना कार्या प्रान्तं ++ था भवेत् ५६
अथ तीर्थदिनात्पूर्वे असूतोयं च संग्रहेत्
महातीर्थं समुद्दिश्य चूर्णोत्सवमथाचरेत् ५७
तच्चूर्णं दापयेद्देवीं तीर्थस्थानं प्रविश्य च

शुद्धतैलं च सुस्नाप्य ग्रामलाद्यैश्च मर्दयेत् ५८
नवकुम्भान्समादाय सूत्रादिभिरलंकृतम्
द्रोणं वा शिवतोयं वा पूजयेत्तु घटं प्रति ५९
रजनी गन्धतोयं च सुगन्धिकुसुमैस्सह
गंगाद्यादि समावाह्य पूजयेत्तु विचक्षणः ६०
पुत्रषो वास्त्रयो वापि रजनीतैलदापयेत्
सर्वलीलाश्च मर्याश्च जलक्रीळां समाचरेत् ६१
तैलादिस्नानपानं च देवीं सम्यक् समाचरेत्
ग्रालयं संप्रविश्याथ पूर्णाहुतिं च दापयेत् ६२
यागकुम्भाभिषेकं च नैवेद्यं चापरोहरणम्
नित्योत्सवादिकं कार्यं संधिदेवान्समर्चयेत् ६३
निर्माल्यधारिणीं पूज्य शेषं पूर्ववदाचरेत्
शुद्धस्नपनमन्ते च महाहविर्निवेदयेत् ६४
ग्रनुक्तानि च सर्वाणि शिववत्कारयेद्बुधः
ग्रायुः श्रियं च विजयं पुत्रसौभाग्यकारणम् ६५
इहलोके ध्रुवं प्राप्य सोऽन्ते सायुज्यमाप्नुयात्
इति स्वायं भुवे शक्त्युत्सवविधिपटलः ३८

ग्रथ वक्ष्ये विशेषेण वैवाह्यविधिरुच्यते
केवलं सहजं पौरयं शक्तिभेदात्त्रिधाभवेत् १
पौरयं मनोन्मनीत्युक्तं गौरी च सहजं भवेत्
शक्तिभेदं समाख्यातं केवलं शम्भुना विना २
वैवाह्यं च प्रकर्तव्यं शक्तीनां केवलं विना
गौरीं मनोन्मनीं चैव कर्माणं च प्रचक्षते ३
ग्रामप्रदक्षिणं कृत्वा पूरकर्म तथा चरेत्
देवाग्रे तु विशेषेण देशिकानुज्ञया सह ४

सुवारे सुमुहूर्ते च कल्पयेत्तु विचक्षणः
मम भक्ताश्च सर्वाश्च कन्या या गणिका सह ५
पूगीफलं च तत्पंच संख्या या च सहस्रकम्
नाळिकेरं च कर्तव्यं वर्णसंख्या च संग्रहेत् ६
रजनीद्रोणमित्युक्तं सहस्रार्धं च संख्यया
कदळीफलमित्युक्तं चित्रवस्त्रं च संग्रहेत् ७
स्वर्णस्याभरणं ग्राह्यं कह्लारदामसंयुतम्
सर्ववाद्यसमायुक्तं कुरवशब्दसमन्वितम् ८
स्वस्ति वाचकसंयुक्तं शनैः पूजा शनैः शनैः
एवं प्रदक्षिणं कृत्वा देवीमारान्प्रविश्य च ९
देवीं वधूं च संग्राह्य श्वश्रेयसहितं वदेत्
आचार्यो दासिभिश्चैव सहिभिर्वप्रकांदिभिः १०
तत्र स्थानेषु कर्तव्यं गोमयालेपनं कुरु
रजनी पिष्टचूर्णं च अलंकृत्य विशेषतः ११
तन्मध्ये विष्ठरं न्यस्य तदूर्ध्वे वस्त्र पातिते
तदूर्ध्वे देवीं च विन्यस्य देशिकोदङ्मुखः स्थितः १२
पार्श्वौ सखी च कर्तव्यं आवृतं चैव दासिभिः
तदग्रे विन्यसेद्द्रव्यं पश्चादेवाष्टमंगळम् १३
अच्युतं च समानीय फलदानं स एव हि
तदाज्ञा चैव कर्तव्यं फलदानं समाहरेत् १४
विप्रस्त्रिधा च कर्तव्यं एकद्वित्रियसंख्यया
प्रथमं वस्त्रवेष्टं च रात्रिमालेपनं क्रमात् १५
स्वर्णाद्याभरणं चैव उक्तस्थाने सुयोजयेत्
++++++ व्यपि सर्वाणि देविरादृश्यते तथा १६
++++++ समादाय स्त्रीणां कन्यां च दापयेत्
पूगीफलं च पर्णं च सर्वभक्तांश्च दापयेत् १७

देवीं सम्यक्समादाय पूर्वस्थाने निवेशयेत्
निश्चित्य दिवसात्पूर्वे अंकुरं पूर्ववद्बुधः १८
तद्दिने वा प्रकर्तव्यं रक्षाबन्धं तु पूर्ववत्
देव्यास्तु दक्षिणे हस्ते वामहस्ते तु वामतः १९
शिवाग्रे तु विशेषेण शिवकुम्भं च संग्रहेत्
वस्त्राद्याभरणं चैव अलंकृत्य विशेषतः २०
पौर्णं च सहजं वापि किंचिद्भेदं विशेषतः
पौर्णं चेद्वर्धनीं प्रोक्तं सहजं बेरमाचरेत् २१
तत्तद्बेर ++++ कृत्य तत्तद्रूपं च भावयेत्
कल्याणमण्डपं प्रोक्तं मकुटं वा प्रभां कुरु २२
तल्लक्षणं पूर्ववत्प्रोक्तं सर्वालंकारसंयुतम्
सर्ववाद्यसमायुक्तं जयशब्दसमाकुलम् २३
नानाचित्रसमायुक्तं नानालीलासमन्वितम्
पताकावितानसंयुक्तं दर्भमालाभिरावृतम् २४
+++++++++++ तोरणान्भूषयेत्ततः
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् २५
तन्मध्ये विन्यसेद्धीमान् सिंहासनमथापि वा
विष्ठरं वा प्रकर्तव्यं ऊर्ध्वच्छन्दं च कारयेत् २६
ज्वलदीपं च कर्तव्यं सूरिवृन्दैश्च संकुलम्
तदर्थकुम्भमुद्धृत्य स्वस्तिमंगळवाचकैः २७
तेसूनवक्रमेणैव बलिं दद्यात् क्रमेण तु
तद्दासने प्रकर्तव्यं कुम्भसंस्थापनं कुरु २८
विघ्नेशं पूजयेत्पूर्वं पुराशम्भुप्रसादतः
संकल्पं च तथा कुर्यात् पुण्याहं वाचयेत्ततः २९
अश्मानमुत्तरे स्थाप्य लाजं तत्रैव विन्यसेत्
स्रुक्स्रुवौ समिदाज्यौ वा होमद्रव्याणि सर्वशः ३०

कुशकूर्चसमायुक्तं गन्धपुष्पं सदिन्धनम्
एवं सर्वं समापाद्य शम्बैरः प्रोक्ष्यते विना ३१
कूर्चनीतिमथो ++++++++++++
पाद्यमाचमनं चार्घ्यं तत्तन्मन्त्रेण दापयेत् ३२
कन्यादानादिकं प्रोक्तं जुष्टोपस्थानमाचरेत्
सर्वदोन् अृ ++ स्याश्च मिमं स्तुत्यैव बुद्धिमान् ३३
प्रसुग्मन्तेति मन्त्रेण आचार्यमवलोकयेत्
तत्र देवीं प्रविश्याथ ब्राह्मणान्युग्मसंख्यया ३४
वरप्रदानं कर्तव्यं पूर्वमेव सुभाषितः
सुमंगलीति मन्त्रेण शिवबीजमनुस्मरन् ३५
मांगल्यधारणं प्रोक्तं तत्पूर्वे मन्त्रवाससम्
वौषडन्तादिमन्त्रेण अवलोकमथाचरेत् ३६
मित्रोसीतिलमन्त्रेण वर्धनीमुद्धरेत्ततः
वर्धनीं दक्षिणे स्थाप्य चलासनमथाचरेत् ३७
परिस्तरान्मुखान्तं च अग्निकार्योक्तमार्गतः
ततो बृहस्पतिं पूज्य दक्षिणां दापयेत्ततः ३८
अग्नेः पश्चिमभागे तु शिलादिस्थण्डिलं कुरु
दीपादि तत्र विन्यस्य स्थलिकां वान्यसेत्ततः ३९
गोत्रगोचरमार्गेण ऊर्ध्व + पूर्ववत्कुरु
साधकेन तु मन्त्रेण वर्धनीं कुम्भमुद्धरेत् ४०
एकमिक्षेति मन्त्रेण पंचब्रह्ममनुस्मरन्
सप्तपादं प्रकर्तव्यं प्रदक्षिणमथाचरेत् ४१
मम हृदेति मंत्रेण वर्धनीमभिमन्त्रयेत्
परिमानेति मन्त्रेण प्रदक्षिणमथाचरेत् ४२
आज्याहुतिं च कर्तव्यं कूष्माण्डाहुतिमाचरेत्
वर्धनीं कुम्भमादाय अश्ममारोपयेद्धृदा ४३

यन्नारीतिमदोनौ ++ +++ हुनेत्ततः
तुभ्यमग्नेति मन्त्रेण प्रदक्षिणमथाचरेत् ४४
अश्ममारोपयेद्धीमान् एकद्वित्रिक्रमेण तु
+++ जायेति मंत्रेण मनसा ध्यायते गुरुः ४५
व्याहृतिं च ततो हुत्वा सर्वमग्ने हुनेत्क्रमात्
जयादिरभ्यातानं च राष्ट्रभृच्चैव होमयेत् ४६
पाशुपतेन चास्त्रेण शुचिवोहं यथाक्रमम्
अग्निंवि++ विधिवद् औपासनमथाचरेत् ४७
वर्धनीमुद्धरे स्थाप्य आशीर्वादं च कारयेत्
औपासनाग्निं वक्ष्यामि चतुर्थदिवसान्तकम् ४८
होम +++ कं तु सन्धिद्वयमथाचरेत्
चतुर्थदिवसं यावत् पूजा राजोपचारवत् ४९
एवं क्रमेण विधिवत् नालो +++ कारणम्
नित्यपूजा प्रकर्तव्या पूर्वमेव क्रमेण तु ५०
पंचमेहनि कर्तव्यं पूर्ववत्कारयेद्बुधः
दामोदरो महालक्ष्मीर्वधूधर्मं सदापयेत् ५१
हारनूपुरकेयूरकटकादिविभूषितम्
माणिक्यस्वर्णभवनं रत्नपिंछं च दापयेत् ५२
मुक्तादाम च वैडूर्यं इन्द्रनीलं च भूषणम्
एवं भूषणदानं च दिव्यवस्त्रैश्च दापयेत् ५३
सुर +++ र्मितं पात्रं स्थलकां कोटिनिष्ककाम्
एकद्वित्रीणि कर्तव्यं स्थलिकां सहस्रनिष्ककम् ५४
जलपात्रं चाष्टसाहस्रं दर्व्यानेकसहस्रकम्
द्रव्यपात्राणि सर्वाणि शतनिष्कसहस्रकम् ५५
पात्राधारं च कर्तव्यं दश कोटिं च निष्ककम्
दीपाधारं च कर्तव्यं अयुतं युग्मनिष्ककम् ५६

निष्कप्रतिग्रहं पात्रं भोजनोच्छिष्टपात्रकम्
यानानां शयनानां च सिंहासनादिविष्ठरम् ५७
हेमे ++++ किं तु नवरत्नैर्विचित्रयेत्
सत्यलोकादिलोकं च दासवर्गेण दापयेत् ५८
स्त्रियां लोके तु सर्वत्र दासीं चैव तु दापयेत्
क्षेत्रकेषु च तत्क्षेत्रमुदकपूर्वं च दापयेत् ५९
केशबन्धं च दूर्यं च दर्पणं च प्रदापयेत्
हस्तौ च धृतमानं च शिंशुमारं च दापयेत् ६०
रत्न +++ समायुक्त शिवद्रव्याणि दापयेत्
इतराण्यपि सर्वाणि एवमेव प्रदापयेत् ६१
सर्वलोकहितार्थाय त्रैलोक्यप्रभुमादरात्
अनाद्यन्तं च तत्काले मम लीलां च संभवेत् ६२
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति स्वायंभुवे प्रतिष्ठातन्त्रे वैवाह्यविधिपटलः ३९

अथ स्नानविधिं वक्ष्ये परमेशप्रकाशितम्
येन शुद्धिमवाप्नोति स्नानतो मुक्तकिल्बिषः १
नदीनदतटाकेषु स्थोयस्थोपायनेषु च
स्नानं समाचरेन्नित्यं सामान्यविधिकल्पितम् २
तत्रादौ शुद्धिराचान्तः शुचौ देशे समाहितः
+++ याक्य मन्त्रेण मुद्रमन्त्रेण शोभिताम् ३
जलतीरे ततः स्थाप्य वामदेवेन मन्त्रतः
प्रोक्षयेद्बहुरूपेण प्रदेशानेन मन्त्रवित् ४
भागत्रयं ततः कृत्वा पुरुषस्य पदैः स्त्रिभिः
क्षिपेद्दिक्षु जले चैव भागमस्त्राभिमंत्रितम् ५
भागार्धेन मलस्नानं अल्पैकार्धं निधापयेत्

भागेन शिवतीर्थं तु कुर्यान्मोदशकामनः ६
पदस्याने स्वरूपं तु प्राकारस्य शिरः क्रमात्
ईशानाद्यपदैः पश्चात् स्नानमामलकादिभिः ७
अभिषेकं च तेनैव प्राणायामं शिवेन तु
कृत्वाधाम्य पुरा ब्राह्मीं भजेत्संध्याद्विराश्रमी ८
इतरान्यस्तु विरक्तात्मा लौकिके तु पराङ्मुखः
कुर्यात्प्राहि न वा कुर्यात् शैवीमेव नियोगतः ९
सद्येन वामदेवेन ततो घोरेण मार्जनम्
प्राणायामचतुर्थेन शेषमीशान योजयेत् १०
श्रीकण्ठेनोपसंगृह्य कुर्याद्विद्यात्मनो विधिः
छाया वन्दनं पश्चाद् ध्यात्वारूपं सदोज्वलम् ११
स्नानमाग्नेयपरमं भस्मस्नानमुदाहृतम्
जलस्नानोत्तरान्नित्यं अनुत्तरमथापि वा १२
जातिसुकरसुस्पर्शकरभावपरिग्रहैः
आरण्ये गोमयेपेतु पूतेन करजेन वः १३
सद्यादिमंत्रितेनैव स्नायान्नित्यमुदङ्मुखः
शिरोमुखं ततो ग्रीवः स्कन्दौ वा हा धुरास्तथा १४
क्रमाद्धू वै ++ तगमं च मरं च स्वतिमंत्रतः
त्रिराचम्योदकं पश्चात् त्रिः प्रमृत्य नखैः शनैः १५
शिरश्च शीर्षण्यानि षट् वारिणा तद्वतस्पृशेत्
नासौ च हृदयं नाभिः उदरं च शिरस्तथा १६
पाद्यावमुष्य कर्तव्यं मन्त्रं यथोदितं तले
अंगुष्ठेन तु मूलस्य तीर्थं ब्राह्म्यं प्रकीर्तितम् १७
तेन शान्तिं शुचिं नित्यं प्राङ्मुखोदङ्मुखोऽपि वा
दैवं कनिष्ठिका मूलं तले तीर्थं प्रशस्यते १८
तेन प्रशस्यते स्नानं सत्यमेव विचक्षणः

अंगुल्यग्रे स्थितं तीर्थं ऋषीणां तर्पणं परम् १९
पैत्र्यं पवित्रकार्येषु तर्जन्यं गुष्ठमूलतः
आग्नेयः पाणिमध्ये तु सौम्ये याम्ये प्रतिष्ठितम् २०
नास्या स्नाक्षेण +++ प्राङ्मुखेनोर्ध्वबाहुना
ईशानं तु पदं कार्यं पतसप्तकत्र्यश्च ता २१
वायव्यं च ततः स्नानं रजसा गौकृतेन तत्
मानसं नवधा कार्यं षष्ठं सार्वतिकारतत् २२
सर्वं मन्त्राभिमन्त्रेण प्राणायामं गतेन च
स्नात्वा चम्य यथा न्यायं कर्मकुर्याद्यथोदितम् २३
पूजयेदथ देवेशं लिंगे वा स्थण्डिलेऽपि वा
अग्निकुण्डे तथा देहे नित्यमेवं प्रकीर्तितम् २४
इति स्वायंभुवे प्रतिष्ठातन्त्रे पूर्वसूत्रे स्नानविधिपटलः ४०

अथार्चनं शिवस्यैव सर्ववैशेषिकं बुधः
तदुच्यते समासेन सामान्यं विधिपूजनम् १
इत्यादि शान्तिके विद्वान् उत्तराभिमुखः स्थितः
दग्ध्वा पाशात्मकं कार्यं प्रणवेनाग्निना शृतम् २
ध्यायेत्सर्वगतं सूक्ष्मं आत्मानं प्रणवात्मकम्
तस्य ब्रह्मकलाकायं चिन्तयेदनुपूर्वकम् ३
तस्य मुद्रानमस्कारं बध्वा संचिन्तयेद्बुधः
शिरांसि पंचभिः पंच पंचमेव तु कारयेत् ४
पद्ममुद्रां ततो बुध्वा चत्वारि वदनानि तु
कलाकलितमन्त्रेण चतुर्थेनैव चिन्तयेत् ५
निष्ठुरां संप्रयोजज्ञो पशुरूपं तु पंचधा
चिन्तयेद्धृदयग्रीवं असौ पृष्ठं विभागवित् ६
वामदेवं तु नवधा बध्वा तु शशकर्णिकः

लिंगपायुस्तथा चोर्ध्व जानुनी च तथा भवेत् ७
जंघे चैव तथा पार्श्वे वामदक्षिणमेव च
नमस्कारान्तकं लिंगं मंत्रं मंत्र निवेशयेत् ८
मुकुळीं तु ततो बध्वा सद्योजातं तथा कलाम्
कलाकलितमात्मानं चिन्तयेच्चिन्तको बुधः ९
पादौ पाणी तथा चाथ नासिका च शिरस्तथा
पूर्ववत्कल्पयित्वा तु शिवमस्तु पदे न्यसेत् १०
शिवमुद्रां प्रयोगज्ञः शिवधामविधानवित्
विन्यसेद्धृदये पश्चात् सर्वात्मानं च शान्तया ११
लिंगस्थायां च सुशिवं विन्यस्य शिरसि क्रमात्
शिखायां ज्वलिमंत्रेण ध्वजेन विचिन्तयेत् १२
न्यसेत्सूर्यसुसंप्रख्यात् मादिन्यादि पिंगळा
विन्यस्य सर्वदेवेशं गायत्रीं शिरसि न्यसेत् १३
नेत्रेण नेत्रनेत्रेषु हस्तयोरस्त्रमेव च
तन्मुद्रयैव विन्यस्य शिवार्चनमथाचरेत् १४
यथोपहारसंपन्नशिवशास्त्रेण विरेध्य च
पूजास्थानं ततः कृत्वा पश्चादर्घ्यपात्रं प्रपूजयेत् १५
कर्मणे लोकनाथस्य दत्वा पुष्पाण्यनुक्रमात्
निर्माल्यं तत्पदमस्त्रेण मंत्रं संपादयेत्ततः १६
लिंगं च पीठकं चैव संप्रक्षाळ्य शिवाम्भसा
धर्मज्ञानं च वैराग्यं ऐश्वर्यं च ततः परम् १७
अनन्तं हृदयेनैव विन्यसेदनुपूर्वशः
गळेषु शक्तयः स्थाप्य सर्वव्यापि पदेन तु १८
स्थापयेद् व्योमरूपेण कर्णिकायां मनोन्मनीम्
मन्त्रस्सर्वगतं देवं शिवं प्रणवसंयुतम् १९
पूर्ववत्सकळीकृत्य शिवमावाहयेत्ततः

सद्येन पदसंस्थानं वामदेवेन विन्यसेत् २०
सांनिध्यं बहुरूपेण पुरुषेणार्घ्यं तु दापयेत्
पदेशानेन पुष्पाणि दत्वा दिक्षु निवेशयेत् २१
अक्षराणि शिवोक्तानि कालाहाटकानि तु
अरक्तं विजयोक्तं वा विद्यांगं स्थानमण्डलम् २२
संस्थाप्य पूजयेत्काद्यैः नित्यं चैव तु योगतः
गन्धोदकं तु सद्येन स्नानार्थमभिमन्त्रयेत् २३
वामदेवेन वस्त्राणि तत्रं च कटिसूत्रकम्
विलेपनमघोरेण हारकेयूरकादिकम् २४
शोधनीपूर्वमन्त्रेण मन्त्रान्नमभिमंत्रितम्
मधुसर्पिर्दधिक्षीरधूपनैवेद्य दीपकम् २५
पुरुषेणैव मन्त्रेण शेषमीशेन मंत्रवित्
अष्टानावृतागाष्टाभिरनन्ताद्यैरनुक्रमात् २६
प्रशोधनं च मंत्राणां रुद्राणामधुनोच्यते
विद्यांगानि च चत्वारि कालकण्ठं प्रयोजयेत् २७
ततः पाशुपतास्त्रं च चोदशैवाभिमन्त्रवित्
नमस्कारे विशेषोऽस्ति विद्येशाः पद्ममुद्रया २८
एवं संपूजिते देवे संध्यामन्त्रं निवेदयेत्
विद्यातोपचितं मन्त्रं प्रणवे कमलासनैः २९
अघोरास्त्रस्य पूर्वे तु वारुण्यामधिपस्य तु
उदक् पाशुपतास्त्रेण संध्यामंत्रं प्रपूजयेत् ३०
गन्धपुष्पपवित्राद्यैः मनस्तुष्टिकरैस्तथा
प्रणम्य देवदेवेशं मण्डपं ++ रभेत् ३१
कालोक्तगुशपं कृत्वा देवाय विनिवेदयेत्
साधकस्साध्यसिध्यर्थं वीरात्मायेति रोजना ३२
सर्वमन्त्राभिमन्त्रेण गन्धाम्बु विधिपूर्वकम्

जपान्ते समये मन्त्री संपुटे निहिते शिवम्  ३३
गुह्याति गुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्
सिद्धिर्भवतु मेयेन त्वत्प्रसादात्त्वधिस्थिते  ३४
यत्किंचित्कर्मभेदेन सदा सुक्वत सुष्कृतम्
तन्मे शिवपदस्थस्य भुक्ष्व क्षपय शंकर  ३५
शिवो दाता शिवो भोक्ता शिवस्सर्वमिदं जगत्
शिवो जयति सर्वत्र यश्शिवस्सोहमेव तु  ३६
निवेद्यैवं सदादनं तु जपपूजां च भक्षितम्
प्रणम्य शिरसा देवं क्षमस्वेति विसर्जयेत्  ३७
सद्योजातेन मन्त्रेण संगुरा प्रणवेन तु
ध्यापयेत्प्रणवेनैव मनस्तन्मयतां श्रयेत्  ३८
एवं संपूजयेद्देवं नियतात्मा ++ कच्छिवम्
स याति परमं स्थानं अप्राप्यमकृतात्मभिः  ३९
इति स्वायं भुवे पूर्वसूत्रे शिवपूजाविधिपटलः  ४१

अथ मुद्रा प्रसिध्यर्थं  तत्तल्लक्षणमुच्यते
संज्ञात्वा सर्वमुद्राणां विधानफलमुच्यते  १
शोधनी कालकण्ठी च मुकुळी शशिकर्णिका
निष्ठुरा पद्ममुद्रा च नमस्कारमनोरथम्  २
शान्ता च लिंगमुद्रा च ध्वजाख्या वाहिनी तथा
गायत्री च तथा नेत्रं अस्त्रं चैव प्रतिष्ठितम्  ३
पाणिमूले तु सस्वेशे मन्त्रद्देनदपासुरः
कृत्वैकं ताडयेत्पाणिं मुद्रेयं शोधनी भवेत्  ४
कृत्वा मुष्टिं ततोत्ताने तदानंगुलयोजयेत्
अंगुष्ठाग्रे तु संलग्ने कालकण्ठी तु दर्शयेत्  ५
द्वौ हस्तावेकतः कृत्वा मध्ये तु सुषिरं तयोः

सरो मुकुळीकारा मुकुळीं तु प्रदर्शयेत् ६
तर्जन्यौ कुंचितौ कृत्वा तयोरग्रे निधापयेत्
द्वयोरंगुष्ठशिरसि शेषास्तूर्जवो घनाः ७
कृत्वा च मणिबन्धं तु वामसह्यं तथा न्यसेत्
मुद्रेयं शशिकर्णी तु विज्ञेया लोककर्मणि ८
हस्ताभ्यामंजलिं कृत्वा द्वे मुष्टी साधयेत्सुधीः
पूर्वोक्तमुकुळी या तु हृद्देशे निस्सृतांगुळिः ९
साकोशकमलाकारं पद्ममुद्रां प्रदर्शयेत्
सकलांगुलिसंलग्नौ सहौ हृद्देशमाश्रितौ १०
सर्वेषां सहिते कार्ये वामांगुष्ठनिपीडितम्
विधिते हस्तयोः कार्यं उत्ताने तु कनिष्ठिके ११
तयोर्वामे बहिर्ज्ञेया मान्ते मध्यमेऽपि च
कुंचितेनामिकाग्रं च स्वस्वपाणितलोच्छ्रिते १२
देशिन्यौ प्रसितौ कृत्वा तयोरग्रेन योजयेत्
अंगुष्ठमूलपूसमौ तयोरेवान्यकुंचितौ १३
मनोरमेति सा ख्याता शिवसायुज्य दायिका
तर्जन्यंगुष्ठलग्नाग्रं शान्तेयं संप्रकीर्तिता १४
स्थापने सर्वमन्त्राणां प्रयोक्तव्या विचक्षणैः
शान्तं बध्वा क्षिते हावं अंगुष्ठं तुमधोमुखम् १५
वेष्टयेद्दक्षिणांगुष्ठं वामांगुष्ठतलेन तु
वामांगुळिभिस्तं सव्यं उत्कृष्टं अ वेष्टयेत्ततः १६
ध्वजमुद्रासमालेख्या सम्यग्योज्या च कर्मणि
हस्ताभ्यामंजलिं कृत्वा कनिष्ठांगुळिपर्वयोः १७
अंगुष्ठौ स्थापयेत्तेषां मुद्राणां वाहिनी ह्ययम्
अन्योन्यान्तर्गतान्सर्वान् करपृष्ठाग्रयोच्छ्रितः १८
अंगुष्ठांगुळयः कुर्यात् सुषिरं च करान्तरे

पूजा कर्मणि गायत्रीं गायत्र्यन्ताः प्रयोजयेत् १९
नेत्रे नेत्रेणि नेत्रस्य शान्तं वाधोमुखी भवेत्
द्विमुष्टिं सहितं कृत्वा शीघ्रं हस्तौ प्रसारयेत् २०
हस्तमुद्रेति विख्याता सर्वेषां तु भयंकरी
इति स्वायंभुवे सूत्रसंग्रहे पूर्वसूत्रे मुद्रालक्षणपटलः ४२

अथ वक्ष्ये विशेषेण शिवरात्रिविधिक्रमम्
सर्वमासेषु कर्तव्यं माघमासे प्रशस्यते १
कृतत्रेतायुगे चैव द्वापरे च कलौ युगे
युगे युगे तु संपूज्य कृते किं +++ यजेत् २
त्रेतायां विघ्नकृत्पूज्यो द्वापरे चाच्युतो यजेत्
ब्रह्मेन्द्रमृषिभिश्चैवं कलौ संपूजितो हरिः ३
शिवरात्रिसमुद्दिष्टः तद्भेदः किं कथं प्रभो
एतच्चतुर्विधं प्रोक्तं पक्षसिद्धान्तमेव हि ४
पूर्वसिद्धान्तमेवं स्यात् पक्षान्तश्रद्धमेव हि
परसिद्धान्तमेवं हि तद्भेदं शृणु सुव्रत ५
माघमासे द्विपक्षे तु अपरे व्रतमाचरेत्
उदयादि समारभ्य दीपान्तं च त्रयोदशी ६
अस्तमयं समारभ्य उदयान्तं चतुर्दशी
तद्रात्रिः शिवरात्रिः स्याद् उत्तमोत्तममिष्यते ७
एतत्तु पक्षसिद्धान्तं मम प्रीतिकरं भवेत्
अस्तमयं समारभ्य यामत्रयं चतुर्दशी ८
शेषं पर्वयुतं चेत्तु शिवरात्रिरिति स्मृतम्
तद्रात्रिः शिवरात्रिः स्यात् शिवपूजां समारभेत् ९
पूर्वसिद्धान्तमेवं हि सर्वदोषहरं भवेत्
अस्तमयं समारभ्य यावद्विंशति नाडिका १०

पश्चात्पर्वयुतं चेत्तु दोषयुक्ता न संभवेत्
तद्रात्रिः शिवरात्रिः स्यात् शिवपूजां समारभेत् ११
एवं सिद्धान्तपक्षं हि बालानामभिवृद्धये
दीपकालं समारभ्य विंशत्यूना चतुर्दशी १२
तद्रात्री सकला प्रोक्ता पर्वदोषो न विद्यते
तद्रात्रिः शिवरात्रिः स्यात् शिवपूजां समारभेत् १३
परसिद्धान्तमेवं हि सर्वप्राणिहितावहम्
यामद्वयं च भूता च पर्वयामद्वयं भवेत् १४
शिवपूजा न कर्तव्या सर्वदोषकरा भवेत्
रात्रौ चतुर्षु यामेषु पूजा नियम उच्यते १५
प्रथमे तत्र यामे तु द्वाराद्यामन्त्रणान्तकम्
नित्यार्चनं समाप्याथ सायमुपात्रमेकवत् १६
तदन्ते देवदेवेशं गव्यादिस्नपनान्तकम्
अभिषिच्य समभ्यर्च्य पंचावरणसंयुतम् १७
नित्यनैमित्तिकाख्यं च नैवेद्यं विनिवेद्य च
होमबल्यादिकं सर्वं यथापूर्वं समाचरेत् १८
द्वितीययामे +++++ पूजासमन्वितम्
विशेषयजनं कार्यं भोगस्थानार्चनं ततः १९
निर्वत्य तत्क्षणाद्देवं शिबिकामधिरोप्य च
मूललिंगे समायोज्य तृतीयप्रहरार्चनम् २०
कल्पयित्व यथा न्यायं चतुर्थे प्रहरे पुनः
अरुणोदयकालार्चायुक्तं यजनमाचरेत् २१
प्रतियामं च चण्डेशं क्षेत्रपालं च पूजयेत्
तद्दिनात्पूर्वरात्रे तु बलिपात्राधिवासयेत् २२
अधिवासंक्रमेणैव कारयेद्देशिकोत्तमः
विघ्नेशं पूजयेत्पूर्वं सौरपूजामतः परम् २३

पूर्वे तु स्नपनं प्रोक्तं अष्टोत्तरशतं भवेत्
पंचगव्यं बिल्वपत्रं मुद्गान्नं पूर्वयामके २४
द्वितीये स्नपनं प्रोक्तं पंचाशत्कलशं भवेत्
पनं चात्कारबिन्दं पायसान्नं द्वितीयके २५
तृतीये स्नपनं चैव पंचविंशति संख्यकम्
मधुजनादि समायुक्तं कृसरान्नं निवेदयेत् २६
चतुर्थे स्नपनं किं तु भवेत्षोडशसंख्यकम्
इक्षुसारं तथा नन्द्या वर्तं गौर्वों निवेदयेत् २७
यामं प्रतिविशेषेण पंचबिल्वैः समर्चयेत्
परेया दधिघृतं चैव नाळिकेरफलं क्रमात् २८
रसवस्तुभिरन्यैश्च स्नपयेत्परमेश्वरम्
++ वस्त्रैरलंकृत्य सर्वपुष्पैः समर्चयेत् २९
शुद्धान्नं व्यंजनोपेतं यामं प्रति निवेदयेत्
यामं प्रति विशेषेण बलिहोमं समाचरेत् ३०
पूजाविधानमेवं स्यात् तिथिनिर्णय उच्यते
त्रयोदश्यस्तके पूर्वे चतसृष्वेव नाडिषु ३१
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत्
प्रदोषस्य विनिर्ग्राह्या शिवरात्रिश्चतुर्दशी ३२
रात्रौ जागरणं यस्मात् तस्मात् मुपोषयेत्
अर्धरात्रियुतं यत्र माघकृष्णाचतुर्दशी ३३
शिवरात्रिव्रतं तत्र सोश्वमेधफलं भवेत्
भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ३४
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा
माघकृष्णाचतुर्दश्यां आदिदेवो महानिशि ३५
शिवलिंगान्तयोद्भूता कोटिसूर्यसमप्रभम्
तत्कालव्यापिनी सा स्यात् शिवरात्रिव्रते तिथिः ३६

अर्धरात्रादतश्चोर्ध्वं युक्ता यत्र चतुर्दशी
तत्त्रिधा चैव कुर्वीत शिवरात्रिं व्रतं प्रति ३७
अर्धरात्रादधश्चोर्ध्वं वियुक्ता या चतुर्दशी
नैव तत्र व्रतं कुर्याद् आयुरैश्वर्यहानितः ३८
पूर्वेद्युरपरेद्युर्वा निशीथे तु चतुर्दशी
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः ३९
लिंगाविर्भावकाले तु व्याप्ता ग्राह्या चतुर्दशी
तदूर्ध्वं योन्यथा भूता सा कार्या व्रतिभिस्सदा ४०
अमावास्यायुता वापि त्रयोदश्या युतापि वा
चतुर्दश्यधिका रात्रिः शिवरात्रिरिति स्मृता ४१
कृष्णाष्टमी च भूता च निशाद्वयगताधिका
ग्राह्या रात्र्योः समासे तु पूर्वस्यां व्रतमाचरेत् ४२
शिवरात्रिसमं पुण्यं न भूतं न भविष्यति ४३
इति स्वायंभुवे शिवरात्रिपूजाविधिपटलः ४३

अथ वक्ष्ये विशेषेण कृत्तिकादीपलक्षणम्
कार्तिकाख्ये तु मासे तु तदृक्षे तिथिसंयुते १
उत्तमादित्रयं प्रोक्तं तद्भेदं शृणु सुव्रत
तन्मासे चैव कर्तव्यं योगयुक्तविशेषतः २
एकमासे द्विपक्षे तु पूर्णयुक्तं समाचरेत्
तस्मिन्पर्वणि तत्रैव कृत्तिकर्क्षयुतं यदि ३
तत्र दीपं प्रकर्तव्यं विशेषं किंचिदस्ति हि
पर्वयुक्तं विना चेत्तु पूर्वपक्षं समाचरेत् ४
वारद्वयगते ऋक्षे तिथिर्वा योगसंभवेत्
पर्वयुक्तं विना द्वौ तु अपरे दीपमाचरेत् ५
पर्वऋक्षसमायुक्तं उत्तमं तु प्रशस्यते

मध्यमं चैव विज्ञेयं चतुर्थं चाधमं भवेत् ६
एवं क्रमेण कर्तव्यं धनधान्याभिवृद्धिदम्
सामान्यमुत्तमं प्रोक्तं सर्वप्राणिहितावहम् ७
आदित्यै गळिते चाग्निनक्षत्रे च हरिद्रके
दीपारोहं प्रकर्तव्यं वारापेक्षा न विद्यते ८
रव्यस्तमयवेळायां दीपारोहणमाचरेत्
कर्तुरष्टमराश्यादि लग्नदोषनिरीक्षणम् ९
विष्टिवैनाशिकर्क्षादि प्रोक्षणं नात्र संमतम्
तद्दिनात्पूर्वदिवसे अंकुरं पूर्ववत्कुरु १०
पूर्वरात्रे विशेषेण अधिवासनमारभेत्
मण्डपस्यैशदिग्भागे पूर्वे वा चोत्तरेऽपि वा ११
गोमयालेपनं कृत्वा वितानाद्यैरलंकृता
रजनीपिष्टचूर्णं च नानाचित्रं च लेखयेत् १२
स्नानान्ते च निवेद्यान्ते पूजान्ते वा सुराशिके
देवदेवं च विज्ञाप्य विघ्नेशं पूजयेद्बुधः १३
पुण्याहं वाचयेत्तत्र स्थण्डिलं कारयेत्सुधीः
तल्लक्षणं पुरा प्रोक्तं कल्पयेत्तु विचक्षणः १४
षडूर्ध्वासनं तु संपूज्य नवपात्राणि विन्यसेत्
पंचपात्राण्यथैकं वा यथा वित्तानुसारतः १५
गोघृतैस्तान्समापूर्य वर्तिभिश्च समन्वितम्
ततो होमं प्रकर्तव्यं कुण्डे वा स्थण्डिलेऽपि वा १६
नवाग्निं वाथ पंचाग्निं एकाग्निमथवा चरेत्
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् १७
समिदाजचरुं लाजान् सर्षपांश्च यवांस्तिलान्
सक्तुमुद्गैश्च कर्तव्यं षडंगैर्ब्रह्ममन्त्रकैः १८
एतैर्द्रव्यैः क्रमेणैव अष्टोत्तरशतं क्रमात्

द्रव्यान्ते व्याहृतिं हुत्वा द्रव्यैरेवं पृथक्पृथक् १९
मूलमन्त्रेण कर्तव्यं पूर्णाहुतिमथाचरेत्
तदग्नौ रोपयेद्दीपान् मध्यमादि यथाक्रमम् २०
ईशानाद्युत्तरान्तं तु दीपमारोपयेत्ततः
तत्रैव सर्वदीपांश्च प्रधानाभिमुखान्न्यसेत् २१
तत्प्रधानं तु पूर्वास्यं ऐशान्याभिमुखं तु वा
वामादिशक्तयश्चाष्टौ यजेन्मध्ये मनोन्मनीम् २२
ब्रह्माद्यान्पंचदीपे तु शिवदीपे शिवं यजेत्
पूजयेद्गन्धपुष्पाद्यैः +++ धूपदीपकैः २३
तदन्ते कौतुकं बध्वा दीपपात्रस्य वक्त्रके
एवं रात्रौ प्रकर्तव्यं अग्निबीजं जपेद्बुधः २४
प्रातः स्नानादिकं कृत्वा आचार्यः सकळीकृतः
नित्यसंध्यावसाने तु शिवपूजां विशेषतः २५
गणेशं पूजयेत्पूर्वं पुण्याहं वाचयेत्ततः
पंचगव्यं च संस्थाप्य पंचामृतं च साधयेत् २६
फलानि स्नानवस्तूनि स्नपनं साधयेद्बुधः
द्वारं संपूज्य विधिवत् लिंगशुद्धिं समाचरेत् २७
पंचामृतेन संस्नाप्य पंचब्रह्ममनुस्मरन्
तदन्ते मन्त्रपुष्पाणि मंत्रान्नं च निवेदयेत् २८
सकळादीनि बेराणि स्नानाद्यैः पूजयेद्बुधः
प्रभूतहविषं दद्यात् पूर्वोक्तविधिना सह २९
शान्तिहोमं च कर्तव्यं उपचाराणि पूर्ववत्
सायंकाले समारभ्य दीपारोहणमाचरेत् ३०
वृषपृष्ठे वृषाग्रे वा पीठाग्रे वा पुरोऽपि वा
गोपुराग्रेऽथ पूर्वे वा पश्चिमे सालि मध्यमे ३१
दण्डस्थानमिति प्रोक्तं दण्डद्रुममथोच्यते

क्रमुकं नाळिकेरं च चम्पकं चन्दनं तथा ३२
वंशं वाऽथार्जुनी वापि तिन्त्रिणी शिंशुपा तथा
मयूरं वकुलं वापि ताळस्तम्बमथापि वा ३३
दीपदण्डमिति प्रोक्तं सारद्रुममथापि वा
अथवान्यप्रकारेण अस्तमानमथाचरेत् ३४
नवहस्तं समारभ्य द्विद्विहस्तविवर्धनात्
यावद्विंशतिहस्तान्तं उत्तमं मध्यमाधमम् ३५
पक्षांगुलं समारभ्य द्विद्व्यंगुलविवर्धनात्
चत्वारिंशांगुलं यावद् दण्डनाहं क्रमेण तु ३६
तन्मूले मुनिभागेन एकांशमग्रहीनकम्
दीपकीलत्रयं दण्डे योजयेच्चक्रवत्क्रमात् ३७
तद्दण्डं वसुधा कृत्वा एकांशं भूमिवेशनम्
स्थापयेद्दीपदण्डं तु तन्मूले वेदिकां कुरु ३८
एकांशं वेदिकोत्सेधं त्रिमेखलसमन्वितम्
विस्तारं तत्समोपेतं एकांगुलिविवर्धनात् ३९
अथवा वेदिकां कुर्याद् वेदिलक्षणवत्कुरु
क्षुद्रदण्डे प्रकर्तव्यं महादण्डे विशेषतः ४०
पृथिवीं खानयेत्तत्र दण्डस्थैर्यानुमानतः
तत्र वेदीं विना कार्या धिष्ण्यं चैव प्रकल्पयेत् ४१
अग्रदण्डे विशेषेण यन्त्रदीपं विसर्जयेत्
मूलचक्रं समाश्रित्य यावच्चक्रान्तरं विना ४२
पूर्वोक्तदीपसंयुक्तं कर्तव्यं शक्तिना सह
घटिकां बन्धयेद्यत्र वृत्तावृत्तं यथा तथा ४३
पूर्वे वा दक्षिणे वापि यन्त्रद्वारं प्रकल्पयेत्
एकद्वित्रि च हस्तं वा द्वारविस्तारमीरितम् ४४
विस्तारद्विगुणायामं क्रमेण विधिवत्ततः

बन्धकीलं तु दराडाग्रे न्यस्त्वा हस्तप्रमाणतः ४५
दराडाग्रे दक्षिणे वापि मराडपं कारयेत्सुधीः
कूटं वापि प्रपां कुर्यात् सप्तपंचत्रिहस्तकम् ४६
गोमयालेपेनं कृत्वा पंचचूर्णैर्विचित्रयेत्
वितानदर्भमालाद्यैः श्चतुस्तोरणभूषितम् ४७
स्थरिडलं हस्तमात्रेण निर्दोषैः सिकतैः सितैः
अग्न्याधानादिकं सर्वं अग्निकार्योक्तवर्त्मना ४८
लवणं निम्बपत्रं च कार्पासं बीजमेव च
नेत्रमन्त्रमनुस्मृत्य अष्टोत्तरशतं हुनेत् ४९
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
प्रायश्चित्तार्थकं कृत्वा दीपस्थालीं नयेत्ततः ५०
प्रस्थपूर्णघृतेनैव फुत्तलीं पात्रमध्यमे
वह्निबीजं समादाय तद्दीपे योजयेत्सुधीः ५१
देवदेवं च विज्ञाप्य तद्दीपं पुत्तलीं नयेत्
वामादिशक्तयश्चाष्टौ तद्दीपे योजयेत् क्रमात् ५२
तद्दीपं प्रतिमां तत्र आलयं तु प्रदक्षिणम्
तं मराडपं प्रविश्याथ प्रतिमां पूजयेत्ततः ५३
नृत्तगेयसमायुक्तं सर्ववाद्यसमायुतम्
कुरवशब्दसमायुक्तं जयशब्दसमाकुलम् ५४
शंखध्वनिसमायुक्तं स्वस्तिमंगळवाचकैः
आदित्ये गळिते काले दीपारोहणमाचरेत् ५५
गृहस्थो ब्रह्मचारी वा तद्दीपं गृह्य पाणिना
दराडे सुशीघ्रमारोप्य चाग्रे तूत्तरदिङ्मुखः ५६
किलमध्ये न्यसेद्धीमान् दीपपात्रेषु योजयेत्
अग्रादिमूलपर्यन्तं ज्वालामालादिभूषितम् ५७
ध्यायेत्तज्ज्योतिपद्मं तु लिंगं पुराणपूर्वकम्

तत्काले त्वग्निकुराडानि दर्भैस्सर्वाराययशेषकम्  ५८
पारोहराकर्ता च वस्त्रयुग्मेन पादयेत्
प्रासादे देवताः सर्वा दीपैश्चैव विभूषयेत्  ५९
पालिकेषु कपोतेषु महानासी तलं प्रति
प्रासादमूर्ध्निदेशे तु मराडपे गोपुरे तथा  ६०
परिवारालये चैव बाह्ये बाह्यन्तरेऽपि वा
प्रासादे सर्वयामेषु दीपं सर्वत्र योजयेत्  ६१
सायरक्षावसाने तु निशि पूजां तु कारयेत्
शीतकुंभेन संस्नाप्य शिवपूजां विशेषतः  ६२
पृथुकं लाजापूपं च देवदेवं निवेदयेत्
सर्वान्देवान्निवेद्याथ नित्यपूजां पुरोक्तवत्  ६३
अथवान्यप्रकारेण दीपारोहणमुच्यते
दीपदराडप्रमाणं च ++ पुरोक्तवत्  ६४
अंकुरं चाधिवासं च मराडपं च विसर्जयेत्
रव्यस्तमयकालायां तदृक्षे दीपमाचरेत्  ६५
विघ्नेशं पूजयेत्पूर्वं  पुरायाहं तत्र वाचयेत्
दीपस्थालीं समादाय घृतं प्रस्थेन पूरयेत्  ६६
पुत्तलीघृतमध्ये स्यात् शिवदीपं च रोपयेत्
स्वस्तिवाचकसंयुक्तं कुरवशब्दसमन्वितम्  ६७
सर्ववाद्यसमायुक्तं जयशब्दसमन्वितम्
परिचारैस्समादाय आलयं तु प्रदक्षिणम्  ६८
दराडाग्रे स्थरिडलं कृत्वा दीपं तस्योपरि न्यसेत्
गणेशं पूजयेत्तत्र संकल्पमिति बुद्धिमान्  ६९
पुरायाहं वाचयेत्तत्र दराडशुद्धिं समाचरेत्
रक्षाबन्धं च कर्तव्यं सदाशिवं यजेत्ततः  ७०
वामादिशक्तयश्चाष्टौ तन्मूले समपूजयेत्

दीपमारोपयेद्धीमान् पूर्वे वा चोत्तरेऽपि वा ७१
सायरक्षां समारभ्य पूर्ववत्पूजनं कुरु
पृथुकं दापयेच्छम्भोः सर्वभक्ताय दापयेत् ७२
एवं कृते सर्वपुरायं सर्वसस्यविवर्धनम्
राष्ट्रग्रामनृपाणां च पुत्रदारसमृद्धिदम् ७३
सर्वदेवप्रियार्थं स्यात् प्रियं पाताळवासिनाम्
कृत्तिकादीपमेवं तु तन्निषेयं च कथ्यते ७४
इति स्वायंभुवे कृत्तिकादीपपटलः ४४

द्विद्विचक्रबाह्यविस्ताराः षट्सप्ताष्टवितस्तयः
चक्रनाभिद्वयान्तर्हि छाया मोक्षोत्तरस्य तु १
हारबाह्यं च तावत्स्यात् विस्तारार्धाधिकायितम्
चतुस्त्रिद्व्यंगुलोत्सेध बाहल्याकभं च भारकाम् २
सप्तवार च तन्त्र + व्यासोत्सेधश्च पूर्ववत्
आयामानुगतास्तिर्यक् कल्पकंपं दृढी कृता ३
मध्यभारोपरिकृतो मध्यनिर्गमनाग्रता
ललाटान्त्रिहस्तं दीर्घं चोर्ध्वाग्रं मुकुळाकृतिः ४
मध्यागार इति प्रोक्तं कुबेरे युगभारभाक्
भारोपर्यं गुलघनाः फलकाः प्रस्तरोभवेत् ५
अक्षमक्षोत्तरं चक्रं पटं पारोपधानकम्
उत्सेधात्पंचषरामात्रं बाहल्यद्विद्विमात्रकम् ६
अष्टादशांगुलं दैर्घ्यं पार्श्वे पारोपधारकम्
पोतकारससंयुक्तं अधः पट्टं दृढीकृतम् ७
अक्षोर्ध्वोत्तरबाहुल्याद् अधच्छिद्रं न्यमध्यमम्
तदधस्त्वक्षरक्षार्थं पार्श्वयोर्बन्धनं भवेत् ८
उपधानविशालेन तुल्यं व्यासार्धनीव्रतम्

अक्षस्यावशिदैर्घ्याढ्यं दारुजं चतुरश्रकम् ९
अधः पंचकिलैश्चैव सशिखाभिर्द्रढी कृतम्
स्वार्ध्वबन्धो धुरः पादोत्सेधं चैकार्धमिष्यते १०
अक्षान्तरसमं चक्रविस्तारं परिकीर्तितम्
अनाभिर्दशांगुलोत्सेधोऽपितस्यायामवृत्तकम् ११
तत्पट्टस्याभिमध्ये तु द्वात्रिंशद्वात्रिरष्टकम्
अष्टाष्टकं तु वा तत्र युक्त्या संख्यासमन्वितम् १२
आराणां दूलमग्रं तु त्र्यंगुलं सार्धमात्रकम्
मूले तु पणवाकारं मूलेग्रे शिखरान्वितम् १३
पादोत्सेधत्रिभागैकभागं स्याच्चुळिकोच्छ्रयम्
अग्रे पार्श्वे च फलकं गुळिका पटिकान्तरे १४
पृष्ठे पंचांगुलोत्सेधं मुण्डपट्टिकया वृतम्
अन्तरे काणुपादस्य मुकुळाग्रान्तरान्तिकैः १५
भारे भारोपधाने चैवक्षो चाक्षोत्तरे तथा
कुबेर कूबरस्याग्रे त्वधः पश्चै कीलकैः १६
तत्तद्व्योग्यैश्च तत्स्थाने बन्धयेच्छभयेदपि
अक्षान्तेक्षान्तराच्चोर्ध्वे दारुकीलं प्रयोजयेत् १७
सर्वराजाधिपत्ये च राजयुद्धे महोत्सवे
मंगळे देवपूजायां रथारोहणमिष्यते १८
व्यासं द्वित्रिगुणायामं चतुश्चक्रसमन्वितम्
भारोभयध्युत्तरोपेतं त्यश्रस्व पादोत्तरान्वितम् १९
भूतैश्चतुष्पदाद्यैश्च नाटकाभिरलंकृतम्
चतुरष्टार्कसंख्याभिः स्तम्भैर्युक्तं समञ्चकम् २०
षट्सहार्धपंचपंचैव तालेन चरणोदया
सप्ततालं तु वा दैर्घ्यं त्रिचतुर्वा तु विस्तरम् २१
स्वस्वपादवशात्तत्र पूर्ववच्चोत्तरादिकम्

एकद्वित्रितलोपेतं एकं वाथ चतुर्मुखम् २२
++ मराडपो युक्तं वा सभा शाला शिरः क्रियः
त्रिचतुः पंचषट्सप्तहस्तं चान्तरमिष्यते २३
चक्रोत्सेधं चतुःपंच षट्तालं वाष्टनीव्रतम्
ग्रक्षे चाक्षोत्तरे चैव हारे हारोपधानके २४
यथोक्तविपुलोत्सधोर्दारकीलद्रढी कृतम्
एकद्वित्रितलोपेतं प्रासादवदलंकृतम् २५
सर्वालंकारसंयुक्तं रंशे तद्योजयेद्दृढम्
तथैव गळिमानीकं योजनीयं विचक्षणैः २६
इति मयमते यानाधिकाराध्यायः ४५

वक्ष्ये हं रथमानं च शृणुष्व निधनेश्वर
देवद्विजनृपाणां च योग्यमारोहणार्थकम् १
द्विचक्रादिदशान्तं च एकैकेन प्रवर्धनात्
द्विचक्रं शकटं चैव सर्वकार्यार्थसाधनम् २
त्रिचक्रं नित्यपूजायां यागादीनां चतुष्टयम्
युद्धे तु भूयतीनां च पंचचक्रं विधीयते ३
महोत्सवविशेषेण षट्सप्ताष्ट च चक्रयुक्
नवचक्रं विशेषेण दिग्युतार्थं तु भूपतेः ४
यथा योग्यं तथा कुर्यात् चक्रं तु शिल्पवित्तमः
चक्रसंख्या ततः प्रोक्ता विस्तारायाममुच्यते ५
वितस्तित्रयमारभ्य षट्षडंगुलवर्धनात्
एकादिदशवितस्त्यन्तं रथतारमिहोच्यते ६
त्रिहस्तं तु समारभ्य हस्तैकेन प्रवर्धनात्
नवहस्तान्तविस्तारं सप्तमानं रथे विदुः ७
गर्भगेहे विधेर्वानि समं त्रिपादमर्धकम्

पादाधिकं विशेषेण अर्धाधिकमथापि वा ८
द्वारोत्सेधसमं वापि पादं वार्धाधिकं तु वा
त्रिपादद्विगुणं चैव त्रिगुणान्तमुदीरितम् ९
उत्तमं मध्यमं चैव हीनं चेति त्रिभेदकम्
विस्तारमेवमाख्यातं आयामं तु विधीयते १०
तद्विस्तारसमाख्यापि पादमर्धाधिकं तु वा
त्रिपादद्विगुणं चैव त्रिगुणान्तमुदीरितम् ११
आयामत्रिविधभेदेन हारयामं विधीयते
विस्तारसममुत्सेधं मध्यमर्धं त्रिपादकम् १२
द्विगुणं चोच्छ्रितं तस्मात् त्रिगुणान्तमुदीरितम्
अक्षोत्तरादिस्थूप्यन्तं उपाधानादि चोक्तवत् १३
उपपीठादिकं चैव अधिष्ठानं विधीयते
अधिष्ठानादि चोत्सेधं पूर्वोक्तं द्विगुणोन्नतम् १४
भारसंख्यादिकं चैव द्विहारादिनवान्तकम्
त्र्यंगुलं समारभ्य एकैकांगुलवर्धनात् १५
दशांगुलावधिर्यावत् भारविस्तारमुच्यते
विस्तारात्तु विशेषेण एकैकांगुलकम्पनम् १६
अक्षसूत्राद्बहिः कुर्याद् हस्तं त्रिपादमेव वा
मुखे पृष्ठादिकं कुर्यात् तदग्रं बोधितोन्नतम् १७
मुखवामं विशेषेण भक्तिवामं तदेव हि
दरविस्तारतुल्यं स्यात् कुळीरांघ्रिविशालकम् १८
अक्षोरातदयं चैव कुळीरांघ्रिविशेषतः
भारो भारोत्तरे चैव कुळीरांघ्रिं नियोजयेत् १९
कुळीरांघ्रियुतं चैव अयः पट्टैर्द्रढी कृतम्
अयः पट्टैश्च कीलैश्च स्वाग्रकीलैर्द्रढी कृतम् २०
तिर्यग्भारं विशेषेण विस्तारार्धघनं भवेत्

त्र्यंगुलं समारभ्य एकैकांगुलवर्धनात् २१
षडंगुलान्तविस्तारं तुल्या सार्धघनं भवेत्
चिद्रभारमिति प्रोक्तं तदूर्ध्वे चोपधानकम् २२
उपधानत्रिवर्गं च अश्वपंक्तिभिरावृतम्
तदूर्ध्वे गजपंक्तिः स्याद् तदूर्ध्वे भूतपंक्तिकम् २३
वग्यमर्धार्धमेवोक्तं कपोतन्तु विशेषतः
भारोत्सेधं त्रिभागैकं अर्धं पादं कपोतकम् २४
उपधानानदयः पत्यं कपोतांशमुदाहृतम्
पट्टनाराचकीलैश्च स्वाग्रकीलैर्द्रढीकृतम् २५
एकद्वित्रिचतुष्पंचषट्सप्ताष्टकहस्तकम्
विस्तारभक्तिकं चैव आयामं तु विशेषतः २६
समपात्या तदायामं एकद्वित्रिक्रमाधिकम्
बाह्यमाभ्यन्तरं मध्यं मानसूत्रं विशेषतः २७
मध्यसूत्रं तु तच्छेष्ठं मानसूत्राद्विशेषतः
एकद्वित्रिचतुः पंच पंक्त्यात्येकतलं भवेत् २८
त्रिचतुः पंचषट्सप्त द्वितलं प्रविधीयते
षट्सप्तनागनन्दं च पंक्त्या च त्रितलो भवेत् २९
नवपत्येकादशं चैव द्वादशान्तं चतुस्तलम्
षडंगुलं समारभ्य एकैकांगुलवर्धनात् ३०
मनुमात्रान्तविस्तारं अक्षतारं तु तद्धनम्
अक्षायामं विशेषेण रथतारद्वयाधिकम् ३१
सार्धांशं तु त्रिपादं च अक्षायामं विधीयते
मानसूत्रां तु तद्बाह्ये नेम्यन्तरं विशेषतः ३२
षडंगुलं समारभ्य द्विद्व्यंगुलविवर्धनात्
चतुर्विंशांगुलान्तं स्याद् भारा नेम्यन्तरं भवेत् ३३
तदग्रे तु शिखायामं अंगुली तद्विशेषतः

वितस्त्येकं समारभ्य द्विद्व्यंगुलविवर्धनात्  ३४
द्वात्रिंशदंगुलं प्रोक्तं शिखायामं विधीयते
पार्श्वद्वयं समं तत्र अक्षायाममुदाहृतम्  ३५
रथतारसमं चैव नेम्या तारमिति स्मृतम्
अर्धं  त्रिपादहीनं वा विस्तारं तु विशेषतः  ३६
त्रिहस्तं तत्समारभ्य त्रित्र्यंगुलविवर्धनात्
पंचहस्तावधिर्यावत् एकोनत्रिंशदंशकम्  ३७
चक्रतारत्रिभागैकं कुक्षिविस्तारमेव च
पंचांशं द्व्यंशकं वापि सप्तांशे तु त्र्यंशकम्  ३८
नाभिवृत्तमलंकृत्य वृत्तं वा चतुरश्रकम्
कुक्षितारत्रिभागैकं नाभिविस्तारमिष्यते  ३९
वितस्त्येकं समारभ्य द्वित्र्यंगुलविवर्धनात्
एकहस्तं तु वृध्या तु चक्रमाभिघनं भवेत्  ४०
नाभितारं त्रिभागैकं पंचांशं द्व्यंशमेव वा
सप्तांशे तु चतुर्भागं चक्रभागघनं भवेत्  ४१
अथवा चक्रमार्गेण अंगुल्यं तु विशेषतः
त्र्यंगुलं समारभ्य एकैकांगुलवर्धनात्  ४२
नवांगुलावधिर्यावत् चक्रमार्गघनं भवेत्
कुक्षिविस्तारवलं पूर्णचन्द्रोपमं दृढम्  ४३
पार्श्वद्वयोर्विशेषेण कुक्षिवृत्तं दृढीकृतम्
अंगुलत्रिश्चतुर्भागैः नाभेर्घनं न पार्श्वयोः  ४४
नाभिवृत्तमलंकृत्य अयः पट्टैर्द्रढी कृतम्
कुक्षिताराद्यवक्षीणं शिखावृत्तसमन्वितम्  ४५
नाभिबह्याच्छिखायामं अंगुलेन विशेषतः
त्रिचतुः पंचषट्सप्तचाष्टनन्दांगुलं भवेत्  ४६
चक्रवृत्तं तु तद्द्रव्यैः पंचद्रव्यैस्तु योजयेत्

विस्तारं त्रिचतुर्भागं मध्ये कीलं तु योजयेत् ४७
निच्छिद्रं निर्व्रणं तत्र वर्जयेत्पूर्णचन्द्रवत्
अयः पट्टैस्तु वलयं महावृत्तेन बन्धयेत् ४८
नाभिबाह्यावृतं तत्र अर्कादीन्देवतान्न्यसेत्
कुम्भमध्यादिसंयुक्तं तत्तत्पार्श्वौ पुरोक्तवत् ४९
एवं चक्रमलंकृत्य पूर्वोक्तविधिमार्गतः
शान्तिकं पौष्ठिकं चैव जयदं चोद्गतं तथा ५०
सर्वकामिकमित्येते एवं नात्मा प्रकीर्तितम्
अधिष्ठानादि चोत्सेधं शान्तिकं तु विधीयते ५१
उपपीठादिचोत्सेधं पौष्टिकं समुदाहृतम्
उपधानादिस्थूप्यन्तं जयदं तदुदाहृतम् ५२
अक्षावधिविशेषेण स्थूप्यन्तं चाद्भुतं भवेत्
द्विगुणाद्यधिकं चैव सर्वकामिकमुच्यते ५३
विस्तारे सप्तभागं तु त्र्यंशोच्चं तु शान्तिकम्
विस्तारार्धं तदुत्सेधं पौष्टिकं तु विधीयते ५४
विस्तारस्य त्रिपादोच्चं जयदं समुदाहृतम्
विस्तारद्विगुणोत्सेधं अद्भुतं तु विधीयते ५५
द्विगुणादधिकोत्सेधं सर्वकाममिति स्मृतम्
शान्तिकं नित्यपूजायां पौष्टिकं यागकर्मणि ५६
जयदं नृपतेर्युद्धे अद्भुतं तु महोत्सवे
सार्वकामिकमित्युक्तं द्विद्विजे नृपतेर्भवेत् ५७
पूर्वोक्तविधिमार्गेण सर्वसिद्धिकरं परम्
अधिष्ठानादधस्तात्तु उपपीठं प्रयोजयेत् ५८
शोभार्थं च बलार्थं च उन्नतार्थं च योजयेत्
अधिष्ठानसमोच्चं वा पादमर्धं त्रिपादकम् ५९
द्विगुणोत्सेधमानं तु हीनं वाप्यधिकं नयेत्

उपपीठस्य चोत्सेधं षड्विंशदंशकं भवेत् ६०
उपानोच्चद्विभागेन पद्मोच्चं चैव तत्समम्
अर्धां शं याजनं चैव पद्ममर्धां शकं विदुः ६१
पट्टिकोच्च द्विभागेन अधः पद्मार्धमंशकम्
कर्णमर्धां शमित्युक्तं उत्तरं चैकभागया ६२
याजनं चार्धभागं स्यात् कपोतोच्चं द्विभागिकम्
आलिंगार्धं त्रिभागेन एकांशान्तरितं भवेत् ६३
द्विभागं प्रतिकोत्सेधं एकांशं प्रतियाजनम्
उपपीठस्य चोत्सेधं भद्रो भद्रमानकम् ६४
विस्तारं त्रिचतुः पंचेष्वेकांशं भद्रमुच्यते
मुखे पृष्ठे विशेषेण पश्चाद्द्वयसमं भवेत् ६५
तले तले विशेषेण भद्रो भद्रं तदुक्तवत्
उपभद्रान्वितं पूर्वं योजयेच्छिल्पवित्तमः ६६
अधिष्ठानस्य चोर्ध्वे तु नाटकान्तेषु योजयेत्
देवास्तदूर्ध्वे कर्तव्यं प्रस्तरान्ते विशेषतः ६७
भक्त्यन्तरेण चैवोक्तं महाकिलद्रढीकृतम्
एकद्वित्रिकिलं वाथ यथाबलवशान्ययेत् ६८
सिंहैश्च मकरैर्व्याळैः भूतैः पत्रादि शोभितम्
नृत्तगीतादिवाद्यैश्च उपपीठं विशेषतः ६९
उपपीठादिधिष्ठा निर्गमः कथ्यतेऽधुना
एकभक्तिविशालं वा त्रिभागं वार्धभक्तिकम् ७०
उपपीठांघ्रिमारभ्य अधिष्ठानविनिर्गमम्
अधिष्ठानोदयं चैव एकविंशतिभाजिते ७१
उपानोच्चद्विभागं स्याद् पद्ममभ्रंशकेन तु
कर्णमेकांशमित्युक्तं पद्मं पादसमन्वितम् ७२
सार्धां शं मुकुळोच्चं तु पादांशं पद्मतुंगकम्

तदूर्ध्वे वाजनं चार्धं बाणांशं कर्णमुच्यते ७३
एकांशमुत्तरं चैव वाजनं चार्धमेव वा
एकांशं कम्पमित्युक्तं ऊर्ध्ववाजनकं भवेत् ७४
द्व्यर्धां शं तु कपोतोच्चं आलिंगं पादमुच्यते
अर्धां शं तु समायुक्तं एकांशं प्रतिवाजनम् ७५
प्रतिवाजनमर्धां शं एवं कुर्याद्विचक्षणः
तदूर्ध्वे नाटकं प्रोक्तं गह्यमानं विधीयते ७६
नाटकोदयमेवं स्याद् एकविंशतिभाजिते
वेदिकोच्चं गुणांशं तु सार्धां शं पट्टिकोदयम् ७७
स्थूप्यंशं कण्ठमानं तु अर्धां शमुत्तरं भवेत्
ऊर्ध्ववाजनपादांशं तदूर्ध्वे पद्ममूर्ध्वकम् ७८
वाजनं पादमेवं स्याद् अर्धां शं तु कपोतकम्
पादमालिंगमेवं स्याद् अर्धां शमन्तरी भवेत् ७९
प्रतिरर्धेन भागेन वाजनं चार्धभागिकम्
तदूर्ध्वे वाजनं कार्यं अधिष्ठानसमोदयम् ८०
अर्धं त्रिपादमेवं तु अधिष्ठानवशान्नयेत्
देवासनोदयं गृह्य पंचदशांशकं गच्छेत् ८१
द्विभागं वेदिकोच्चं तु अष्टांशं कण्ठमानकम्
अर्धां शमुत्तरं चैव वाजनं पादमेव वा ८२
अर्धां शं पादमेवोक्तं ऊर्ध्वज्व निपादकम्
अर्धां शं तु कल्पोतं स्यात् पादमालिंगमेव च ८३
पादमन्तरितं चैव ++ पादं प्रतिकं भवेत्
ऊर्ध्ववाजनपादांशं देवासनमुदाहृतम् ८४
अतोत्सेधांशमानेन पंचविंशतिकं भजेत्
अधिष्ठानं युगांशं तु पादमष्टांशकं भवेत् ८५
त्र्यंशं मंचमानं स्यात् त्रिपादं वेदिकोदयम्

अर्धांशं गळमानं तु युगांशं शिखरोदयम् ८६
पदार्धं स्थूपिकामानं एकभूमिवशं न्यसेत्
द्विभूमिर्वा विशेषेण पंचत्रिंशतिकं भवेत् ८७
अधिष्ठानं युगांशं तु सप्तांशं पादतुंगकम्
गुणांशं मंचमानं स्यात् ऊर्ध्वपादं षडंशकम् ८८
द्विभागं प्रस्तरोत्सेधं अर्धांशं वेदिकोदयम्
अर्धांशं गळमानं तु बाणांशं शिखरोदयम् ८९
द्विभागं स्थूपिकामानं द्वितलं सर्वसिद्धिदम्
यवदुत्सेधमानं स्यात् ++++++ ९०
मसूकरं युगांशं तु पादं सप्तांशमीरितम्
प्रस्तरोच्चं त्र्यंशं स्यात् षडंशं चरणोदयम् ९१
द्विपादं मंचमानं तु युगार्धमूर्ध्वपादकम्
सार्धांशमूर्ध्वमंचोच्चं अर्धांशं वेदिकोदयम् ९२
सार्धांशं गळमानं तु युगांशं शिखरोदयम्
सत्रिपादांशकं स्थूपीमानान्तं त्रितलादिषु ९३
पंचपंचविधं चैव नवाधिकं भजेत्तदा
धरातलं युगांशं तु अष्टांशं पादतुंगकम् ९४
प्रस्तरोच्चं त्रिधार्धांशं अष्टांशं चांघ्रितुंगकम्
द्व्यर्धांशं मंचमानं तु षडंशं चरणोदयम् ९५
तदूर्ध्वे प्रस्तरं कुर्यात् व्यासमेवं विधीयते
युगार्धमूर्ध्वपादं तु सार्धांशं मंचमानकम् ९६
एकांशं वेदिकोच्चं तु गुणांशं गळमानकम्
त्र्यंशार्धं शिखरोत्सेधं द्विभागं स्थूपिकोदयम् ९७
चतुस्तले विधेयानि रथमह्यामृदं परम्
प्रासादमानवत्कुर्यात् यथालंकारशोभितम् ९८
अधिष्ठानोपरिष्टात्तु पुरतो नाळसंस्थितम्

नावोत्सेधं विशेषेण तालमानैर्विधीयते ९९
त्रिविधं तत्समारभ्य वितस्त्येकविवर्धनात्
सप्ताष्टान्तवितस्त्यन्तं उत्सेधं परिकीर्तितम् १००
पात्रचित्रादिकं चैव रत्नां गादिविभूषितम्
उत्सेधं नवपक्त्यंशे एकांशं मूलविस्तृतम् १०१
मूलतारं त्रिभागैकं अग्रतारमिति स्मृतम्
मूलादग्रं क्रमात्क्षीणं यथायुक्तिवशं नयेत् १०२
त्रिपद्मशोभितं कुर्यात् तदग्रे मुकुळा कृतिम्
अधिष्ठानाद्युपानादि +++++++++
+++++++++++ एकचित्तकभागिका
पुरतो मण्डपं कुर्याद् भद्रं भद्राभिशोभितम् १०३
तदूर्ध्वे सारथिं कुर्याद् यथाशोभाविशेषतः
ऋषभध्वजमेवं वा गरुडध्वजसंनिभम् १०४
भूपतिना ध्वजं चैव तत्तध्वजेन संयुतम्
ध्वजदण्डं पुरः स्थाप्य वस्त्रमाल्यैर्विभूषितम् १०५
तले तले विमानानि कूटकोष्ठादिशोभितम्
अधिष्ठानोर्ध्वपादेन तालमानैर्विधीयते १०६
एवं द्वित्रिचतुष्पंच षट्सप्ताष्टतालमानकम्
एकादिसप्तहस्तान्त हस्तमानवशोच्यते १०७
तत्पादाधिकमेवोक्तं योजयेत्तु विचक्षणः
सप्ताष्टनन्दपक्त्यन्तं यथा युक्तिवशं नयेत् १०८
चतुस्तम्भसमायुक्तं षोडशस्तम्भसंयुतम्
द्वात्रिंशत्स्तंभसंयुक्तं चतुष्षष्ट्या प्रसंयुतम् १०९
पादोच्चे पंक्तिनन्दाष्ट एकांशं वेदिकोदयम्
वेदिकोच्चं तु सप्तांशे गुणांशं गळमानकम् ११०
एकांशं कम्पमित्युक्तं द्विभागं वेदिकोदयम्

ऊर्ध्ववाजनमेकांशं वेदिकांशमुदीरितम्  १११
पादायामं त्रिभागैकं पंचभागैर्द्विभागिकम्
कुम्भमराड्यादिसंयुक्तं गज्यमानं तु पूर्ववत्  ११२
पंचदराडायतं चैव चतुर्दराडायतं भवेत्
त्रिदराडायतमेवोक्तं उत्तमं मध्यमाधमम्  ११३
भानुरुद्रदशांशे तु नन्दनागांगकैर्युतम्
एकांशमग्रहीनं तु दराडस्याग्रविशालकम्  ११४
चतुर्द्वारसमायुक्तं द्वारपालैश्च संयुतम्
चतुस्तोरणसंयुक्तं सर्वालंकारशोभितम्  ११५
श्वेतैरक्तैश्च पीतैश्च मुक्तैः श्यामैश्च वर्तितम्
स्तम्भप्रच्छादनं चैव मुक्तादामैरलंकृतम्  ११६
नानावस्त्रैरलंकृत्य नानालंकारशोभितम्
दर्पणं चामरं चैव छत्रं चेदिदि संयुतम्  ११७
नानाध्वजसमायुक्तं तले तले न्यसेत्क्रमात्
शालाः कालार्जुनो निम्बो मधूककिरिणी तथा  ११८
व्याघ्रं च पनसं चैव नागपुन्नागमेव च
खदिरं चैव पु + री च +++  तिंत्रिणी  ११९
वृक्षाः स्वेन समाख्यानां आयादीत्युच्यते शुभम्
लिंगबेरवशात्तत्र भारनान्त तथोच्छ्रये  १२०
समं वा द्विगुणं वापि गर्भगेहवशादिभिः
द्वारोच्चवशतो वापि अर्कादि मानवद्भवेत्  १२१
रविविस्तारमाथान्तं ++ नामवति क्रमात्
आयादिशुभषष्ठं च रथोत्सेधे च शान्तये  १२२
आयादि षट्च्छुभैर्युक्तं राजराष्ट्रशुभं भवेत्
अनुक्तमत्र यत्सर्वं  तत्तच्छोभावशान्नयेत्  १२३
अन्यशास्त्रेषु संगृह्य योजयेत्तु विशेषतः

इति स्वायंभुवे गौतममते यानसंहितायां रथमानं नाम
सप्तत्रिंशोध्यायः ४६

अथ वक्ष्ये विशेषेण संकोचविधिरुच्यते
मण्डूकसर्पमेवं तु भृंगिपुष्पं च संभवेत् १
आर्षादिषु च लिंगेषु मण्डूकसर्पसंग्रहम्
प्रमादाद्भृंगिपुष्पं च नवीकर पूर्वकरम् २
स्वायंभुवे विशेषेण मूलसंकोचमाचरेत्
उत्तमं चरराशिः स्यान्मध्यमं भवराशिकम् ३
भटाशि शुभसंयुक्तं राक्षादीनां न विद्यते
चरस्थिरोभयं चैव मेषाद्याश्च पुनः पुनः ४
द्वारं चाहं च गर्भं च त्रित्रिमेषादिसंज्ञिकम्
पूर्वोक्तलक्षणोपेतं मण्डपं कारयेत्सुधीः ५
अंकुरार्पणकार्यं तु पूर्वमेवक्रमेण तु
स्थापनादिवसात्पूर्वे रात्रौ चैव विशेषतः ६
मूलाग्रे तु विशेषेण पूर्ववत्स्थण्डिले कृते
कुम्भान्संस्थाप्य विधिवद्विधिना देशिकोत्तमः ७
मूललिंगं समाराध्य गन्धाद्यैर्भूषणैस्सह
प्रस्तुत्य देवदेवेशं ककुकस्समनुज्ञया ८
एकमासं समाराध्य अब्दद्वयसमासिते
ष्वन्तरेन वित्वानां पुनः स्थापनयाद्यहि ९
इति विज्ञाप्य कर्ता तद् देशिकेन सहैव तु
लिंगाद्देवं समावाह्य लिंगमध्ये तु विन्यसेत् १०
पीठाद्देवीं समावाह्य मध्यमे वर्धनीं न्यसेत्
तदग्रे होमकर्मार्थं स्थण्डिलं सिकतैः शुभैः ११
अग्न्याधानादिकं सर्वं प्रागुक्तविधिना चरेत्

मूलेनैव तु मन्त्रेण आषाढ्या समिधा हुनेत्  १२
घृतं घृतेन मन्त्रेण घृतमन्नं तु वर्मणा
प्रत्येकं शतमर्धं वा तदर्धं वापि होमयेत्  १३
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिमथाचरेत्
वारैरंगारकाद्यैश्च नक्षत्रैस्तुरगादिभिः  १४
मेषाद्यैर्मासिकैश्चैव तिथिभिः प्रथमादिभिः
जुहुयात्सप्ततः पश्चात् यावत्कालक्षणार्हकम्  १५
एतेष्वन्धतदग्नौ तु क्षणहोममिति स्मृतम्
क्रमाभानुद्धृत्य ++ पूर्वोक्तभूषणैस्सह देशिकः  १६
संस्थाप्य वेदिकायां तु सर्वं पूर्ववदाचरेत्
सुदृढं पंचरं स्थाप्य पंजरस्थाय संभवेत्  १७
मन्त्रन्यासं च कर्तव्यं कुम्भान्पूजान्हृदि न्यसेत्
विद्येशादीनि कुम्भानि तत्तत्स्थानेऽभिषेचयेत्  १८
मन्त्रपुष्पं तदन्ते तु पायसं च निवेदयेत्
स्थापनं शान्तिहोमं च कारयेद्विधिपूर्वकम्  १९
महाहविर्निवेद्याथ तोषयेत्परमेश्वरम्
शिल्पिकर्मावसानान्तं यथाविधिपुरस्सरम्  २०
दिनं प्रतिविशेषेण नवकं शान्तिहोमकम्
एवं क्रमेण कर्तव्यं कारयेत्तु विचक्षणः  २१
पंजरस्तु विसृज्याथ अन्ये संप्रोक्षणं कुरु
मूलसंकोचमित्युक्तं बालस्थापनमाचरेत्  २२
इति स्वायंभुवे प्रतिष्ठातन्त्रे मूलसंकोचविधिपटलः  ४७

स्वायम्भुवम्
विघ्नेशार्चनै
शुभमस्तु

अथातः संप्रवक्ष्यामि विघ्नेशयजनं परम्
भुक्तिमुक्तिप्रदं नृणां पुत्रपौत्रविवर्धनम् १
ग्रामवृद्धिकरं पुण्यं विपिने खेटनेऽपि च
पुरे वा कुब्जके वापि विशेषाद्राजधानिके २
एतेषु कल्पयेद्धीमान्हस्तिपृष्ठमथापि वा
पूर्वादिषु चतुर्दिक्षु द्वारं संकल्प्य बुद्धिमान् ३
बलिपीठादि कर्तव्यं काम्यार्थं तु विशेषतः
ग्रामपालादि वीरान्तं विघ्नेशं चाधुनोच्यते ४
विनायकं वाथ नृत्तं वा स्थापये तु क्रमेण तु
पत्तनेच्छिष्टरक्षोक्षिप्रहेरम्बौ खेटके ५
लक्ष्मीं च विजयं चैव प्रभो नागं च नृत्तं च
कुब्जके तु विशेषतः
राजधानौ हरिद्रं च सर्वेषामपि कारयेत् ६
सर्वस्थानेषु कर्तव्यं प्रकल्पयेत्
शैत्यव्रक्षादिकेषु वा ७
ऐशान्यां सुखदं प्रोक्तमाग्नेय्यां जयदं विदुः
याम्यायां भवनार्थं तु नैर्ऋत्यां बुद्धिविवर्धनम् ८
सौम्यायामन्नकामार्थादैशान्यां सर्वकामदम्
वीरयग्रे शान्त्यदं प्रोक्तं मध्ये सु ++++ ९
++++ स्थाने न्यस्तवस्तु गणाधिपः
स्वतः प्रधानं सागं च स्थानतस्मृतम् १०
परिवारसमायुक्तं कुर्यात्स्वतः प्रधान
++++++++++ विघ्नेशं पूजयेद्गुरुः ११
प्रागुक्तविधिना स्नात्वा सकलीकरणं कुरु
पूजाद्रव्याणि संगृह्य प्रोक्षयेत्पूर्व ++ १२
+++ दाय पूजयेद्वाररक्षकौ

तत्तत्स्थानात्समुद्धृत्य ग्रामं चे तु विशेषतः १३
एवं निर्मितमेवोक्तं ग्रामेशयजनं स्मृतम्
अन्यस्थानानि मूर्तिनां क्रियाभेदो न विद्यते १४
मूर्त्तभेदेन कर्तव्यं मन्त्रभेदमिति स्मृतम्
द्वारस्य दक्षिणे भागे मयेशं पूरणोदरम् १५
चतुर्हस्तं च लम्बोष्ठं तप्तकाञ्चनसन्निभम्
पाशाकरभयं दक्षेलस्सुकं क्रमार्जितम् १६
एवं ध्यात्वा समभ्यर्च्य स्वनामपदध्यतः
द्वारस्य वामपार्श्वे तु माधवं कृष्णवर्णकम् १७
लम्बोदरं महाकायं चतुर्हस्तं तु लक्षयेत्
अक्षाभयकरं दक्षे वरदांशौ तु वामके १८
एवं ध्यात्वा समभ्यर्च्य द्वाराग्रे वाहनं यजेत्
पूर्ववद्वारमभ्यर्च्य प्रविश्याद्यन्तरे ततः १९
वास्तु ब्रह्माणमभ्यर्च्य बेरशुद्धिं समाचरेत्
कुरु संकल्लयेत्तत्र विदिक्षु च दिशासु च २०
धर्मज्ञानं च वैराग्यमैश्वर्यं चैव पदादिकम्
अधर्मादीलिकां प्रोक्तपूर्वादियुगदिक्षु च २१
गुणत्रयेण संछाद्य तस्योर्ध्वेब्जासनं न्यसेत्
तन्मध्ये विन्यसेन्मूर्ति नृत्तध्यानमनुस्मरन् २२
खान्तं रान्तसमायुक्तं यान्तं मायासमन्वितम्
त्रयोदशान्तसंयुक्तं षष्ठस्वरसमन्वितम् २३
मूलमन्त्रमिदं प्रोक्तं नायकेस्य विशेषतः
पश्चादावरणं पूज्य गर्भावरणमेव च २४
पुरुषं पूर्वदेशे तु अघोरं दक्षिणे ततः
सद्यं तु पश्चिमे न्यस्य वामदेवं तथोत्तरे २५
ईशानेत्वीशमन्त्रेण चाग्नेयां हृदयं यजेत्

नैर्ऋत्यां तु शिखा पूज्य वायव्यां कवचं यजेत्  २६
परिवारांस्तथा पूज्य ततस्याग्रे मुष्टिकं यजेत्
शुक्रं बृहस्पतिं चैव अश्विन्यौ च तथैव च  २७
विश्वेदेव च विप्रेन्द्रं ज्येष्ठदेवीं तथैव च
शास्तारं चैव दुर्गान्ता प्रदक्षिणक्रमेण तु  २८
विन्यसे तु विशेषेण पूजयेत्स्वस्वनामतः
वरदानष्टमूर्तिं श्च प्राग्दलादिविन्यसेत्  २९
स्वप्रभृतं स्वक्रं च वामनं शङ्खपालनम्
महावीरं भैरवं च वीरेशं चोग्ररूपिणम्  ३०
शुक्लं कृष्णं हरीतारं श्यामं रक्तं तथानलम्
काश्मीरं धूम्रवर्णं तु सुप्रभूतादि वर्णकम्  ३१
खड्गखेटकहस्तांश्च भीमरूपान्सुदंष्ट्रकान्
सर्वाभरणसंयुक्तानूर्ध्वकेशालकान्वितान्  ३२
द्विनेत्रान्भीमवदना नस्वनामाद्यक्षैरैर्यथा
एवं कृत्वा यजेत्तत्र गन्धाद्यैरुपचारकैः  ३३
नैवेद्यं दापयेत्तस्मै ताम्बूलं दापयेत्ततः
पाद्यमाचमनीयार्घ्यं स्वस्थानेषु प्रकल्पयेत्  ३४
धूपदीपं हृदा दत्वा आरात्रिकमथाचरेत्
ऋग्यजुःसामवेदांश्च सूत्रमेवं समाचरेत्  ३५
नागमेवसमायुक्तं नृत्तगीतसमाकुलम्
सर्ववाद्यसमायुक्त षयेत्पारशवस्मृतः  ३६
विबुधमीशदिग्भागे निर्माल्यं दापयेत्क्रमात्
शङ्खध्वनिसमायुक्तं पूजयेत्तु विशेषतः  ३७
शेषमेवं तु यत्कर्म पूर्ववत्तत्समाचरेत्
अस्मिन्शास्त्रमहं वक्ष्ये शृणुत्वं निधनेशः  ३८
मोहादज्ञानतो भ्रान्त्या कर्तुरिच्छावसेन वा

विपरीतार्चनं कुर्यात्स्थानवृद्धिं न कारयेत् ३९
कर्तृणां च स्थपत्यौ च राजराष्ट्रसमं भवेत्
दिनत्रयादिसमान्तं वत्सरत्रयमेव वा ४०
इत ऊर्ध्वं न कर्तव्यं तेनापि मरणधृवम्
तस्मात्सर्वप्रयत्नेन उत्थं कर्मसमाचरेत् ४१
स्वस्वमन्त्रैः समभ्यर्च्य सकलानां यथाक्रमम्
इतयदर्चनमित्युक्तमादिशैवो यथा कुरु ४२
इति स्वायम्भुवे गणेशार्चनपटलः

## विघ्नेशध्यानम्

विबुधस्याकृतिं वक्ष्ये पञ्चतालेन कारयेत्
द्विपादं द्विकरं चैव द्विनेत्रं शुक्लवर्णकम् १
लम्बनं कण्ठशोभं च आसनं वा स्थितं तु वा
दधन्नाम्रफलं चैव वामहस्ते तु लड्डुकम् २
अभयवरदं वापि सूचि विस्मयसंयुतम्
अथवान्यप्रकारेण गजवक्त्रसमाश्रयम् ३
मकुटादिसमायुक्तं मुण्डितं वा समाचरेत्
सर्वलक्षणसंयुक्तं सर्वालङ्कारशोभितम् ४
इति उत्तरस्वायम्भुवे चण्डेशलक्षणपटलः

## विघ्नेशोत्सवम्

हरं ब्रह्मादिमेर्वरागं ब्रह्मतालम्
दण्डपादं पञ्चमम्
समं तालं भुजगलबद्धावरणम्
स्वस्याकृतिवरादि । भृगिणमा ।
कौशिकम् । दण्डपादम् । कुब्जरि ।

मल्लतालम् । नट्टभाषै । भुजं +++ वतालम् ।
श्रीका++मरम् । वर्त्तनि । कोल्ल ६
बलितालम् । त्रकतेकि । भमरि ७
कोदितालम् । तर्करागं लीढम् । ढङ्करिणी । ढङ्करि
। भुजगभैरवतालम् । देशामगिरि ८
अथ वक्ष्ये विशेषेण विघ्नेशोत्सवमुत्तमम्
सर्वपापहरं पुण्यं सर्वलोकसुखावहम् १
ग्रामवृद्धिकरं शान्तं नृपाणां सर्वसिद्धिदम्
ग्रामे वा नगरे वापि पत्तने राजधानिके २
पुरे वा कुब्जके चैव कु+स्तम्बे वा महापथे
आगमोक्तक्रमेणैव यथास्थानं प्रकल्पयेत् ३
सर्वस्थानेषु मूर्तीनां मुत्सवं त्रिविधं भवेत्
नव सप्ताह पञ्चाह नवाहादि विभेदतः ४
आदौ तीर्थं विनिश्चित्य पूर्वेण पञ्चमेऽपि वा
त्रिदिने तद्दिने वापि ध्वजारोहणमारभेत् ५
त्रिगुणे द्विगुणे वापि तद्दिने वाह्निरात्रिके
अधिवासनपूर्वं तु ध्वजमारोपयेद्गुरुः ६
त्रिहस्तादिसमारभ्य रन्ध्रहस्तान्तमेव वा
पुष्यमासादिमासेषु तत्तत्मासर्क्षमेव च ७
अथवा तु चतुर्थ्यां तु भूताष्टम्यां तथैव च
सर्वमासेषु कर्तव्यं पर्वान्तं तीर्थमाचरेत् ८
अर्धं त्रिपादविस्तारं शिरः पुच्छसमन्वितम्
वेत्रद्वयसमायुक्तं तन्मध्ये वाहनं लिखेत् ९
आयादिशुभसंयुक्तं स्थितं वा शयनं तु वा
श्वेतवर्णादिवर्णानां सर्वलक्षणशोभितम् १०
विश्वमात्रं समारभ्या वीच्यङ्गुलविवर्धनात्

मनमात्राङ्गुलैर्युक्तं यावत्त्रिंशाङ्गुलावधि  ११
पद्मासनसमायुक्तं पार्श्वे दीपद्वयान्वितम्
रत्नचामरसंयुक्तं पूर्णकुम्भं तथैव च  १२
दर्पणं स्वस्तिकं शङ्खं श्रीवत्सं चाब्जकं तथा
उक्तवर्णसमायुक्तमुक्तस्थाने प्रकल्पयेत्  १३
एवं ध्वजं समापाद्या ध्वजदण्डमथोच्यते
यज्ञिकी वृक्षमाख्यातं सारसारमुकादयः  १४
हर्मस्योछ्रयतारं तु द्विगुणं त्रिगुणोऽपि वा
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात्  १५
एकविंशात्करान्तं तु दण्डदैर्घ्यं विधाय च
पक्षाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्  १६
नाहमानमिति प्रोक्तं त्रिगुणान्तं यथोचितम्
तन्नाहमष्टधा कृत्वा एकांशन्यूनमग्रकम्  १७
ध्वजदण्डमिदं प्रोक्तं ध्वजयष्टिरिहोच्यते
अष्टौ नन्ददशांशं वा सृब्रपत्तवक+++ न्धांशमेव च  १८
दण्डघात प्रमाण तद्वेदीं दण्डं च कल्पयेत्
त्रयाणां मानमित्युक्तं अष्टांशेनैव कल्पयेत्  १९
तं दण्डमष्टधा कृत्वा मेकांशमुपदण्डकम्
ध्वजदण्डं पटं चैव स्कन्धवेदिं च दण्डकम्  २०
स्कन्धवेदिं च दण्डं च अङ्गुलेन प्रकल्पयेत्
यावत्युग्मांगुलप्राय्यं त्याज्यमेकाङ्गुलात्परम्  २१
हस्तमानं समारभ्य द्विहस्तान्तक्रमेण तु
ईशदृक् नादनन्दाख्य वसुनन्दयुगांशकम्  २२
वृद्धिमानमिदं प्रोक्तं भानेरंशमथोच्यते
नागतारमुनिप्रस्थानासीनन्दांशकं क्रमात्  २३
केत्वादि षट्कशुद्धिं च मात्राङ्गुलैन कारयेत्

एवमायादिसंयुक्तं ज्ञात्यायांशसमन्वितम् २४
दराडोत्सेधेन कर्तव्यं पटविस्तार एव च
दराडस्कन्धं तु चायामं नाहं वा विस्तृतं भवेत् २५
पञ्चाङ्गुला समारभ्य नवाङ्गुलसमावधि
उपदराडस्य नाहं तु दराडाग्रे वलयस्थितिः २६
उछ्र्योर्यागसिध्यर्थं स्कन्धत्रयमथाचरेत्
द्वादश्याङ्गुलमारभ्या यावत्रिंशाङ्गुलान्तकम् २७
पञ्चाङ्गुलं समारभ्य यावदेवकारन्तकम्
स्कन्धिविस्तारमुद्दिष्टो तद्धनं युक्तिना कुरु २८
मूलाग्रे वर्तुलाकारं कारयेच्चुलुकाकृति
द्वयं सुषिरसंयुक्तं अ्रन्धछिद्रमथैकतः २९
वलयं पश्चिमे भागे उपदराडाग्रमेव च
रज्जुस्थं वलयं मध्ये स्याद्वासुकिञ्चैदेवतम् ३०
वलये चन्द्रदेवत्यं गरोशं दराडनायकम्
पीठे शक्तिं च संपूज्य मूलाग्रे वाहनं न्यसेत् ३१
महामर्यादि मध्ये वा पीठाग्रे वा तदग्रके
दराडस्थानमिदं प्रोक्तं तन्मूले वेदिकां कुरु ३२
अ्रधिष्ठानवशात्तत्र वेदीमानवशान्नयेत्
विस्तारसममुत्सेधं पट्टिकान्तस्मरावधि ३३
एवमेवक्रमेरौव विपरीतं विपात्करम्
तस्मात्सर्वप्रयत्नेन लक्षरोन विचक्षराः ३४
नानाधिष्ठानसंयुक्तमुपपीठं युतं तु वा
वेदिकालक्षरां वापि इष्टकादीन्प्रकल्पयेत् ३५
प्रासादाभिमुखाः सर्वे पूर्ववत्शुद्धिमाचरेत्
अ्रारम्भस्य दिनात्पूर्वे त्रिदिने पञ्चमेऽपि वा ३६
अ्रङ्कुराराय्पयेद्धीमान्पूर्वोक्तविधिना सह

एतद्ध्वजाङ्कुरं प्रोक्तं अधिवासनमारभेत् ३७
आरम्भस्य दिने रात्रौ नैवेद्यान्तं तु कल्पयेत्
स्नानान्ते वाथ कर्तव्या अधिवासं सुराशिके ३८
आचार्यः सकलीकृत्य गणेशं पूजयेद्बुधः
विज्ञाप्योत्सवकार्यं तु वाहनं पूजयेत्ततः ३९
कृसरान्नं निवेद्यं च स्नपनाद्यैर्विशेषतः
ततो शिरीषरजनीं तण्डुलं च पृथक्पृथक् ४०
चूर्णयित्वा विशेषेण स्थालिकायां तु विन्यसेत्
देवस्याग्रे विशेषेण गोमयालेपनं कुरु ४१
तच्चूर्णं चैव पद्मस्याल्लताकारमथापि वा
तदूर्ध्वे स्थलिलं कृत्वा साष्टपत्रं सकर्णिकम् ४२
तत्पटं हृदयेनैव नयनोन्मीलनं कुरु
स्थलिकायां न्यसेद्धीमान्स्थण्डिलोर्ध्वे विशेषतः ४३
उत्तरे स्थण्डिलं कृत्वा पूर्ववन्नलिनं लिखेत्
अब्जमध्येऽङ्कुशं न्यस्य तत्पूर्वे स्थण्डिलं कुरु ४४
तदूर्ध्वे नवसङ्ख्यैश्च कलशान्पूजयेत्ततः
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ४५
पटे घटेवसंपूज्य मूषिकं मूलमन्त्रतः
यज्ञादिशूलपर्यन्तं पूर्वादिक्रमशोऽर्चयेत् ४६
तत्तत्स्वनाममन्त्रेण पूजयेद्गन्धपुष्पकैः
ततो होमं प्रकर्तव्यं अग्निकार्योक्तमार्गतः ४७
अग्निमध्ये विशेषेण मुष्टिकं तु सुपूजयेत्
तन्मन्त्रेण ततो हुत्वा होमयेच्छतसङ्ख्यया ४८
समिदाज्यचरून्लाजान्सत्वन्नं पृथुकं तथा
तत्सङ्ख्या होमयेत्कार्य कूश्माण्डादीनि मन्त्रकैः ४९
पटे घटे च मूर्तीनां शत सङ्ख्यां च होमयेत्

जयादिरभ्याधानां च राष्ट्रभृच्च क्रमाध्वरेत् ५०
मिन्दाहुतिं च कूश्माराडं प्रायश्चित्ताहुतिं चरेत्
पूर्णाहुतिं च शिरसा तत्तत्स्थाने सुयोजयेत् ५१
संपूज्य गन्धपुष्पाद्यैः कृसरान्नं निवेदयेत्
सर्ववाद्यसमायुक्तं नृत्तगीतसमाकुलम् ५२
प्रातः संपूज्य विधिना शुचीवोहं जपेद्गुरुः
वास्तुशुद्धिं ततः कृत्वा वास्तुदेवान्संपूजयेत् ५३
सर्ववाद्यैरलङ्कृत्य स्वस्तिमङ्गलवाचकैः
रथे वा शिबिकायां वा परिचारकमूर्धनि ५४
तत्पटं सम्यगारोप्य अङ्कुशं बिम्बसंयुतम्
ग्रामप्रदक्षिणं कृत्वा ध्वजस्थानं प्रविश्य च ५५
गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम्
तद्देवं पश्चिमे न्यस्य सायुधं चोत्तरे न्यसेत् ५६
गणेशं पूजयेत्पश्चात्पुरायाहं वाचयेत्ततः
अस्त्रमन्त्रेण संप्रोक्ष्य पूर्वं दराडे समर्चयेत् ५७
दर्भमालां पटं चैव त्रयरज्जुं सुयोजयेत्
क्षुद्रघराडा समायुक्तमस्त्रमन्त्रेण बन्धयेत् ५८
तत्कुम्भे बीजमादाय मूषिकं हृदिन्यसेत्
आरोपयेत्पटं शीघ्रं तन्मूलं च स्मरेद्गुरुः ५९
दराडस्य वामपार्श्वे तु मूलै रज्वां सुबन्धयेत्
तत्कुम्भस्थजलैश्चैव तत्तत्स्थानेऽभिषेचयेत् ६०
निवेद्यादीनि पूजानि उपचाराणि सर्वतः
उक्तमन्त्रैः समभ्यर्च्य सर्वघोषसमन्वितम् ६१
शुद्धनृत्तसमायुक्तमथवा गणिका चरेत्
स्तोत्रमङ्गलसंयुक्तं जयशब्दसमाकुलम् ६२
तत्काले स्तोत्रपाठैश्च आचार्यः शिष्य एव वा

भस्माथ दापयेऽन्येभ्य सर्वभक्तजनैः सह  ६३
भेरिकाताडनं रात्रौ कर्तव्यं तु यथाविधिः
देवदेवस्य चाग्रे तु गोमयालेपनं कुरु  ६४
पुरोचूर्णैलिखेत्पद्मं तदूर्ध्वं स्थण्डिलद्वयम्
प्राक्स्थण्डिले न्यसेद्भेरीं पश्चिमे त्वायुधं न्यसेत्  ६५
सायरक्षावसाने तु रुचिरासनसंस्थितः
गणेशं पूजयेत्पूर्वं संक्रेयं च यथाक्रमम्  ६६
पुण्याहं वाचयित्वा तु प्रोक्षयेदस्त्रमन्त्रतः
अङ्कुशं पूजयेत्पूर्वं देवानाहूय देशिकः  ६७
भेरीं वस्त्रेण संवेष्ट्य पूर्ववत्पूजयेत्क्रमात्
भेर्याः सन्ताडनं कुर्यादेकद्वित्रिशताडयेत्  ६८
त्रियम्बकेन मन्त्रेण ताडये तु क्रमेण तु
पश्चात्पारशवं चैव प्रोक्षयेत्पुरुषेण तु  ६९
नववस्त्रेण गन्धं च सोत्तरीयं ससूत्रकम्
तत्काले दापयेत्कार्यं देशिका यज्ञया सह  ७०
वाद्यकश्च ततः कार्यं दिशतालेन नाशयेत्
सर्ववाद्यसमायुक्तं नृत्तगीतसमाकुलम्  ७१
नानाच्छत्रसमायुक्तं नानाभक्तजनैः सह
अन्नलिङ्गसमायुक्तमंकुशं पादुकानि च  ७२
बलिबेरं विना वापि गणिकाभिः समावृतः
ब्रह्मादीशानपर्यन्तमिन्द्रादीशान्तमेव च  ७३
पायसान्नं घृतान्नं च तत्तन्मन्त्रेण दापयेत्
तत्तत्काले स्तोत्रपाठैश्च पीठं क्षालनपूर्वकम्  ७४
दिशितालसमायुक्तं तत्तन्नृत्तं च गीतकम्
तटाककूपसिद्धिश्च चैत्यवृक्षश्चतुष्पथः  ७५
तत्तत्स्थानादिवीथ्यग्रे वीथिमध्ये समीपके

प्राप्यस्थाने बलिं कुर्यात्स्वाहान्तं मन्त्रमुच्चरन् ७६
चतुष्पथे पिशाचेभ्यः त्रिपथा राक्षसा भवेत्
सभास्थाने सरस्वत्यै ज्येष्ठा सा तु जलाशये ७७
ग्रगोधे क्षेत्रपालस्य विघ्नेशस्यापि पिप्पले
चैत्यवृक्षे गृहस्यापि कूपे कुम्भोदरस्य तु ७८
गो स्थाने चराडरुद्रस्य भीमरूपस्य गोपुरे
दिनदेवबलिं दद्याल्लोकपालान्बलिं ददेत् ७९
प्रासादं तु प्रविश्याथ ग्रङ्कुरं पूर्ववन्नयेत्
स्वर्णादिसूत्रं संग्राह्य कुर्यात्प्रतिसरक्रियाम् ८०
तत्तत्प्रभिमबेरं च ग्रङ्कुशं देशिकैः सह
तत्तत्पूर्वोक्तक्रमेरौव तत्सूत्रं बन्धयेद्दृढम् ८१
नित्यार्चनविधायेव नैवेद्यान्तं यथा कुरु
यागशालां प्रविश्याथ सौरादिमङ्गलान्तकम् ८२
पूजये तु क्रमेरौव तत्सूत्रं बन्धयेद्दृढम्
पूजयेत्तु क्रमेरौव पूर्वमेव सुभाषितम् ८३
तत्र वेदीं तदूर्ध्वे तु तच्चूर्णं कमलं लिखेत्
तदूर्धे स्थरिडलं कृत्वा चाष्टद्रोरोन शालिना ८४
तदर्धैस्थरिडलैर्भूष्यैस्तदर्धैश्च तलैरपि
तदर्धैर्लाजसंयुक्तं नवकोष्ठं प्रकल्पयेत् ८५
मध्यमे मूर्तिकुम्भं तु ग्रावृतं परिवारकैः
ब्रह्म ईशानयोर्मध्ये वर्धनीं पश्चिमाननम् ८६
ससूत्रं सापिधानं च सवस्त्रं पल्लवान्वितम्
कुञ्जद्वयं तु माषं स्यात्कलशं मध्येथ निक्षिपेत् ८७
माषविंशतिनिष्कस्यात्कुम्भमध्ये स्वपुष्पकम्
तदर्धं वर्धनीं चैव तदर्धार्धमथापि वा ८८
तत्तद्ध्यानमनुस्मृत्य उपदेशस्य मार्गतः

आसनावरणादीनि विघ्नेशं पूजयेद्बुधः  ८९
विघ्नेशाभिमुखान्सर्वान् पूर्वादिक्रमशोऽर्चयेत्
तत्तत्स्वनाममन्त्रैश्च गन्धपुष्पादिभिर्यजेत्  ९०
लोकपालान्समभ्यर्च्य यागेशन्त सुपूजयेत्
अंश पूजयित्वा तु विद्यापीठं सुपूजयेत्  ९१
ततो होमं प्रकर्तव्यमेकाग्नेस्तु विशेषतः
चतुरश्रस्य कुण्डस्य लक्षणं पूर्ववत्कुरु  ९२
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
अग्निमध्ये तु तं ध्यात्वा परिवारगणैः सह  ९३
नाममन्त्रैः समभ्यर्च्य धूपदीपेन पूजयेत्
समिदाज्यचरू लाजान्हृदयादीनि मन्त्रकैः  ९४
अपूपं पृथुकं सक्तुनालिकेरगुलं तथा
विल्वमूलं फलं चैव गणेशस्य षडङ्गकैः  ९५
शतमर्धं तदर्धं वा तदर्धं चैव होमयेत्
यावत्कुलेऽपचारं तु तावत्कर्म समाचरेत्  ९६
अह्निरात्रीं प्रकर्तव्यं बलिहोमं समाचरेत्
होमावसाने तत्काले देवानाहूय ताडयेत्  ९७
अङ्कुशं प्रतिमं चैव हविर्लिङ्गं च पादुकम्
रङ्गे वा शिबिकायां वा परिचारसमावहेत्  ९८
घण्डारवसमायुक्तं गणिकादिभिरावृतम्
नानाछत्रसमायुक्तं नानावाद्यसमन्वितम्  ९९
नानाभक्तजनैः सार्धं जयशब्दसमन्वितम्
द्वारादि द्वारशोभान्तं शुद्धान्नं च बलिं ददेत्  १००
ध्वजादिबलिपीठान्तं गुलान्नं च बलिं ददेत्
दिनदेवबलिं दत्वा तत्तत्पीठस्य वामके  १०१
गणेशस्कन्दभूतांश्च नागविष्णुशिवस्तथा

ब्रह्मा च ब्रह्मपत्नी च क्षेत्रपालाश्च देवताः १०२
अपूपं पद्मपत्रं च शुद्धान्नं करवीरकम्
रजनी मल्लिका पुष्पं शङ्खपुष्पं घृतं मधु १०३
तुलसीं च फलं चैव अर्कं चैव घृतं तथा
श्वेताब्जं पायसं चैव नीलोत्पलं च शर्करः १०४
रक्तपुष्पं च मांसं च दिनदेवाः क्रमेण तु
तत्तद्द्रव्यं चरुं मिश्रं तत्तत्पुष्पसमन्वितम् १०५
तत्तन्मन्त्रसमायुक्तं दिनं प्रति बलिं द्वयम्
एवं बलिक्रमं कृत्वा प्रविशेदालयं प्रति १०६
धूपदीपं ददेत्कार्यं नीराजनमथाचरेत्
उपचाराणि सर्वाणि यदुक्तं कारयेद्दृढम् १०७
ततो यानं प्रकर्तव्यं वीथीं तोरणसंयुताम्
दर्भमाला समायुक्तां नानाश्चर्यसमन्विताम् १०८
उद्दिश्य देवान्सर्वां श्च नानाचित्रैरलङ्कृतान्
सर्ववाद्यसमायुक्तं सर्वभक्तजनैः सह १०९
पुरतः सर्वविप्राश्च तदन्ते ब्रह्मयोगिनः
ततस्तपस्विका प्रोक्तास्तदन्ते नृत्तमाचरेत् ११०
तत्र देव्याश्च सर्वेषा सत्पार्श्वे नृपवर्तिनाः
आचार्यो मूर्तिपैश्चैव दक्षपार्श्वे च वर्तिना १११
नानाछत्रसमायुक्तं नानाचामरसंयुतम्
तत्पृष्ठे वंशकाश्चैव विनोदालोकनन्दनः ११२
अन्यासांश्च लीलां च अन्यजातिषु मिश्रकम्
तत्पार्श्वेण सर्वभक्ताश्च पु++र++ ११३
शनैः प्रदक्षिणं कुर्यात्सर्वत्र ज्वलदीपिकैः
कर्पूरेण च मिश्रं तु ताम्बूलं विकिरेत्क्रमात् ११४
वीथिमध्ये तदग्रे तु प्राप्य देवालयेति

भक्ष्यादीनि विवेद्याथ ताम्बूलं च निवेदयेत् ११५
नृत्तगीतं च वाद्यं च तोषयेच्छम्भुमादरात्
प्रथमं मूषिकं चैव द्वितीयं पिच्छवाहनम् ११६
भूतारूढ त्रितयं च चतुर्थं वृषहनम्
पञ्चमं शक्तिवैकल्यं गाजारूढं तु षष्ठमम् ११७
सप्तमं नृत्तकल्याणं मृगयात्राष्टमं भवेत्
नवमं च रथारोहं दशमं तीर्थकर्म च ११८
नवाहादीनि कर्तव्यं तत्तद्वाहनमुत्तमम्
सप्ताहं वा प्रकर्तव्यं तत्तद्वाहनमुत्तमम् ११९
सप्ताहं वा प्रकर्तव्यमष्टमं नवमं विना
पञ्चाहं वा प्रकर्तव्यं षष्ठाद्यमष्टमं विना १२०
अह्निरारौ प्रकर्तव्यं तत्तद्वाहनमुत्तमम्
अथवान्यप्रकारेण यानक्रममिहोच्यते १२१
पञ्चमं शिबिकारूढं रङ्गं वापि प्रकल्पयेत्
सप्तमं शक्तिवैकल्य अष्टमं गजमेव वा १२२
नवममृगयात्रां च दशमरथमेव च
तद्दिने तीर्थकर्मं च अवरोहं यथा भवेत् १२३
तत्तद्दिनविहीनं चेदपरे द्वयमाचरेत्
रथविच्छिन्नहीने च रङ्गे यानमिहोच्यते १२४
सर्वदेवान्समाहूय रङ्गे सर्व सुपूजयेत्
तत्तद्देवान्समारोप्य यानान्ते स्नपनं कुरु १२५
तत्तत्प्रतिमबेरं च च्छिस ++++
+++++++++++++++++ १२६
दत्वा पाद्यादि नित्यपूपादि निवेद्यकैः
ताम्बूलं च निवेद्यैव स्तोत्रमङ्गलसेवितम् १२७
+++++ च गणिका बहुरूपकैः

नानाविधैश्च नृत्तैश्च नानाजाति समाचरेत् १२८
वीणादिवाद्यसंयुक्तं शम्भुं तत्रैव तोषयेत्
भ्र ++++++++++++++ बुलदापयेत् १२९
तत्पूर्वे परिवेदमं च पूर्वमेव क्रमेण तु
वात्रार्थस्नपनं पश्चाच्छान्तिहोमं च कारयेत् १३०
नित्यं नैमित्तिकं ++++++++++++ चरेत्
महेशं पूजयेत्तत्र सर्वकलार्चनवत्कुरु १३१
सप्ताहदिवसात्पूर्वे रात्रौ होमावसानके
नटेश्वरं समभ्यर्च्य सर्वालङ्कारशोभितम् १३२
कौतुकं बन्धयेद्धीमान्पूर्वोक्तविधिना ततः
ग्रामप्रदक्षिणं वाथ प्रासादस्य प्रदक्षिणम् १३३
अधिवासनकार्यं तु पूर्वमेव ++++++
++++++ कं सर्वं पूर्वमेव समाचरेत् १३४
एवं नटेशकल्याणं मृगयात्रां ततो भवेत्
तद्रात्रौ च निवेद्यान्ते तीर्थार्थं कौतुकं मतम् १३५
तीर्थसंग्रहणं यावत्तावत्तीर्थान्तमाचरेत्
चूर्णोत्सवं ततः कृत्वा यागकुम्भाभिषेचनम्
विबुधस्याध्वरं कुर्यात्सिद्धिदेवान्विसर्जयेत् १३६
अपरे दिवसे चैव शुद्धस्नानं समाचरेत्
प्र+++++++++++++++ निवेदयेत् १३७
शेषकर्मणि सर्वाणि शिववत्कारयेद्बुधः
आयुरारोग्यजयदं सदा विजयवर्धनम् १३८
इह लोके सुखं प्रा++++++++++++
प्रायश्चित्तार्थकर्माणि प्रायश्चित्तोक्तवर्त्मना १३९
मन्त्रभेदं विशेषोस्ति क्रियाभेदो न विद्यते
तस्मात्सामान्यमेवोक्तं सर्वधामसु ++++ १४०

## इति गणेशोत्सवपटलः

सर्वेषामुद्भवार्थाय साङ्कुरः प्रविधीयते
मद्ग्राह्यं च विशेषो ++++++++++ १
आरम्भे ध्वजमुत्सवस्य विधिवत्प्रोपुष्टघणा
विद्यारं द्वादशकं विमुच्य पुरतः प्रसादतस्थापयेत् २
द्विशकं पञ्चाञ्चितैरुच्छ्रितं विंशद्भिः शिरसि प्रदीप्तभ्रषभं
भिन्नं निष्ठादितः ।
पुरावैभवमार्गेण लाञ्छनं दृश्यते नराः ३
+++++++++ ण देवान्सन्तुष्टिर्भावयेत्
पशुपाशनिवृत्यर्थं पशुध्वजनिरीक्षणम् ४
संसाररोगशमनं पशुदेहे तु व ++
++++++++++ नाशार्थं रक्षाबन्धनमिष्यते ५
रागादिवासनं होमं पशूनां काम्यसिद्धिदम्
सर्वलोकहितार्थं तु पुरयानं प्रश+++ ६
++++++++ मृगयैषां प्रशस्यते
भूषणं रजनीचूर्णं तच्चूर्णं भवदानकम् ७
पशूनामाणवादीनि स्नानकार्यै विमुच्यते
+++++++++++++++ कम्पलमुच्यते ८
आनन्दाय नटं लोकेष्वदृष्टं गुप्तरङ्गम्
तस्मादानं तु रूपत्वात्कवचं कृष्णमेव च ९
असुराणां ++++++++++++++ व च
आनन्दताण्डवं लोके सृष्टिस्थित्यन्तरक्षकम् १०
आपोवर्णस्य सस्यर्थं कृष्णगन्धानुलेपनम्
मूर्ध्नि +++++++++++ तथा ११
बाहुद्वयौ च कक्षौ च नाभौ पादद्वयस्य तु

कुराडम् १२
पूर्वे आहवनीयं च दक्षिणे वैदिकं भवेत्
+++++++++++++ गाकं भवेत् १३
वृत्तमीशे प्रधानं च शिवाग्निरूपं विशेषतः
पूर्वस्यात्सृष्टिबहलं कन्यालाभं तु पावके १४
शत्रुक्षयं च याम्ये तु नैर्ऋते रोगनाशनम्
पश्चिमेसस्य वृद्धिस्यात् +यौ भतवलं भवेत् १५
उत्तरे धनवृद्धिस्यादीशाने भुक्तिमुक्तिदम्
परिवारबलि हरः --
इतराराण्यपि कुराडानि प्राणापानाधिदैवताम्
नृगसङ्ख्याह्निकुराडं तु तत्तन्मन्त्रं हुनेचितम् १६
वृत्तमध्ये यथायोग्यं तत्तत्कर्मबलिमाचरेत्

## बलिदानविधिः

अथातः संप्रवक्ष्यामि बलिदानं च विष्टरम् १
प्राकारदुर्गहर्म्यं च सामान्यं पूर्वमुच्यते
द्वारादिबलिपीठान्तं सर्वत्र परिकल्पयेत् २
पुष्कलं सौख्यकं चैव श्रीकरं च व ततः परम्
द्वारे वाहने चैव महापीठस्थभास्करे ३
पुष्कलं चिति विख्यातं सौख्यकं च ततर्चूर्णम्
+++++++++++ महापीठे च सौख्यदम् ४
वृषादिन्द्रादिकोपेतं सौभाग्यं चेति कथ्यते
वज्रादिसहितं चैतच्छ्रीकरं त्विति विद्यते ५
एतत्सामान्यस्वयम्भुं दैविकं चैव आऋर्वं गाणवं तथा
मानुषं चैव पञ्चैते पञ्चधा परिकीर्तितम् ६
भूतादीन्प्रथमस्यैव ++++++++++++

त्रितीयस्यैव दुर्गादीन् चतुर्थे वसवस्मृतः ७
वज्रादिपञ्चमस्यैव बलिं कुर्याद्यथाक्रमम्
द्वारे च वाहने चैव स्वकीयपरिवारके ८
++++++++++ महापीठे समर्पयेत्
अथवान्यप्रकारेण प्रथमावरणादिकान् ९
व्रषादि विद्ये भूतादीनिन्द्राद्यं तु भवादिकम्
स्वयम्भु +++ लिङ्गे ++++++++++ १०
भूतान्तमप्यर्षे कुर्याद्विद्येशान्तं तु गाणवे
वृषादि बलिपीठान्तं मानुषं यत्प्रकीर्तितम् ११
अथवा बलिदानं तु लिङ्गे सर्वत्र कथ्यते
प्रथमे वृषभादीनामिन्द्रादीनां द्वितीयके १२
अस्त्रादीनां त्रितीये तु महापीठे समर्पयेत्
सामान्यमेवं कर्तव्यं कृते त्रेतायुगेऽपि च १३
द्वापरे च परे वेत्ति कथ्यते बलिदानकम्
कृते त्रेतायुगे चैव पञ्चमावरणे बिलिम् १४
द्वितीयादिपञ्चमान्तं वा परे बलिं कुर्याद्यथोचितम्
स्वायम्भुवे देविके चैव पञ्चमावरणान्तकम् १५
आत्रृषे गाणवे चैव चतुर्थावरणान्तकम्
मानुषे तु विशेषेण त्रितीयावरणान्तकम् १६
अथ वासर्वलिङ्गानां प्रकारेषु त्रयेषु च
कृत्वा वृषेन्द्राद्यस्त्रान्तमन्तर्बाह्यं विवर्जयेत् १७
चतुर्थावरणं चेत्तु अन्तर्मण्डलवर्जितम्
त्रितीयावरणं चेत्तु अन्तर्बाह्यं विवर्जयेत् १८
द्वितीयावरणं चेत्तु द्वितीयावरणेऽपि च
एकावरणमार्गं चेद्द्वितीये तु विशेषतः १९
प्राकारबलिरेवं स्यान्महापीठमथ श्रुणम्

स्वायम्भुवे देविके चैव पीठमावरणं प्रति २०
आर्षे गाणवे चैव ++ यपीठं प्रकल्पयेत्
++++ विशेषेण पीठमेकं प्रकल्पयेत् २१
अथवा सर्वलिङ्गानां पीठमेकं परं वरम्
कृते त्रेतायुगे चैव पीठमावरणं प्रति २२
द्वापरे च कलौ चैव पीठमेकं प्रकल्पयेत्
प्रथमे वा द्वितीये वा त्रितीये वा चतुर्थके २३
पञ्चमे वा प्रकर्तव्यं कल्पयेत्कल्पवित्तमः
एकत्रस्थापितं पीठं प्रकारेष्वपि पञ्चके २४
पूर्वे तु स्थापितं पीठं प्रकारेष्वपि पञ्चके
पूर्वे तु स्थापितं पीठं तु न चालयेत् २५
गजचोरादिचलिते नदीस्रोगेन्यजा भवेत्
प्रासादमण्डपादौ तु सालादौ च विवर्धते २६
प्रषादिपरिवारादि ++++++ शषतः
प्रगारादिं च संप्रद्धो स्थापये तु यथाविधिः २७
जीर्णिते वापि कर्तव्यं संत्यज्यान्त्यं परिग्रहेत्
ततस्तु दोषहीनं चेत्तत्स्थाने चान्त्यदेशके २८
प्रथमादि पञ्च ++++++++++++++++
++++++++++ योग्ये तु कल्पयेत् २९
दण्डमानेन कर्तव्यं लिङ्गपीठस्य पादुकान्
त्रिदण्डादिसमारभ्य वा ++ त्रिंशापसानकम् ३०
एकैकदण्डसंवृद्धषट्त्रिंशन्मानमुच्यते
पीठाग्रं वाथ बाह्यं वा मध्यं वा मानमाचरेत् ३१
यथेष्टदेशे कर्तव्यं मानोत्कृष्टमथाचरेत्
बाह्यपीठं समादाय अन्तर्ग्राह्यं न कारयेत्
न्यूनमानं न कर्तव्यमधिकं शुभदं भवेत् ३२

तस्मात्सर्वप्रयत्नेन अन्तग्राह्यं न कारयेत्
यदि मोहेन कुरुते कर्ता भर्ता विनश्यति ३३
ग्रामनाशं च दुर्भिक्षं राष्ट्रक्षोभं च संभवेत्
अथवान्यप्रकारेण संरक्ष्य पूर्वविष्टरम् ३४
अन्यपीठं परिग्राह्य चेष्टदेशे समर्पिते वा
पूर्वपीठं समभ्यर्च्य बलिमानादि चान्यके ३५
बेरं वा बलिपीठं वा तद्वस्तु परिगृह्य च
प्रागुगीदिशि संपृद्धौ स्थापयेदिष्टदेशके ३६
प्राकारे प्रथमादौ तु भित्ति वा कल्पयेद्बुधः
पैशाचार्थं प्रकर्तव्यं बाह्यादावरणाद्बहिः ३७
पैशाचबलिपीठं तु कल्प्यं वा हीनमेव च
एवं लिङ्गं युगं प्रेक्ष्य क्रियतां शुभमिच्छया ३८
लिङ्गानामपि सर्वेषामामोदादिक्षिपेद्बुधः
आमोदप्रमुखं चैव सुमुखं दुर्मुखं तथा ३९
अविघ्नं सात्विकं चैव तामसं राजसं +++
विघ्नकर्तारमूध्वे तु आग्नेयादि विदिक्षु च ४०
स्वकीयं परिवारस्य प्रतुमानां तु पूर्वके
इन्द्रादीनां द्वितीये स्याद्वज्रादीनां त्रितीयके ४१
++++ ग्यं तु देवानां पीठमावृतमाचरेत्
लिङ्गानां प्रतिमानां च स्थानसंकटसंयुते ४२
नदीनां च गिरीणां च दुर्गैरन्यैश्च संयुते
बलिदानं प्रकर्तव्यं सव्यापसव्यमार्गतः ४३
निर्ऋृतेर्वरुणस्यापि वायोर्देवस्य दक्षिणे
अथवा वामभागे तु यथायोग्यं भमाचरेत् ४४
वामं च दक्षिणं दुर्गं यदि पूर्वे प्रकल्पयेत्
अथवा पश्चिमस्थाने कल्पयित्वा विचक्षणः ४५

अन्येषामपि देवानां स्वस्थानेषु प्रकल्पयेत्
प्राकारं प्रतिसालं तु रक्षार्थं शोभनार्थकम् ४६
प्रथमस्य समं वापि पादोनं वा तदर्धकम्
वक्रावक्रसमाकारं द्वितीयादीनि कल्पयेत् ४७
उत्सेधं भित्तिविस्तारं तथा कुर्याद्विचक्षणः
द्विगुणं त्रिगुणं वाथ कल्पये तु चतुर्गुणम् ४८
प्राकारभित्तिहीनं चेद्बलिं श्रुणं कन्नहि
तस्मात्सर्वप्रयत्नेन भक्तिं कुर्याद्दृढीकृतम् ४९
प्र ++ सप्रमाणेन पञ्चसालान्तमाचरेत्
यथेष्टदेशे वीथिं च तद्देशे बलिमाचरेत् ५०
प्रासादे बलिदानं वा यानमिष्टा प्रदेशके
वास्तुशून्यं च दुर्गं च तवमेवं समाचरेत् ५१
एकत्र कल्पयेत्पीठः प्राकारेष्वपि पञ्चसु
तत्पीठे सर्वदेवानां बलिं दद्याद्यथाविधि ५२
पञ्चावरणदेवानां महापीठे बलिं क्षिपेत्
उत्सवादिबलिं कृत्वा तत्पीठे पादबाह्यतः ५३
सन्धिदेवान्समभ्यर्च्य तत्तत्स्थाने विशेषतः
दिनदेवबलिद्रव्यैर्दिनदेवान्प्रपूजयेत् ५४
ब्रह्माणं शङ्करे स्थाने बलिं कृत्वा विशेषतः
अथवा वारुणे वापि बलिं दद्याद्यथोचितम् ५५
नित्ये नैमित्तिके चैव बलिं सर्वत्र दापयेत्
सर्वत्र बलिदानान्ते माहापीठे समर्चयेत् ५६
यत्र देशे महापीठं तत्र देशे समर्पयेत्
एवं सं कल्पयेद्धीमान्सर्वसम्पत्सुखावहम् ५७
उत्तरस्वायम्भुवे बलिदानविधिपटलः

## चन्द्रअर्चनम्

चन्द्रार्चनं प्रवक्ष्यामि निर्मित्तं निधनेश्वरम्
वश्यार्थं च जयार्थं च लोकानुग्रहकारणम् १
अष्टपत्रदलं वापि चक्रमेव विधीयते
शैलजं लोहं चैव चन्द्रबेरं च निर्मितम् २
पूर्वास्यः पश्चिमास्यो वा स्थापयेन्निधनेश्वर
मण्डूकं कच्छपं वापि तन्मध्ये विन्यसेद्बुधः ३
षडुत्थमासनं प्रोक्तं मध्ये च चन्द्रमूर्तिनम्
प्रागारा +++ दौ रोहिणीं कृत्तिकां तथा ४
रेवती भरणी चैव रात्रि आर्द्रा तथै++
++ चैव कला चैव पूर्वादिदिक्षु योजयेत् ५
सूर्यं चैव बुधश्चैव गीष्पतिं भार्गवं न्यसेत्
आग्नेयादिषु +++ कर्णिका मूलमाहृतः ६
अङ्गारको शनिं चैव राहुकेत्वितरं भवेत्
पूर्वादिलोकपालांश्च यथास्थाने न्यसेत्क्रमात् ७
मूर्तिमन्त्रमनुस्मृत्य मूर्तिमावाह्य देशिकः
रोहिणी कृत्तिका +++ दक्षिणे न्यसेत् ८
सूर्यपूजावसाने तु चन्द्रपूजा विधीयते
चन्द्रपूजावसाने तु शिवपूजा विधीयते ९
शिवपूजावसाने तु महेशादीनि पूजयेत्
एककालं द्विकालं वा पूजये तु यथाविधि १०
स्वयः प्रधानं कर्तव्यमुत्सवादिशिवोक्तवत्
सा गङ्गे तु विशेषेण परिवारक्रमेण तु ११

## प्रवेशबलि

अथ वक्ष्ये विशेषेण प्रवेशबलिरुच्यते

यक्षराक्षसभूताश्च पिशाचा ब्रह्मराक्षसाः १
कालिकाश्च शरल्यश्च ससङ्गान्भैरवादयः
ग्रामादिजीर्णवस्त्रानि न्यस्थाने स्थितस्तितः २
तत्स्थाने प्राप्य सर्वाश्च तृप्तिनामुच्यते गुरुः
ग्रामऋद्धिकरं शान्तं नृपराष्ट्रसमृद्धिदम् ३
तत्तत्स्थानसमृद्धिं च पुत्रदारसुखप्रदम्
तस्मात्सर्वप्रयत्नेन तद्गणस्य बलिं ददेत् ४
भूपरिग्रहकाले च धामारम्भस्य कालके
प्रतिष्ठादिषु कर्तव्यं महामारी प्रकोपने ५
निश्चित्यदिवसात्पूर्वे शुक्रवारसमन्वितम्
कृष्णपक्षे विशेषेण चान्यपक्षे बलिं कुरु ६
निश्चित्यं दिवसे चैव मध्यरात्रौ विशेषतः
यिष्टिकां रजनीचूर्णं शङ्कं चैव पृथक्पृथक् ७
इन्द्रस्थानेऽष्टकोणं च आग्नेय्यां तु त्रिवृत्तकम्
याम्यायां धर्मकोणं च नैर्ऋत्यां सूर्यकोणकम् ८
वारुण्यां विश्व कोणं च वायव्यां षोडशं भवेत्
सौम्यायां स्मृतिकोणं च ऐशान्या द्विगुणं भवेत् ९
तच्चूर्णर्णा+क्तिना चैव पूर्वादिक्रमशो न्यसेत्
ब्रह्मस्थाने महालक्ष्मीं पूजयेत्तु विशेषतः १०
पूर्वभागे तु यक्षाणां रक्तान्नं लाजसक्तुकम्
अजकुक्कुटरक्तं च मृत्पात्रे पूरयेत्सुधीः ११
रक्तपुष्पसमायुक्तं सर्ववाद्यसमन्वितम्
धूपदीपसमायुक्तं बलिकाले तु घोषयेत् १२
आचार्यो मौनमास्थाय उपदेशस्य मार्गतः
ओं ज्वलनेत्रेभ्यो ऊर्ध्वकेशेभ्यो महाबलपराक्रमो
यक्षेभ्यो बलिं प्रयच्छस्व १३

तदृत्तं तर्पयेत्कार्यं  तन्मन्त्रं च स्मरन्गुरुः
त्रि पञ्चसप्तधा वापि कराग्रेण तु तर्पयेत्  १४
इन्द्रस्थाने तु यक्षाश्च मुच्यन्ते पूर्वताग्रके
इत्युत्सृज्य ततः कार्यमग्निस्थाने प्रवेशयेत्  १५
लाजचूर्णं  हरिद्रं च रक्तपुष्पं मधुप्लुतम्
अपूपं चरुसंमिश्रं तन्मध्ये बलिरिष्यते  १६
पूर्ववद्रक्तमापूर्य तर्पणं च यथा कुरु
ओन्नमो भगवते चण्डकोपिने महाराक्षसे बलिं प्रयच्छस्व
१७
राक्षसान्प्रतितृप्त्यर्थं  शेषं पूर्ववदेव हि
पर्वताग्रे विशेषेण तृप्तिनामुच्यते गुरुः  १८
यम स्थाने तु संप्राप्य भूतानां बलिरुच्यते
तुलसी पद्मपुष्पं च अपूपं तिलमिश्रकम्  १९
तद्रक्तं चरुमिश्रं च तत्पात्रेण सुपूजयेत्
उक्त कर्म क्रमेणैव तर्पणं च बलिं कुरु  २०
ओन्नमो भूतेभ्यो मेघतुल्येभ्यो महाबलपराक्रमो
भूतानां बलिं प्रयच्छस्व
उत्सृज्य भूतैः सर्वेषां पर्वताग्रे विशेषतः  २१
नैर्ऋते स्नानदेशे तु पिशाचाश्च बलिं ददेत्
वराहरुधिरं मासे कुक्कुटं चरुमिश्रकम्  २२
रक्तपुष्पं च लाजं च धूपधूम्रेण योजयेत्
तद्रक्तपात्रमापूर्य सर्ववाद्यसमाकुलम्  २३
ओं नमो सर्वपिशाचेभ्यो कृशोदरेभ्यो दीर्घरूपेभ्यो
सर्वपिशाचेभ्यो बलिं प्रयच्छस्व
इदं दत्व बलिं कार्यं  तर्पणं च यथा कुरु  १४
शेषं पूर्वोक्तवत्मस्याद्वनमध्ये विसृज्य च

ब्रह्मराक्षसवारण्ये तद्बलिं चाधुनोच्यते १५
अपूपसत्तुकं चैव रजनीलाजपुष्पकम्
तद्रक्तं पूरयेत्पात्रे तद्द्रव्यं चरुमिश्रकम् १६
सर्ववाद्यसमायुक्तं घण्टारवसमन्वितम्
सर्वपुष्पैः समभ्यर्च्य धूपधूम्रेण योजयेत् १७
तन्मन्त्रेण बलिं कार्यं तर्पणं च क्रमेण तु
ओं दीर्घदम्ष्ट्राय महोदराय ससङ्घान्ब्रह्मराक्षसां बलिं प्रयच्छस्व १८
समुद्रमध्ये विशेषेण ततो यात्रां प्रयुज्यते
वायव्ये कालिकाश्चैव तद्बलिश्चैव कारयेत् १९
सर्वद्रं चरुमिश्रं पात्रे रक्तेन पूरयेत्
सर्वपुष्पैश्च जालैश्च विकिरेत्समलङ्कृते २०
सर्वं पूर्वोक्तवत्कृत्वा चण्डवाद्यसमन्वितम्
ओन्नमो चण्डे शूलकपाली कालीसनसङ्घां स्वधां बलिं प्रयच्छस्व २१
उद्वास्य वनमध्ये स्यात्कालीनां तृप्तिना सह
सौम्यस्थाने शरल्यश्च तत्क्रियां बलिरुच्यते २२
वराहरुधिरं चैव कदलीफलसंयुतम्
चरुलवणसंयुक्तं लड्डुकं च विमिश्रकम् २३
मिश्रपुष्पसमाकीर्णं पात्रे तद्रक्तमानयेत्
बलिं तर्पणकार्यं च पूर्वमेव सुभाषितम् २४
ओं द्विमुखी दीर्घरूपेभ्यो क्रूरदम्ष्ट्रेभ्यो शरल्यां बलिं प्रयच्छस्व
शून्यस्थाने समुद्वास्य शरल्यां तृप्तिना सह २५
ईशानदेशमासाद्यभैरवस्य बलिं ददेत्
सर्वरक्तसमायुक्तं सर्वद्रव्यं च मिश्रकम् २६

सर्वपुष्पं च लाजं च अपूपं तिलमिश्रकम्
तद्रव्यं विकिरेद्व्योमे ततो भूमौ बलिं कुरु २७
ओन्नमो वटुकादिभैरवेभ्यो नवेभ्यो नवेभ्यो नग्नरूपेभ्यो
पाताले बलिं प्रयच्छस्व
समुद्रमध्ये उद्वास्य ससङ्घान्भैरवान्सह २८
अथवान्यप्रकारेण किञ्चिद्भेदं विथीयते
महीषां च गजां प्रोक्ता वराहाहाः कुक्कुटास्तताम् २९
अर्जां चैव तु कर्तव्यं स्थानं प्रति विशेषतः
प्रवेशबलिरित्युक्तमाचार्यः शिष्य एव वा ३०
अजादिरक्ता भावश्चेञ्जले कुङ्कुममिश्रकम्
अपूपां च कूश्माण्डखण्डं च रजनी मिश्रबुद्धिमान् ३१
++ राक्षोघ्नहोमं पश्चात्तु दिशाहोममतः परम्
भूसुरान्भोजयेत्तत्र सर्वकर्मसमाचरेत् ३२
इत्युतरस्वायम्भुवे प्रवेशबलिपटलः

## स्थूपिपूजै

अथ वक्ष्ये विशेषेण मूर्ध्नेष्टकाविधिं शृणु
प्रासादस्याग्रतो वापि ईशाने चोत्तरेऽपि वा १
मण्डपं वा प्रपां वापि लक्षणोक्तविधानतः
लोहजं दारुजं वापि स्थूपिस्तम्भं विशेषतत् २
तत्प्रमाणं च कर्तव्यं पूर्वमेव सुभाषितम्
इष्टिकाया प्रमाणं च तत्प्रमाणेन बुद्धिमान् ३
शालिपिष्टमयेनाथ लेखयेदक्षराणि तु
यकारं पूर्वभागे तु रकारं दक्षिणे तथा
लकारं पश्चिमे भागे वकारं चोत्तरे तथा ४
विकारं मध्यमे न्यस्त्वा ओं कारादिसमन्वितम्

एवमेव क्रमेणैव तदन्ते शिल्पिमोचनम्  ५
प्रथमं स्थानशुद्धिं च अङ्कुरं तु द्वितीयकम्
सायह्नसमये काले क्षेत्रमृद्गृह्य बुद्धिमान्  ६
दशनाड्यधिकं तत्र बीजनिर्वाणमुच्यते
शेषकर्माणि सर्वाणि पूर्वमेव क्रमेण तु  ७
अपरे दिवसे चैव कर्तव्यं तु यथाविधिः
तद्दिने वा प्रकर्तव्यं तत्कर्म समारभेत्  ८
विघ्नेशयजनं पूर्वं  सकल्प्यमिति बुद्धिमान्
पुण्याहं वाचयित्वा तु पञ्चगव्यं च साधयेत्  ९
अष्टमृत्साधनं चापि कषायोदकमेव च
तदन्ते स्थूपिकीलं च इष्टिकायां च संग्रहेत्  १०
दण्डशुद्धिं ततः कृत्वा ततो ग्रामप्रदक्षिणम्
द++ डि द्विगुणं वापि जलमध्ये निवेशयेत्  ११
तिरे पुण्याहमेवोक्तं शालिभिस्थण्डिलद्वयम्
तदूर्ध्वौ नवसङ्ख्यैश्च कलशान्पूजयेत्ततः  १२
मध्ममे मूर्तिकुम्भं तु आवृतं परिवारकैः
गङ्गा च यमुना चैव नर्मदा च सरस्वति  १३
सिन्धु गोदावरी चैव कावेरी ताम्रपर्णिका
स्वस्वमन्त्रैः समभ्यर्च्य गन्धपुष्पादिभिः क्रमात्
तद्बिम्बं तु समुद्धृत्य जलतीरे निवेशयेत्  १४
तन्मन्त्रं च समनुस्मृत्य स्थूपिकालेऽभिषेचनम्
इष्टिकायां क्रमेणैव अभिषेकं पृथक्पृथक्  १५
वस्त्रैरावेष्ट्य यत्नेन आलयं तु प्रवेशयेत्
वेदिमद्धे विशेषेण शाल्यादिभिरलङ्कृतम्  १६
तन्मध्ये मूर्तिकुम्भं तु आवृतं लोकपालकैः
पिधानवस्त्रकूर्चाढ्यान्गन्धामपरिपूरितान्  १७

हेमरत्नविनिक्षिप्ता कूर्चवस्त्रेण संयुतान्
गन्धपुष्पैः समभ्यर्च्य तत्तध्यानमनुस्मरन् १८
इष्टिकां स्थूपिकीलं च रक्षाबन्धं पृथक्पृथक्
कुम्भस्य वामपार्श्वे तु कीलं तत्रैव विन्येत् १९
उत्तराग्रसमायुक्त पूर्वाग्रं चैव कल्पयेत्
कुम्भस्य दक्षिणे पार्श्वे इष्टिकां विन्यसेत्क्रमात् २०
मण्डपं पूजयेत्पश्चात्सौरादि गुरुपूजयेत्
++द्यध्ययनं कुर्याद्ब्राह्मणान्वेदपारगान् २१
स्थण्डिकायां न्यसेदूर्ध्वे नवरत्नं च संग्रहेत्
सोमं ईशानयोर्मध्ये स्थापयेत्स्थण्डिलोपरि २२
आकारादीनि मन्त्राणि मध्यमादिक्रमेण्यसेत्
कुण्डे वा स्थण्डिले वापि कल्पयेद्देशिकोत्तमः २३
तुर्यश्राण्यथ वृत्तानि पूर्वाद्यैशान्तमाचरेत्
ततो होमं प्रकर्तव्यमग्निकार्योक्तमार्गतः २४
उदुम्बरवटाश्वत्थप्लक्षन्य ++जस्विह
पूर्वादिषु प्रकर्तव्यं पृथिव्यादीनि मन्त्रकैः २५
पार्थिवादीनि तत्वानि पञ्चविंशति होमयेत्
पूर्णाहुतिः प्रकर्तव्यं प्रायश्चित्तमथाचरेत् २६
प्रभाते विमले धीमान्नक्षत्र +++ ते
सुमुहूर्ते सुलग्नैश्च तत्काले च विशेषतः २७
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
कुम्भानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् २८
इष्टिकां स्थूपिकीलं च परिचारः समा ++
++ र्ववाद्यसमायुक्तं सर्वभक्तजनैः सह २९
स्वस्तिवाचकसंयुक्तं मुखशब्दसमाकुलम्
जयशब्दसमायुक्तं प्रदक्षिणमथाचरेत् ३०

शिखरोर्ध्वे तु संस्थाप्य पुण्याहं तत्र कारयेत्
अनन्या ++ पेत स्थापयेदिष्टिकां क्रमात् ३१
पञ्चब्रह्ममनुस्मृत्य पूर्वादि स्थापयेद्गुरुः
पृथिव्यादीनि तत्वानि मध्यादीन्विन्यसेत्ततः ३२
मध्यमे नवरत्नानि मध्यमादिक्रमेण तु
मणिर्मरकतं चैव वैडूर्यमिन्द्रनीलकम् ३३
मुक्ता स्फटिकपद्मं च वज्रं चैव प्रवालकम्
ईशान्यस्य कलान्यस्त्वा स्थूपिं तत्रेव विन्यसेत् ३४
कुम्भाद्बीजं समादाय स्थूप्यग्रे विन्यसेद्बुधः
तत्तत्कुम्भजलैश्चैव तत्तत्स्थानेऽभिषेचयेत् ३५
रक्षाबन्धं विसृज्याथ गन्धमाल्यानुलेपनम्
पायसं च निवेद्याथ ताम्बूलं च निवेदयेत् ३६
धूपदीपसमायुक्तं स्तोत्रमङ्गलसेवितम्
एवं क्रमेण विधिना स्थूपिं तत्रेव विन्यसेत् ३७
द्वितला त्रितलान्तं तु अवद्दीपं बहिः क्रमात्
एकभौमे तु कर्तव्यं शिखरोर्ध्वे द्विभा + यः ३८
पादायामसमं वापि अधिष्ठानोदयं तु वा
अथवा पूजमानं तु उत्सेधं परिकीर्तिदम् ३९
स्थूपिमूलविशालं तु पादमूलविशालकम्
अग्रमङ्गलविस्तारमानुपूज्यात्कृशक्रमात् ४०
चतुरश्रं भवेन्मूलं अष्टाश्रमध्यमं भवेत्
ऊर्ध्वे संवृत्तमेवं स्याच्छिखीपादमधोन्यसेत् ४१
विस्ताराद्द्विगुणायामं विस्तारसमविस्तृतम्
आयामं पञ्चभागे तु एकांशं सनमुच्यते ४२
तद्द्वयं तु समं योज्य पूर्वाग्रं चोत्तराग्रकम्
पञ्चमूर्ति समोपेतं गन्ध्याद्यैरर्चयेत्क्रमात् ४३

इति स्वायम्भुवे प्रतिष्ठातन्त्रे स्थूपिप्रतिष्ठाविधिपटलः

## विमानस्थापनम्

अथ वक्ष्ये विशेषेण विमानस्थापनं परम्
सर्वसिद्धिप्रदं प्रोक्तं सर्वदुःखनिवारणम् १
सर्वलक्षणसंयुक्तं विमानं संप्रकीर्तितम्
हेमराजतताम्रैर्वा निलया चेष्टकेन वा २
पादपेनैव वा कुर्याद्विमानं लक्षणान्वितम्
उत्तरायनकाले तु शुक्लपक्षे शुभे दिने ३
दक्षिणायनकाले वा विमानस्थापनं चरेत्
सुवारेषु सुमुहूर्ते तु स्थापनं सम्यगाचरेत् ४
निश्चित्य दिवसात्पूर्वे सप्तमे पञ्चमेऽपि वा
पूर्वोक्तविधिना चैव कारयेदङ्कुरार्पणम् ५
भूसुरान्भोजयेत्तत्र वासशुद्धिं समाचरेत्
मन्दिरस्य तु पूर्वे वा दक्षिणे पश्चिमेऽपि वा ६
उत्तरे च यथाभोग्यं मण्डपं कल्पयेत्सुधीः
मण्डपस्य तु तन्मध्ये वेदीं तत्र प्रकल्पयेत् ७
वेदिलक्षणवत्कृत्वा तत्पूर्वादिचतुर्दशि
तन्त्रपादसमुत्सेधं दर्पणोत्तरसन्निभम्
उपदेविसमायुक्तं सर्वलक्षणसंयुतम् ८
चतुरश्रं च कुण्डं च पूर्वभागे तु कल्पयेत्
सुषुष्टिकरमारभ्य शरहस्तान्तविस्तृतम् ९
त्रिमेखलसमायुक्तसर्वलक्षणसंयुतम्
यागोपकरणं सर्वं पूर्वमेव सुभाषितम् १०
एवं सर्वं समापाद्य शुद्धिं कृत्वा विचक्षणः
तत्तद्विमानमूर्तीनां पूर्वादीनि क्रमेण तु ११

नेत्रद्वययुते जक्षे कारयेदक्षिमोक्षणः
हेमसूचिप्रभाहाराभ्यां हेमपात्रे मधुं क्षिपेत्  १२
त्र्यम्केन मन्त्रेन तत्र मराडलमालिखेत्
मध्वाज्यादीनि सर्वाणि पूर्वोक्तविधिना दृशेत्  १३
जलाधिवासनं कुर्यात्तत्तदग्रे विशेषतः
हस्तमात्रेण विस्तारं स्थरिडलं तु पृथक्पृथक्  १४
प्रतिबिम्बयुतं तत्र स्थापयेत्स्थरिडलोपरि
त्रिपाद्युपरि कुम्भानि पूर्वादियुगदिक्षु च  १५
तत्तत्पृष्ठे तु हैमेन नालात्तु वा संबन्धयेत्
तन्नालार्क तत तोयं स्त्रावयेद्दर्पणोपरि  १६
तत्तद्दिशासु मूर्त्तिनां नेत्रोन्मीलनमाचरेत्
रक्षाबन्धादिवासं च बिम्बं प्रति विशेषतः  १७
जलाधिवासनं चैव एकबिम्बे सुयोजयेत्
जलाधिवासनं ह्येवं मराडपं तु प्रवेशयेत्  १८
समरीयपदे सम्यग्वास्तुहोमं समाचरेत्
पर्यग्निकरणं कुर्यात्पुनः पुरायाहमाचरेत्  १९
कर्मं प्रति विशेषेण संपूजितक्रमेण तु
स्वर्णादिसूत्रसंग्राह्य तत्तद्धस्ते च बन्धयेत्  २०
सूच्यग्रे बन्धयेद्धीमान्गर्भमालाभिरावृतम्
भोमाब्दिस्थूपिपर्यन्तं नव वस्त्रेण वेष्टयेत्  २१
तद्बिम्बा त्वेष्टयेद्धीमान्येनं कल्पयेद्बुदा
मखमराडपवेद्यूर्ध्वे स्थरिडलं पूर्ववत्कुरु  २२
ग्रधाराधेयमार्गेण ग्रावाहनं च क्रमेण तु
सदाशिवं यजेन्मध्ये वसान्तु मनोन्मनी  २३
परितोष्टौ घटं न्यस्य वस्त्रकूर्चादिसंयुतान्
चराडरुद्रो महावेगो विबुधो विमलोत्तमः  २४

विश्वरूपो विरूपाक्षो भूतरूपोऽव्यवाहनः
एतान्विमानपालाश्च पूर्वादिकलशान्न्यसेत् २५
स्कन्दकुम्भं न्यसेन्मध्ये पार्श्वौ शौचसंस्थितौ
विन्यस्त्वावधिकुम्भानि तत्पूर्वाष्टदिक्षु च २६
स्कन्द चैव कुमारं च सुब्रह्मरायं तथैव च
कार्त्तिकेयं च सेनां च षरामुखं शिखिवाहनम् २७
सेनापतिं च इत्येतत्पूर्वादिकलशान्न्यसेत्
महेश्वरं तु मध्ये च उमाकुम्भं तु शङ्करे २८
अच्युते अनन्तमूर्तिस्तु चक्रपाणि जनार्दनः
पुरुषः पुरुष्टुतश्चैव गोविन्दो वित्तनायकः २९
विधिकुम्भं न्यसेन्मध्ये आवाहनादिक्रमेण तु
महालक्ष्मि सरस्वत्यौ दक्षिणे दक्षिणस्थितौ ३०
तत्पूर्वाद्यष्टकुम्भेषु ++ रं च पितामहः
प्रजापतिं च धातारं सृष्टिमूर्तिं चतुर्मुखम् ३१
अजं हिरण्यगर्भं च विन्यसेत्तु क्रमेण तु
ध्यायेद्गन्धपुष्पं च स्वस्वमन्त्रैश्च पूजयेत् ३२
सौरादिगुरुपूजान्तं तत्तत्पूर्वे यथा कुरु
एवं संपूज्य विधिवदुपदेशस्य मार्गतः ३३
ततो होमं प्रकर्तव्यमग्निकार्योक्तमाचरेत्
सदाशिवं यजेन्मध्ये परिवारगणैः सह ३४
अष्टोत्तरशतं वापि तदर्धं वापि होमयेत्
होमद्रव्याणि सर्वाणि षडङ्गे ब्रह्मपञ्चकैः ३५
पालाशखदिरं चैव शमी श्रीपत्रमेव च
अपामार्गं च कर्तव्यं तत्तन्मूले क्रमेण तु ३६
पूजयेद्गन्धपुष्पाद्यैस्तत्तद्ध्यानमनुस्मरन्
संहारमुद्रयादाय कुम्भमध्ये सुयोजयेत् ३७

परिवारान्समादाय परिवारघटान्न्यसेत्
तत्तद्दिशासु मूर्त्तीनां सन्निधानाद्माहुतिम् ३८
तत्तध्यानमनुस्मृत्य पूर्वसङ्ख्या च होमयेत्
सर्वद्रव्यं च सम्मिश्रं पूर्णाहुतिमथाचरेत् ३९
निरोधार्घ्यं ददेत्पश्चान्नैवेद्यं च दापयेत्
तत्तन्मन्त्रक्रमेणैव अष्टोत्तरशतं जपेत् ४०
एवं जागरणं रात्रौ प्रभाते विमले शुभे
आचार्यः सुप्रसन्नात्मा सोष्णीषश्चोत्तरीयकः ४१
आत्मदैवतमभ्यर्च्य सर्वालङ्कारशोभितः
प्रायश्चित्तं ततो हुत्वा पूर्णाहुतिमथाचरेत् ४२
स्विष्टमग्नेतिमन्त्रेण हुत्वाग्निं तु विसर्जयेत्
तत्काले सर्ववाद्यैश्च मुखशब्दसमन्वितम् ४३
कुम्भानुद्धृत्य शिरसा वासयामप्रदक्षिणम्
षडध्वन्यासकं कार्यमधिष्ठानादिकं न्यसेत् ४४
मन्त्रन्यासमिदं कार्यं सतां पूजा समाचरेत्
रक्षाबन्धं विसृज्याथ निरोधार्घ्यं ददेद्गुरुः ४५
मुहूर्ते समनुप्राप्ते तत्तत्स्थानेऽभिषेचयेत्
गुरुपदिष्टमार्गेण अन्यदेवान्सुपूजयेत् ४६
पायसं च निवेद्याथ ताम्बूलं च निवेदयेत्
इति स्वायम्भुवे विमानस्थापनपटलः

## षडध्वान्यासम्

ओं कालाग्नये नमः । हाटकाय रुद्राय इति
मध्ये । कपालीशाय अजाय बुधाय वज्रदेहाय प्रमर्दाय
विभूतये अव्ययाय शास्त्रे पिनाकिने त्रिदशाधिपाय इति
पूर्वे । अग्निरुद्राय हुताशनाय पिङ्गलाय खादकाय हराय

ज्वलनाय दहनाय बभ्रवे भस्मान्तकाय क्ष हुन्तकाय इति
आग्नेय्याम् । याम्याय मृत्यवे धात्रे वियोक्त्रे संयोक्त्रे
धर्माय पदये इति
दक्षिणे । निर्ऋतये मरणाय भन्त्रे क्रूराधिये भयानकाय
ऊर्ध्वकेशाय विरूपाक्षाय धूम्राय तायाय दम्ष्ट्रिणे इति
निर्ऋते । बलाय अतिबलाय पाशहस्ताय अतिबलाय
श्वेताय जयभद्राय दीर्घहस्ताय जलान्तकाय मेघनादाय इति
पश्चिमे । लाघवे वायवेगाय सूक्ष्माय तीक्ष्णाय
अक्षान्तकाय पञ्चान्तकाय पञ्चशिखाय कपर्दिने
मेघवाहनाय इति वायव्ये । निशान्तकाय कूपवह्न्ये
धन्याय सौम्यदेहाय जटाधराय लक्ष्मीधराय रक्तधाराय
श्रीधराय प्रसन्नाय प्रकाशाय इत्युत्तरे । विद्याधिपाय
ईशानाय सर्वज्ञानाय ज्ञानभुजे वेदपारगाय सुरेशाय शर्वाय
ज्येष्ठाय भूतपालाय बलिप्रियाय इति ईशाने । वृषाय
वृषधराय अनन्ताय क्रोधनाय मारुताशनाय ग्रसनाय
उदम्बरीशाय फणीन्द्राय वज्राय दंष्ट्राय इत्यधोभागे ।
शंभवे विभवे गणाध्यक्षाय त्र्यक्षाय त्रिदशेश्वराय
सिंहवाहनाय विवाहाय नभवे लिप्सवे त्रिलोचनाय इति
ऊर्ध्वे । वीरभद्राय भद्रकाल्यै इति तदूर्ध्वे इति
अष्टाधिकशतादि ओं खड्गहस्त सक्ष्म्यरि ऊर्ध्वस्थे
पञ्चपृथिवीगताः । अमरेशाय प्रभाशाय नैमिशाय
पुष्कराय आषाढे डिण्डिने खण्डने भारभूतये लकुलीश्वराय
इति अप्तत्वे हरिश्चन्द्राय श्रीशैलाय जल्पेशाय अमृकै
+++ राय मध्यमेशाय महाकालाय केदाराय भैरवाय
इति अग्नितत्वेऽगयाय कुरुक्षेत्राय नखाय नखलाचय
विमलेशाय अट्टहासाय महेन्द्राय भीमकेश्वराय इति

वायुतत्वे । वस्त्रापथाय कुरिकोटये अविमुक्ताय महालयाय गोकर्णाय भद्रकर्णाय सुवर्णाक्षाय स्थाणवे इति आकाशतत्वे ।
छगण्डाय द्विरण्डाय महाकोटाय मण्डलेश्वराय कालज्ञाय शङ्कुकर्णाय स्थूलेश्वराय स्थलेश्वराय इत्यहङ्कारतत्वे । पैशाचाय राक्षसाय गान्धर्वाय ऐन्द्र्याय सौम्याह प्राजेशाय ब्रह्मणे इति मनस्तत्वे । अकृताय कृताय भैरवाय ब्रह्मा वैष्णवाय कौमाराय भौमा श्रीकण्ठाय इति प्रकृतितत्वे । इत्येवं षट्पञ्चाशत् अप्तत्वादिप्रकृत्यं सप्ततत्वेषु श्रीवामाय भीमाय उग्राय भवाय ईशानाय एकवीराय इति पुरुषतत्वे । जोतिश्याय संवर्त्ताय इति विद्यातत्वे । लकुलीश्वराय पञ्चान्तकाय इति कालतत्वे । एकवीराय शिखेदाय माहाद्युतये वामदेवाय हलो भवाय एकपिङ्गेक्षणाय भुवनेश्वराय ईशानाय अङ्गुष्ठमात्राय इति मायातत्वे । वामायै जेष्ठायै रौद्र्यै काल्यै कलविकरणै बलविकरणै बलप्रमथन्यै सर्वभूतदमन्यै मनोन्मन्यै इति शुद्धविद्यातत्वे । अनन्तेशाय ब्रह्मभागे सूक्ष्माय शिवोत्तमाय एकनेत्राय एक रुद्राय त्रिमूर्त्तये श्रीखण्डाय शिखण्डिने सदाशिवाय इति विष्णुभागे । निवृत्यै प्रतिष्ठायै विद्यायै शान्त्यै शान्त्यतीयायै इण्डिकायै दीपिकायै रोचिकायै मोचिकायै ऊर्ध्वगामिन्यै व्यापिन्यै व्योमरूपिणै अनन्तायै अनाथायै अनाश्रितायै इति । रुद्रभागे । ओं हां शिवतत्वाय नमः । ओं हां शिवतत्वाधिपतये शिवाय नमः । शक्तितत्वाय शक्तिमते सदाशिवतत्वाय अजेशाय ईश्वरतत्वाय चतुराननाय विद्यातत्वाय कल्याणाय मायातत्वाय विशाक्षाय

कालतत्वाय केतुध्वजाय कलातत्वाय अनलाननाय
विद्यातत्वाय महानादिने नियतितत्वाय मेघजाय
रागतत्वाय नादाय पुरुषतत्वाय प्लवाय प्रकृतितत्वाय
पितामहाय बुद्धितत्वाय बुध्यै अहङ्कारतत्वाय अहङ्कृते
मनस्तत्वाय संकल्पाय शृतितत्वाय पनाय अव्यक्ततत्वाय
महानादिने नियतितत्वाय घनानान्ताय चक्षुस्तत्वाय
कृणीभुजे जिह्वातत्वाय समादानाय नासातत्वाय भद्रभाय
वाक्तत्वाय विलुम्बकाय पाणितत्वाय महावक्त्राय
पादतत्वाय प्रकाशाय पायुतत्वाय सर्वज्ञाय उपस्थतत्वाय
व्योराय शब्दतत्वाय सूक्ष्माय स्पर्शतत्वाय नादाय
रूपतत्वाय बलवत्तराय रसतत्वाय भानुमते गन्धतत्वाय
जयदाय आकाशतत्वाय गन्धसंज्ञकाय वायुतत्वाय
मातरिश्वरन्ने अग्नितत्वाय षान्तिपथ अप्तत्वाय जलेशाय
पृथिवितत्वाय श्रीकराठाय नमः ।
इषत्रिंशत्व ओं हां व्योमव्यापिने नमः ।
व्योमरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय
अनाश्रिताय शाश्वताय योगपीठसंस्थिताय नित्यं योगिने
ध्यानहराय ओं नमः शिवाय ईशानमूर्धाय तत्पुरुषवक्त्राय
अघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तये ओं
नमो नमः गुह्यादि गुह्याय गोप्त्रे अनिधना निधनाय
सर्वविद्याधिपाय सर्वगेयागात्तिधि कृताय ज्योतिरूपाय
परमेश्वरपराय चेतनाचेतना । अचो अचेतना व्योमि-
न्व्योमिन्व्यापिन्व्यापिन्नरूपिनरूपिन् रूपिन्रूपिन्प्रथम
प्रथमस्तेजस्तेज ज्योतिर्ज्योति अरूप अनग्नि अधूम अभस्म
अनादे नाना नाना धू धू धू धू ओं भूः ओं भुवः ओं स्वः ।
अनिधन निधन निधनोद्भव शिव शर्वपरमात्ममहेश्वर

महादेव तद्भावेश्वर महातेज योगाधिपतये मुञ्चमुञ्च प्रथम प्रथम शर्व शर्व भव भव भवोद्भव सर्वभूतसुखप्रद सर्वसान्निध्यकर इति ।
ब्रह्मभागो ब्रह्म विष्णु रुद्र पर अनर्चितानर्चिता अस्तुतास्तुत पूर्वस्थित पूर्वस्थित साक्षि साक्षि तुरु तुरु पतङ्ग पतङ्ग पिङ्गपिङ्ग ज्ञान ज्ञान इति । विष्णुभागे शब्द शब्द सूक्ष्म सूक्ष्म शिव सर्व सर्वदा सर्वात्मन् ओं नमोन्नम नमः शिवाय शिवायै नमः । इति रुद्रभागे ओं हां क्षं लं हम् । सं षं शम् । लं रं यम् । मं भं बं फं पम् । नं धं दं थं तम् । णम् । डं ढं ठे टं ञं झं जं छं चं ङं घं गं खं कम् इति ब्रह्मभागे अः अं औं ओं ऐं एं ॣं ॢं ॠं ऋं ऊं उं ईं इं आं इति विष्णुभागे अं इति रुद्रभागे ओं हं सद्योजाताय नमः ओं हिं वामदेवाय नमः । ओं हुं अघोराय नमः । ओं हें तत्पुरुषाय नमः । ओं हों ईशानाय नमः । ओं हां हृदयाय नमः ।
ओं हीं शिरसे नमः । ओं हूं शिखायै नमः । ओं हैं कवचाय नमः । ओं हौं नेत्राय नमः । ओं हः अस्त्राय नमः । ओं हो शिवाय नमः । ओं ह्लां निवृत्तिकायै नमः । ओं ह्लीं लं प्रतिष्ठाकलायै नमः । ओं हुं विद्याकलायै नमः । ओं ह्यैं शान्तिकलायै नमः । ओं हौं शान्त्यतीतकलायै नमः । ओं हां बिन्दुमूर्तये नमः । इति कलामन्त्राः ।

## संप्रोक्षणम्

अथ वक्ष्ये विशेषेण संप्रोक्षणविधिक्रमम्
आयुश्रीकीर्तिपुष्टिं धनधान्यविवर्धनम्
प्रासादस्याग्रके वापि अष्टदिक्षु च कल्पयेत् १

नव सप्त पञ्च हस्तं वा उत्तमा मध्यमाधमा
पूर्वोक्तलक्षणोपेतं चतुस्तोरणभूषितम्  २
मण्डपं नवधा कृत्वा मध्ये वेदीं प्रकल्पयेत्
गोमयालेपनं कृत्वा दर्पणोदरसन्निभम्  ३
नवाग्निं वाथ पञ्चाग्निमेकाग्निमथवा चरेत्
दिशासु चतुरश्राणि विदशास्वब्जकुण्डकम्  ४
शङ्करशाकरयोर्मध्ये वृद्धं प्राधानिकं कुरु
पञ्चाग्न्यायतनं ते तु अब्जकुण्डं तु वर्जयेत्  ५
एकाग्निं चेत्प्रकर्तव्यं पूर्वभागे युगाश्रकम्
निश्चित्य दिवसात्पूर्वे अङ्कुरं पूर्ववत्कुरु  ६
प्रवेशबलिदानं च तदन्ते कालिपूजनम्
तदन्ते विप्रपूजां च तदन्ते वास्तुपूजनम्  ७
पर्यग्निकरणं चैव स्थानशुद्धिं तु कारयेत्
आवर्त्तं चेत्यनावर्तं पुनरावर्त्तकं तथा  ८
अन्तरितं हि विज्ञेयं प्रोक्षणं तु चतुर्विधम्
आवर्तादि चतुर्भेदं भेदमन्त्र न विद्यते  ९
किञ्चिद्भेदं विशेषेण उपदेशस्य मार्गतः
विघ्नेशं पूजयेत्पूर्वं संकल्पं तु क्रमेण तु  १०
पुण्याहं वाचयित्वा तु पञ्चगव्यं च साधयेत्
अष्टमृत्साधनं चापि कषायोदकमेव च  ११
बेरशुध्यर्थमेवोक्तं बेरशुद्धिं समाचरेत्
त्र्यम्बकेन मन्त्रेण पद्मपुष्पं समर्चयेत्  १२
रक्षाबन्धक्रमेणैव बृहत्सामेति बन्धयेत्
गन्धमालेपनं कृत्वा नव वस्त्रेण वेष्टयेत्  १३
मृत्युञ्जयं स्मरेद्धीमान्करवीरं समर्चयेत्
तदन्ते यागशालां च स्थानशुद्धिं च कारयेत्  १४

पुनः पुण्याहमेवोक्तं गोमयालेपनं कुरु
भास्करं पूजयेत्पश्चादेकावरणसंयुतम् १५
ऋगाद्यध्ययनं कुर्यात्कोणे मन्त्रजपं कुरु
प्रणवार्घ्यं च संकल्प्य तोरणादीन्सुपूजयेत् १६
शान्तिकला द्वारायेति नमोन्तं पूजयेत्क्रमात्
विद्यानिवृत्ति प्रतिष्ठा च नमोन्तं पूजयेत्क्रमात् १७
पूर्वादीनि समभ्यर्च्य आधाराधेयमार्गतः
द्वारपालान्समभ्यर्च्य नन्दिनं वाम पार्श्वके १८
नन्दिने नम उच्चार्य पाद्यादीन्पूजयेत्सुधीः
कालं च दक्षिणे चैव पूजयेत्तु क्रमेण तु १९
दक्षिणद्वारवामे तु भृङ्गिणे नम अर्चयेत्
गणेशं दक्षिणे भागे तन्मन्त्रं च यजे बुधः २०
पश्चिमद्वारवामे तु वृषभाग नमोन्तकम्
स्कन्दं दक्षिणे भागे तु स्कन्देशाय नमो नमः २१
उत्तरद्वारवामे तु गौरीं चैव तु पूजयेत्
तद्दक्षिणे तु चण्डाय नमो नम इति स्मृतम् २२
तत्तद्ध्यानमनुस्मृत्य अर्चये तु गुरूत्तमः
पश्चिमद्वारवामे तु महालक्ष्मीं तु पूजयेत् २३
तत्वदृष्ट्या विशेषेण पुष्पक्षेपमथा सुमैः
पार्ष्णिघातविशेषेण विघ्नोच्चाटनकर्मकम् २४
पाणिं तु ताडयेद्धीमान्त्रिप्रहार यथा कुरु
इतरद्वाणि संघट्य पश्चिमद्वारमाविशेत् २५
देहल्यां मध्यमे चैव नम अस्त्राय पूजयेत्
वास्तुब्रह्मा विशेषेण तन्मन्त्रेण समर्चयेत् २६
यागमण्डपकादीनां भूमितत्वेन पूजयेत्
जलतत्वनमोन्तं च तृणानां पूजयेत्ततः २७

अग्नितत्वनमोन्ताश्च बन्धेषु यजनं क्रमात्
वायुतत्वनमोन्तां च जातिनां पूजयेत्ततः २८
नम आकाशतत्वं च स्थूणानां पूजयेद्बुधः
इन्द्राय नमश्चैव विताने संप्रपूजयेत् २९
वासुकाय नमश्चैव दर्भमालां प्रपूजयेत्
पूर्वादीनि समारभ्य दर्पणं पूर्णकुम्भकम् ३०
तत्तन्नामैः समभ्यर्च्य पाद्यादीनुपचारकैः
वृषभं चामरं चैव तन्नामेन समर्चयेत् ३१
श्रीवत्सं स्वस्तिकं चैव तत्तन्नामेन पूजयेत्
शङ्खदीपेन कर्तव्यं पूजयेत्तु स्वनामतः ३२
एवं क्रमेण संपूज्य शुद्धतत्वेन भावयेत्
वेदिका दक्षिणे भागे आसनं कल्प्य बुद्धिमान् ३३
उत्तरादिमुखं स्थित्वा सकलीकृतविग्रहः
आत्मदैवतमभ्यर्च्य विशेषार्घ्यं च कल्पयेत् ३४
अस्त्रेण द्रव्यशुद्धिं च आत्मानं पूजयेत्ततः
स्वदक्षिणं पाणितलं गन्धं चैव विन्यसेत् ३५
वामहस्तेन संस्थाप्य धर्मादीनभिमन्त्रयेत्
धर्मज्ञानं च वैराग्यमैश्वर्यं चैव पद्मकम् ३६
कर्णिकायै नमोन्ताश्च मन्त्राणां च स्मरन्गुरुः
मूर्ध्नि मध्ये विशेषेण विन्यसेत्तु विचक्षणः ३७
अभिमन्त्रितपुष्पं च ज्ञानखड्गं च संग्रहेत्
शस्त्रेण दशसङ्ख्यानि अभिमन्त्र्यं तु बुद्धिमान् ३८
पञ्चगव्यं क्रमेणैव योजयेत्तु विचक्षणः
प्रोक्षयेत्पञ्चगव्येन शस्त्रमन्त्रं समुच्चरन् ३९
अर्द्धैत्रं च विशेषेण परिधानाद्यलङ्कृतः
नैर्ऋते चासनं कल्प्य उत्तराभिमुखस्थितः ४०

निरीक्षणप्रोक्षणं च ताडनाभ्युक्षणं मतम्
खड्गेनोद्धारणं चैव पूरणं च समीकरम् ४१
कुट्टनं सेचनं चैव मार्जनं लेपनं तथा
कलारूपं च कल्प्याथ त्रिसूत्री बन्धनं दृढम् ४२
भूलेकाकरणं चैव चतुष्पथं च निक्षिपेत्
वज्रीकरणवेवोत्तं शम्बूरण तु मन्त्रकैः ४३
लाजचन्दनसिद्धार्थ भस्मदूर्वाक्षतान्कुशान्
तद्द्रव्यं च समादाय विकिरान्शस्त्रमुच्चरन् ४४
कुशकूर्चं च संगृह्य वर्धन्याज्रस्य विन्यसेत्
तदूर्ध्वे स्थण्डिलं कल्प्य तोयहेमादिकुम्भकैः ४५
वामे तु वर्धनीं चैव पश्चिमानन निश्चितम्
वृषभाय नमश्चैव कुम्भे आसनमर्चयेत् ४६
कुम्भे मूर्तं च विन्यस्य शिवं साङ्गं च पूजये
व्यालासनं नमोत्तं च वर्धन्यां च चलासनम् ४७
पाशुपतास्त्रमूर्तिं च पूर्वध्यानसंयुतम्
ओं ह्रीं श्रीं क्लीं हुं फट् पाशुपतास्त्राय नमः ४८
हृदं च शिरश्चैव शिखा कवचमेव च
नेत्रमस्त्रं षडङ्गं चैव कीर्तितानि क्रमेण तु ४९
तद्बीजानि समादाय अस्त्रमङ्गानि पूजयेत्
इन्द्रादीनां च संस्थाप्य पूर्वादिकलशेषु च ५०
इन्द्राग्निश्च यमश्चैव निर्ऋतिश्चैव वारुणः
वायुश्चैव तु सोमश्च ईश ब्रह्मा च देवता ५१
निर्ऋतौ विष्णु संपूज्य सास्त्रान्तं नाममर्चयेत्
तदन्ते कुम्भवर्धन्यौ वर्धन्यग्रे प्रदक्षिणम् ५२
तन्नालत्सततं तोयं स्रावयेत्तु परिभ्रमः
विज्ञापनं च कर्तव्यं यागरक्षां यथा कुरु ५३

एवं विज्ञाप्य तत्काले पूर्वस्थाने प्रकीर्तितम्
कुम्भे त्वाधारशक्त्यादि स्थिरासनं प्रपूजयेत्  ५४
प्रथमावरणादीनि शिवं साङ्गं च पूजयेत्
स्वस्वमन्त्रं समुच्चार्य पूर्वमेव क्रमेण तु  ५५
वर्धन्यायां विशेषेण पाशुपतं स्थिरासनम्
अस्त्रमूर्तिं च विन्यस्य वर्धनीं पूजयेद्धृदा  ५६
उद्भवो मुद्रया चेति शिव शक्तिरिति स्मृतम्
वर्धन्याङ्गुष्ठमात्रेण कुम्भं मुष्येन संस्पृशेत्  ५७
भगलिङ्गं समायोगं भुक्तिमुक्तिप्रदाय च
ततः कुम्भे शिवं पूज्य तत्वमूर्तिं च पूजयेत्  ५८
मूलमन्त्रशतं जप्त्वा तद्दशांशं च वर्धनीम्
यज्ञस्यास्य पतिस्त्वं हि मूर्तिरिषा तवाचला  ५९
एष ते ज्ञाननिस्त्रिंशत्तद्गृहाण स्वमायुधम्
एवं विज्ञाप्य सर्वं तु खड्गमन्त्रेण दापयेत्  ६०
भवद्यागं जगन्नाथ रक्ष भक्तानुकम्पया
इति विज्ञाप्य कार्यं तु निरोधार्घ्यं यथा कुरु  ६१
वायौ गणेशमैशान्यां गुरून्संपूजयेत्ततः
महादेवीं ततः कृत्वा आधाराधेयमार्गतः  ६२
सदाशिवं यजेन्मध्ये शिवबीजमनुस्मरन्
ऐशान्य वर्धनीं न्यस्य मनोन्मन्यास्तु मन्त्रकम्  ६३
पूर्वाद्यैशान्तकुम्भेषु अनन्तादींश्च पूजयेत्
स्वस्वमन्त्रैः समभ्यर्च्य गन्धपुष्पादितिर्यजेत्  ६४
निवेद्यादीनि कर्तव्यमुपचाराणि सर्वशः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्  ६५
समिधा सद्यमन्त्रेण आज्यं वामेन होमयेत्
अघोरेण चरुं हुत्वा लाजादीन्पुरुषं हुनेत्  ६६

ईशानेन तिलं हुत्वा शुचीवोहेन सर्षपम्
कदलीफलमस्त्रेण कूश्माण्डेन गुलं हुनेत् ६७
अपूपं पतिमन्त्रेण बीजमुख्येन माषकम्
नालिकेरं शिवेनैवं इक्षुखण्डं तथैव च ६८
द्रव्यं प्रति विशेषेण अष्टोत्तरशतावधि
जयादिरभ्याधानं च राष्ट्रभृच्चैव होमयेत् ६९
मिन्दाहुतिं च कूश्माण्डं प्रायश्चित्ताहुतिं चरेत्
अमाण्येतानि सर्वाणि संपूर्णं कुरु शङ्कर ७०
एवं प्रार्थ्य विशेषेण पूर्णाहुतिमथाचरेत्
तत्काले मूर्तिपान्सर्वान्होमयेत्तु पृथक् पृथक् ७१
तदर्धं वा तदर्धं वा होमयेत्तु क्रमेण तु
प्रायश्चित्तं विना कार्यं पूर्णाहुतिमथाचरेत् ७२
तत्तद्बीजं समादाय तत्तत्कुम्भे सुयोजयेत्
अग्निं विसृज्य विधिवद्यथाशक्तिजपेद्बुधः ७३
एवमेव क्रमेणैव रात्रिशेषं व्यपोह्य च
मुहूर्ते समनुप्राप्ते आचार्यं पूजयेत्ततः ७४
आचार्यः पूजयेत्पश्चान्मूर्तिपान्पूजयेत्ततः
मुहूर्ते समनुप्राप्ते सर्ववाद्यसमाकुलम् ७५
ध्वजादिछत्रपर्यन्तं मुखशब्दसमन्वितम्
वेद्यां स देवमुद्धृत्य आलयं तु प्रदक्षिणम् ७६
देवाग्रे स्थण्डिलं कृत्वा क्रमेण स्थापयेद्गुरुः
रक्षाबन्धं विसृज्याथ आसनावरणं न्यसेत् ७७
अष्टत्रिंशत्कलान्यासमातृका न्यासमेव हि
श्रीकण्ठादीनि विन्यस्य गोलकान्यासमुच्यते ७८
मन्त्रन्यासं तदन्ते तु कुम्भान्बीजेन योजयेत्
वर्धन्यां बीजमादाय शक्तिस्थाने सुयोजयेत् ७९

अनन्तादीनां च कुम्भेषु तत्तद्बीजं च योजयेत्
तत्तत्कुम्भजलैश्चैव तत्तत्स्थानेऽभिषेचयेत् ८०
प्राणप्रकृतियोगेन जप्त्वा रूपं विचिन्तयेत्
गन्धपुष्पैः समभ्यर्च्य बीजमुख्येन बुद्धिमान् ८१
पायसं च निवेद्याथ ताम्बूलं दापयेत्ततः
नित्यार्चने यथानित्यं तथा नित्यार्चनं कुरु ८२
चतुर्थदिवसे किन्तु स्नपनं सम्यगाचरेत्
शान्तिहोमं ततः कृत्वा प्रभूतहविषं ददेत् ८३
एवं संप्रोक्षणं प्रोक्तं प्राणिनां भोगमोक्षदम्
इति स्वायम्भुवे प्रतिष्ठातन्त्रे संप्रोक्षणविधिपटलः

## नृत्तमूर्तिप्रतिष्ठै

अथ वक्ष्ये विशेषेण स्थापनं नृत्तमूर्तिनः
नृत्तं तु नवधा प्रोक्तं पञ्चभेदमिहोच्यते १
प्रथमं तुङ्गनृत्तं च तल्लक्षणपुरस्सरम्
चतुर्भुजं त्रिणेत्रं च सुविकीर्णजटान्वितम् २
मयूपक्षसमायुक्तं बकपिञ्छसमन्वितम्
मौले दक्षे तु धूधूरमर्धचन्द्रसमन्वितम् ३
दक्षिणे तु जटाग्रे तु जाह्नवी सा हि वन्दिना
पत्रं तु वामकर्णे भ दक्षिणेन क्रकुण्डलम् ४
++ दूरणसंयुक्तमुपवीतसमन्वितम्
व्याघ्राजिनाम्बरोपेतं पादकिङ्किणिशोभितम् ५
वामपादं समुद्धृत्य सव्यपादं तु सुस्थितः
डमरुं दक्षिणे हस्ते वामहस्ते निरुद्धते ६
वामहस्ते तु डोलाय अभयं दक्षिणे करे
उत्तमं दशतालेन कारयेन्निधनेश्वरम् ७

भुजङ्गललितं नृत्तं द्वितीर्यन्तप्रशस्यते
चतुर्भुजं त्रिणेत्रं च वामे वामेथवाग्निभृत् ८
उत्तरे डमरुं धृत्वा डोलावारकराम्बुजम्
अभयं दक्षिणे हस्ते किञ्चित्प्रहसिताननम् ९
विक्रमं दक्षिणं पादं अपस्मारोपरिस्थितम्
उद्धृतं वामपादं तु पादाग्रं दक्षिणानुतम् १०
जटाभिः सप्तसङ्ख्याभिः पञ्चसङ्ख्याभिरेव वा
शार्दूलचर्मवसनकटिसूत्रं तु बन्धयेत् ११
भुजङ्गललितं प्रोक्तं शेषं पूर्ववदेव हि
उद्धृतं वामपादं तु स्थितं दक्षिणपादकम् १२
व्याघ्रचर्माम्बरधरं सर्पयज्ञोपवीतिनम्
जटाविकर्णसंयुक्तं बकपिच्छसमन्वितम् १३
धूर्धूरं स्वधनीं चैव वामे वा दक्षिणे दधत्
डमरुं दक्षिणे हस्ते वामहस्ते हुताशनः १४
अभयं दक्षिणे हस्ते सर्पमणिबन्धयुक्
वामहस्ते तु डोलायां कुण्डलं पत्रमेव च १५
भुजङ्गत्रासमाख्यातं शेषं पूर्ववदेव हि
आनन्दताण्डवं पश्चात्तल्लक्षणमिहोच्यते १६
दक्षिणं वक्रपादं तु अपस्मारोपरि स्थितम्
सव्यपादं प्रलम्बन्धु पिताम्बरसमन्वितम् १७
मणिबन्धसमायुक्तं घटिसूत्रसमन्वितम्
अभयं दक्षिणे हस्ते डोलाहस्तं तु वामके १८
डमरुं दक्षिणे हस्ते ज्वलदग्निं च वामके
पत्रं तु दक्षिणे कर्णे वामे वा नक्रकुण्डलम् १९
सिंहे वामकरं वापि दक्षिणेऽदक्षिणेऽथवा
जटाबन्धसमायुक्तं शेषं पूर्ववदेव हि २०

सन्ध्यानृत्तं च संक्षेपाल्लक्षणं पूर्वमेव हि
दक्षिणं पादमुद्धृत्य वामपादं तु सुस्थितम्  २१
लम्बनं वामहस्तं तु अभयं दक्षिणे करे
अग्निं तु वामहस्तेन दक्षिणे डमरु भवेत्  २२
धूर्धूरं बकपत्रं च जटाकीर्णसमन्वितम्
उक्ततालक्रमेणैव युक्तिना कारयेत्सुधीः  २३
सन्ध्यानृत्तं समाख्यातमेवं पक्षं च विधं भवेत्

मन्त्रभेदम्

प्रथमस्य द्वितीयं तु चन्द्रमेकं निवेशयेत्
तद्वर्गे च तथा कुर्यात्पञ्चपञ्चचतुर्थकम्  २४
तद्वीजेन तु संयोज्य नाममद्धमनोन्तकम्
तद्वर्गादिं समुद्धृत्य तृतीय्यस्वरसंयुतम्  २५
बिन्दुनादसमायुक्तं स्वनामपदमध्यमम्
आदिबीजेन संयोज्य स्वनामाद्यक्षरेण तु  २६
++ र्गपञ्चमं बीजं वह्नि मायासमन्वितम्
पूर्वबीजेन संयोज्य स्वनामपदमध्यमम्  २७
बिन्दुनादसमायुक्तं ताण्डवं मन्त्रमुच्यते
नादार्णं तु समुद्धृत्य द्वादशस्वरसंयुतम्  २८
बिन्दुनादसमायुक्तं पूर्वबीजसमन्वितम्
मन्त्रमेवं समाख्यातं संप्रोक्षणमथोच्यते  २९
आवर्तं तु भवेत्पूर्वमनावर्तद्वितीयकम्
तृतीयमन्तरिं च प्रोक्षणं त्रिविधं भवेत्  ३०
मधूच्छिष्टोदिना यत्र तद्धेरे प्रोक्षणं तथा
आ++मिति विज्ञेयमनावृत्तमिहोच्यते
प्रायश्चित्तार्थकं यत्र अनावर्तमिति स्मृतम्  ३१

जीर्णबेरं पुनः कुर्यादन्तरितं च कथ्यते
रत्नन्यासं विना कुर्यादक्षिमोक्षं न कारयेत् ३२
प्रतिमाशुद्धिमारभ्य स्नपनान्तं समाचरेत्
अनावर्त्तमिदं प्रोक्तमन्तरितमिहोच्यते ३३
जीर्णोद्धारक्रमेणैव जीर्णमुद्धृत्य बुद्धिमान्
तस्य बेर सकर्तव्यं पूर्वमेव क्रमेण तु ३४
शक्तीनां च तथा कृत्वा वैवाह्यं पूर्ववत्कुरु
प्रासादस्याग्रके वापि ऐशान्ये चोत्तरेऽपि वा ३५
अष्टदिक्षु च कर्तव्यं मण्डपं कल्पयेत्सुधीः
नव सप्त पञ्च हस्तं वा उत्तमा मध्यमाधमा ३६
पूर्वोक्तलक्षणोपेतं सर्वालङ्कारशोभितम्
मण्डपं नव भागं तु मध्यवेदीं प्रकल्पयेत् ३७
रत्निमात्रोच्छ्रयं कुर्यात्षोडशाङ्गुलमेव वा
पञ्चाग्न्यायतनं वाथ एकान्तमथवा चरेत् ३८
दिशासु चतुरश्राणि वृत्तमीशे प्रकल्पयेत्
एकाग्न्यायतनं चेत्तु पूर्वभागे युगाश्रकम् ३९
गोमयालेपनं कृत्वा दर्पणोदरसन्निभम्
निश्चित्यदिवसात्पूर्वे अङ्कुरं पूर्वमाचरेत् ४०
तैलाभ्यङ्गं समायुक्तं वरं भूसुरभोजनम्
दक्षिणां दापयेत्तत्र वास्तुपूजां तदन्तके ४१
पर्यग्निकरणं कृत्वा स्थानशुद्धिं च कारयेत्
प्रथमं रत्नविन्यासं द्वितीयं नेत्रमोक्षणम् ४२
तृतीयं प्रदक्षिणं प्रोक्तं तोयाधिवासनं परम्
दशनाडीं समारभ्य यावत्त्रिंशतिनाडिका ४३
अहोरात्रं च कर्तव्यं जलतीरे विनिक्षिपेत्
बेरशुद्धिं ततः कृत्वा पूर्वमेव क्रमेण तु ४४

गणेशं पूजयेत्पूर्वं संकल्पमिति बुद्धिमान्
पुण्याहं वाचयित्वा तु रक्षाबन्धं च कारयेत् ४५
बृहत्सामेति जप्त्वा तु बन्धयेद्दक्षिणे करे
देवीनां च विशेषेण वामे त्वा दक्षिणे करे ४६
यो ब्रह्मेति च मन्त्रेण भस्मानि दापयेत्ततः
मृत्युञ्जयं समुच्चार्य करवीरं समर्चयेत् ४७
तत्पूर्वे यागशालां च शुद्धिं कृत्वा विचक्षणः
ऋगाध्ययनकं कुर्यात्कोणे मन्त्रजपं कुरु ४८
वेदिमध्योत्तरे भागे अण्डजाद्यैस्तु कल्पयेत्
तदूर्ध्वे शाययेद्धीमान्प्राक्छिरश्चोर्ध्ववत्रकम् ४९
दुकूलाद्येस्तु संचाद्य कूर्चं तस्योपरि न्यसेत्
तद्गायत्री समुच्चार्य यथाशक्ति जपेद्बुधः ५०
निद्राकुम्भं च कल्प्याथ पूर्वो वा चोत्तरेऽथवा
प्रणवार्घ्यं च संकल्प्य स्वगुरुं पूजयेत्ततः ५१
भास्करं पूजयेत्पश्चादेकावरणसंयुतम्
पूर्वादिषु चतुर्दिक्षु तोरणात्संप्रपूजयेत् ५२
शान्तिविद्यानिवृत्तिं च प्रतिष्ठा द्वारमेव च
तत्तत्स्वनाममन्त्रेण पूजयेद्गन्धपुष्पकैः ५३
नन्दिनं च महाकालं पूर्वद्वारसमर्चयेत्
भृङ्गीशं च गणेशं च दक्षिणद्वारमर्चयेत् ५४
वृषभस्कन्दसंपूज्य पश्चिमद्वारमर्चयेत्
देवीं चण्डेशमभ्यर्च्य उत्तरद्वारमेव च ५५
तत्तत्स्वनाममन्त्रेण गन्धपुष्पैश्च पूजयेत्
पश्चिमद्वारवामे तु महालक्ष्मीं प्रपूजयेत् ५६
तत्वदृष्ट्या विशेषेण पुष्पक्षेपमथास्त्रतः
पार्ष्णिघाते विशेषेण विघ्नोच्चाटनकर्मकम् ५७

घराटां तु ताडयेद्धीमान् त्रिः प्रहारं यथा कुरु
अन्यद्वाराणि संघट्य पश्चिमद्वारमाविशेत्  ५८
देहल्यां मध्यमे चैव अस्त्रं संपूजयेत्ततः
वास्तुनाथं च नैर्ऋत्यां पूजयेत्तु स्वनामतः  ५९
यागमराडपकम्पीनां भूमितत्वं समर्चयेत्
जलतं च नमोन्तं च तृणानां पूजयेत्ततः  ६०
अग्नितत्वं नमोन्तं च बन्धेषु यजं क्रमात्
वायुतत्वं नमोन्तं च जातीनां पूजयेद्बुधः  ६१
नम आकाशतत्वं च स्थूणानां पूजयेत्सह
चन्द्रयाय नम इत्यन्ते विताने संप्रपूजयेत्  ६२
वासुकयेन मन्त्रेति दर्भमालां प्रपूजयेत्
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम्  ६३
श्रीवत्सं स्वस्तिकं शङ्खदीपं चैव यथाक्रमम्
तत्तत्स्वनाममन्त्रेण पूर्वादियुगदिक्षु च  ६४
एवं क्रमेण संपूज्य शुद्धतत्वेन भावयेत्
वेदिका दक्षिणे भागे आसनं कल्प्य बुद्धिमान्  ६५
उत्तराभिमुखस्थित्वा सकलीकृतविग्रहः
आत्मदैवतमभ्यर्च्य विशेषार्घ्यं च कल्पयेत्  ६६
अस्त्रेण द्रव्यशुद्धिस्यादात्मानं पूजयेत्ततः
स्वदक्षिणं पाणितलं गन्धं चैव तु विन्यसेत्  ६७
वामहस्तेन संस्थाप्य धर्मादीनभिमन्त्रयेत्
धर्मज्ञानं च वैराग्यमैश्वर्यं चैव पद्मकम्  ६८
कर्णिकायां नमोन्तं च मन्त्राणां च स्मरन्गुरुः
मूर्ध्निमध्ये विशेषेण विन्यसे त्तु विचक्षणः  ६९
अभिमन्त्रितपूर्वं च ज्ञानखड्गं च संग्रहेत्
शस्त्रेण दशसङ्ख्याभिरभिमन्त्रितबुद्धिमान्  ७०

पञ्चगव्यक्रमेणैव योजयेत्तु विचक्षणः
प्रोक्षयेत्पञ्चगव्येन शस्त्रमन्त्रसमुच्चरन् ७१
अद्वैतं च विशेषेण परिधानाद्यलङ्कृतम्
नैर्ऋते आसनं कल्प्य उत्तराभिमुखस्थितः ७२
निरीक्षणं प्रोक्षणं च ताडनाभ्युक्षणमतम्
खड्गेनोद्धारणं चैव पूरणं च समीकरम् ७३
कुट्टनं सेचनं चैव मार्जनं लेपनं तथा
कलारूपं च कल्प्याथ त्रिसूत्रीबन्धनं दृढम् ७४
भूलेखाकरणं चैव चतुष्पथं च विनिक्षिपेत्
वज्रीकरणमेवोक्तं शम्बरेण तु मन्त्रकैः ७५
लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतान्कुशान्
तद्द्रव्यं च समादाय विकिरान्शस्त्रमुच्चरन् ७६
कुशकूर्चं च संगृह्य वर्धन्यामथ विन्यसेत्
तदूर्ध्वे त्वासनं कल्प्य तोयहेमादिकुम्भकम् ७७
वामे तु वर्धनीं चैव पश्चिमाननिश्चिताम्
वृषभाय नमश्चैव कुम्भे त्वासनमर्चयेत् ७८
कुम्भे मूर्तिं च विन्यस्य शिवं साङ्गं च पूजयेत्
व्यालासनं नमोन्तं च वर्धन्यां च चलासनम् ७९
पाशुपतास्त्रमूर्तिं च पूर्ववध्यानसंयुतम्
ओं ह्रीं श्रीं क्लीं हुंफत् पाशुपतास्त्राय नमः ८०
हृदयं च शिरश्चैव शिखा कवचमेव च
नेत्रमस्त्रं षडङ्गानि कीर्तितानि क्रमेण तु ८१
तद्बीजानि समादाय अस्त्रमङ्गानि पूजयेत्
इन्द्रादीनां च संस्थाप्य पूर्वादिकलशेषु च ८२
इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वारुणस्तथा
वायुश्चैव तु सोमश्च ईशो ब्रह्मा च देवताः ८३

निर्ऋतौ विष्णु संपूज्य सास्त्रान्तहाममर्चयेत्
तदन्ते कुम्भवर्धन्यौ वर्धन्यग्रे प्रदक्षिणम् ८४
तन्नलात्सततं तोयं श्रावयेत्तु परिभ्रमम्
विज्ञापनं च कर्तव्यं यागरक्षां यथा कुरु ८५
एवं विज्ञाप्य तत्काले निरोधार्घ्यं च दापयेत्
कुम्भे त्वाधारशक्त्यादिस्थिरासनं संपूजयेत् ८६
प्रथमावरणादीनि शिवस्याङ्गं च पूजयेत्
स्वस्वमन्त्रं समुच्चार्य पूर्वमेव क्रमेण तु ८७
वर्धन्या सा विशेषेण पाशुपतस्थिरासनम्
अस्त्रमूर्तिं च विन्यस्य वर्धनीं पूजयेद्धृदा ८८
उद्भवमुद्रया चेति शिवशक्तिरिति स्मृतम्
वर्धन्यङ्गुष्ठमात्रेण कुम्भं मुष्ठ्येण संस्पृशेत् ८९
भगलिङ्गसमायोगं भुक्तिमुक्तिप्रदापयेत्
ततः कुम्भे शिवं पूज्य तत्तन्मूर्तिं च पूजयेत् ९०
मूलमन्त्रशतं जप्त्वा तत्तद्दशमांशं च वर्धनीम्
यज्ञस्यास्य पतिस्त्वं हि मूर्तिरिषा तवाचला ९१
एष ते ज्ञाननिस्त्रिंशत्तद्गृहाण स्वमायुधम्
एवं विज्ञाप्य सर्वं तु ज्ञानखड्गं समर्पयेत् ९२
भवद्यागं जगन्नाथ रक्ष भक्तानुकम्पया
इति विज्ञाप्य कार्यं तु निरोधार्घ्यं ददेद्गुरुः ९३
वायव्ये तु गणेशानमैशान्यां तु गुरुं न्यजेत्
महावेदीं ततः कृत्वा आधाराधेयमार्गतः ९४
नृत्तमूर्ति यजेन्मध्ये तत्तद्बीजमनुस्मरन्
ऐशान्ये वर्धनीं न्यस्य गौरीबीजमनुस्मरन् ९५
पूर्वाद्यैशान्तकुम्भेषु अनन्तादींश्च पूजयेत्
स्वस्वमन्त्रैः समभ्यर्च्य गन्धपुष्पादिभिर्यजेत् ९६

निवेद्यानि कर्तव्यमुपचाराणि पूर्ववत्
ततो होमं प्रकर्तव्यमग्निकार्योक्तमार्गतः ९७
समिधा सद्यमन्त्रेण आज्यं वामेन होमयेत्
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु ९८
ईशानेन तिलं हुत्वा शुचीवोहेन सर्षपम्
कदलीफलमस्त्रेण कूश्माण्डेन गुलं हुनेत् ९९
पतिमन्त्रादपूपं च बीजमुख्येन माषकम्
नालिकेरं शिवेनैव इक्षुखण्डं तथैव च १००
द्रव्यं प्रति विशेषेण अष्टोत्तरशतावधिः
जयादिरभ्यधानं च राष्ट्रभृच्चैव होमयेत् १०१
मिन्दाहुतिं च कूश्माण्डं प्रायश्चित्ताहुतिं चरेत्
कर्माण्येतानि सर्वाणि संपूर्णं कुरु शङ्कर १०२
एवं प्रार्थ्य विशेषेण पूर्णाहुतिमथाचरेत्
तत्काले मूर्तिपाः सर्वे होमयेयुः पृथक्पृथक् १०३
तत्तदर्धं तदर्धं वा तत्तद्द्रव्यं हुनेत्क्रमात्
प्रायश्चित्तं विना कुर्यात्पूर्णाहुतिमथाचरेत् १०४
तत्तद्बीजं समादाय तत्तत्कुम्भे सुयोजयेत्
अग्निं विसृज विधिवद्यथाशक्ति जपेद्बुधः १०५
एवमेव क्रमेणैव रात्रिशेषं व्यपोह्य च
मुहूर्ते समनुप्राप्ते आमाध्यं पूजयेत्ततः १०६
मूर्तिपान्पूजयेत्तत्र सर्ववाद्यसमाकुलम्
मुखशब्दसमायुक्तं सर्वभक्तजनैः सह १०७
वेदिस्थं देवमुद्धृत्य स्नानश्वभ्रेषु विन्यसेत्
शुक्रं बृहस्पतिं पूज्य दक्षिणां संप्रदाय च १०८
घृतशिरोर्पणं कुर्याद्वेदकुम्भाभिषेचनम्
मन्त्रन्यासं ततः कृत्वा कुम्भाद्बीजं हृदीन्यसेत् १०९

तत्तत्स्थानसमायुक्तं तत्तत्कुम्भाभिषेचनम्
मन्त्रपुष्पं तदन्ते तु पूर्वबीजं समुच्चरन् ११०
पायसान्नं ददेत्पश्चात्ताम्बूलं तु निवेदयेत्
आस्थानमण्डपं प्राप्य सिंहासनोपरिस्थितम् १११
सर्वालङ्कारसंयुक्तं सूरिबृन्तैश्च सेवितम्
मत्कन्या गणिका वापि नर्तनं सम्यगाचरेत् ११२
नानाजातिसमायुक्तं विनोदालोकनं मतम्
महाहविं निवेद्याथ उपचाराणि पूर्ववत् ११३
चतुर्थदिवसेत्किन्तु विभवस्यानुरूपतः
अष्टोत्तरशतादीनि स्नपनं सम्यगाचरेत् ११४
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ११५
इति स्वायम्भुवे प्रतिष्ठातन्त्रे नृत्तमूर्तिस्थापनपटलः

## प्रदोष

अथातः संप्रवक्ष्यामि प्रदोषस्य विधिक्रमम्
आरभ्यास्तमनं भानोः स त्रिपादा त्रिनाडिका १
प्रदोष इति निर्दिष्टो मत्रशम्भुं समर्चयेत्
खेरस्तमनादूर्ध्वं त्रयोदश्यधिका यदा २
प्रदोषप्याजा तत्रैव कर्तव्या काम्यसिद्धये
पुरा मृगण्डुरित्येको महर्षिभार्यया सहा
तपश्चचार पुत्रार्थं मुनीनामपि दुष्करम् ३
ततस्तत्तपसा प्रीतो देदेवो घृणानिधिः
आविरादसीत्तदग्रे तु साम्बो वृषभवाहनः ४
तद्दृष्ट्वा सहसा हृष्टौ दम्पती प्रणिपत्य च
तुष्टाव तुष्टदादेवो उक्तवानभिलाषितम् ५
वेदवेदाङ्गतर्कज्ञो भक्त्या शैशादिसन्निभः

तनयः शोडशोब्दायुः मत्प्रसादाद्भविष्यति ६
इत्यकान्तथोशंभुस्तौ च स्वाश्रममापतुः
सर्वलक्षणसंयुक्तं शिवभक्तं महागुणम् ७
तत्पत्ति सुषवे पुत्रं दृहृष्टिः पिताभ्यप्यभूत्
ग्रधोपतिश्चाप्यस्तवेदो विश्रुतवैभवः ८
तपसा तोषयामास शङ्करं भक्तशङ्करम्
वायुरब्दावसानं तु पित्रे ज्ञात्वा महातपा ९
कालमृत्युं तदा जे तु लिङ्गार्चनरतो भवेत्
षोडशाब्दा भाने तु कालः कालाग्निसन्निभः १०
शूलपाशधरः कृत्वा सर्वलोकभयङ्करः
तत्सकान्तमगात्सोऽपि लिङ्गमालिङ्गसाद्यसात् ११
स्तुतिश्चक्रे स्वपातेश लिङ्गेन सह बालकम्
ग्राषकृष ततो लिङ्गादाविर्भूय महेश्वरः १२
वामपादप्रहारेण कालं संहृत्य तक्षणात्
नित्यत्वं दत्तवान्तस्मै भक्ताय भगनेत्रहा १३
प्रकृष्टदेस्तत्काले प्राणिनो मलगौरवात्
निद्राव्रजन्ति यस्तस्मात्प्रदोष इति कथ्यते १४
तत्काले कालकालं तु ब्रह्मविष्णु हृदादयः
स्वस्वतोषं विनाशार्थं पूजयन्ति विधानतः १५
सायं संहारकालत्वात्सर्वदोषापनुत्तये
विश्वरक्षाकरणडं वृषभं प्रथमं यजेत् १६
प्रस्थानतो जनाभ्यङ्गजपस्वाद्याय मैथुनः
तपा च हरिसेवां च त्वाशंकरार्चयेत् १७
स्नात्वान्तरिं सन्ध्यां कृत्वा चार्यप्रसहधीः
शिवधामप्रविश्याथ भूतशुध्यादिपूर्ववत् १८
कृत्वा शिवाग्रतः पश्चात्कुर्यास्थरिडलकल्पनम्

पुरायाहं वाचयित्वा तु स्नपञ्च तु कर्तनः १९
संस्थाप्य पञ्च ++++ मृतमनन्तरम्
वतं क्रमेण संपूज्य गायत्र्या वृषभं यजेत् २०
धूपं दत्वाथ निर्माल्यं विसृज्य वृषभस्तृतः
अभिषिच्यासनं मूर्तिं मूर्तिमन्त च विन्यसेत् २१
षडङ्गानि च विन्यस्य दिग्बन्धमवकुराठनम्
गोविषाणाह्वया मुद्रा कृत्वा पाद्यादिकं ददेत् २२
तैलाभ्यङ्गं ततः पञ्चगव्यस्नानं विधाय च
शुद्धोदकेन संस्नाप्य गन्धपुष्पादिभिर्यजेत् २३
कृसरान्नं समर्प्याथ ताम्बूलं तदनन्तरम्
धूपादिकं ततो दत्वा जपं कृत्वा समर्पयेत् २४
पृथिव्यां यनि तीर्थानि सागरान्तानि तानि तु
अराडमाश्रित्य तिष्ठन्ति प्रदोषवृषभ + तु २५
दर्भास्तं वृषणं स्पृष्ट्वा पश्येद्रङ्गान्तरे शिवम्
ऋणगरोगादिदारिद्र्या पापक्ष्माद्रपमृत्यवः २६
भयः क्रोधमनः खेदानश्यन्तु मम सर्वदा
इति त्रिवारं विज्ञाप्य मुच्यते सर्वपातकैः २७
अशुष्के तालपत्रे तु विलिख्य शिवसन्निधौ
विज्ञाप्य दहनं कुर्याज्जलतीरे प्रयत्नतः २८
इति त्रिवारं विज्ञाप्य तस्य नास्ति रणादिकम्
द्वारदेवान्समभ्यर्च्य लिङ्गशुद्धिं समाचरेत् २९
पीठार्चनं ततः कृत्वा सकलीकृत्य पूर्ववत्
मूलेनावाह्य सद्यादैः कुरुष्वावाहनादिकम् ३०
हृदयादीनि विन्यस्य कुर्याद्दिग्बन्धनादिकम्
पञ्चगव्यादिभिस्नाप्य पर्षयेत्पिष्टकादिभिः ३१
शुद्धतोयेन संस्नाप्य स्थलशुद्धिं तु कारयेत्

गन्धपुष्पादिभिः पूज्य धूपदीपौ समर्पयेत् ३२
शिवकुम्भं समुद्धृत्य कृत्वा धामप्रदक्षिणम्
कुम्भाद्बीजं समादाय लिङ्गमध्ये तु विन्यसेत् ३३
वर्धनीबीजमादाय पीठनाले तु विन्यसेत्
कुम्भादिभिश्च संस्नाप्य दद्यादाचमनीयकम् ३४
खण्डवस्त्रेण संमृज्य वस्त्राभरणलेपनैः
अलङ्कृत्य च मालाभिरष्टपुष्पैः समर्चयेत् ३५
धूपादिकं ततो दत्वा नैवेद्यं विनिवेदयेत्
इति नैमित्तिकोपेतां नित्यपूजां विधाय तु ३६
सायरक्षां ततः कृत्वा दद्यान्नैमित्तिको यथा
पानीयाचमने दत्वा ताम्बूलं च समर्पयेत् ३७
नैमित्तिकनिवेद्यान्ते पूर्ववन्नित्यहोमकम्
बलिनित्योत्सवं चापि स्वस्वकाले समाचरेत् ३८
पुनर्धूपादिकं दत्वा वेदविज्ञापनादिकम्
कारयित्वाथ नृत्तं च पूजामेवं समर्प्य च ३९
अर्धयामापनं मन्त्री यथा पूर्वं समारभेत्
प्रदोषार्चनमित्युक्तं सर्षप सखावहम् ४०
आयुरारोग्यजयदं अपमृत्युनिवारणम्
प्रदोषयजने हीने राजराष्ट्रादिदोषकृत् ४१
तस्यात्तत्समये विद्वान्शिवपूजामुपक्रमे
उक्तन्यायेन यः कुर्याद्राजराज्यं च वर्धते ४२
अन्यथा विहितं चेत्तु राजराष्ट्राभिचारकृत्
आचार्यं तोषयेत्पश्चाद्यथाशक्त्यम्बरादिभिः ४३
तव स्नेहेन कथितं निधनेश महामते
शृणुष्वावतितो भूत्वा वारपूजां वरप्रदाम् ४४

इत्युत्तरस्वायम्भुवे प्रदोषपूजाविधिपटलः

# महोत्सवम्

पश्चान्मुहूर्तं सन्ध्याया यदा दृश्या त्रयोदशि
तदा शिवस्य विज्ञेयं प्रदोषविधिपूजनम् १
स्तान्मुहूर्तगानो चेत्परतस्तु त्रयोदशी
ग्राह्यास्या द्वादशी मिश्रा प्रदोषविधिपूजने २
द्विमुहूर्तं मुहूर्तं वा यदादृश्या त्रयोदशी
सन्ध्यायां परतस्तत्र प्रदोषविधिपूजनम् ३
अतः परं प्रवक्ष्यामि महोत्सवमनुत्तमः
विश्वसृष्टिस्थितिर्ध्वं सपिधानाय गृहात्मकम् ४
सर्वसंपत्करं पुण्यं सर्वलोकसुखावहम्
आयुरारोग्यजयदं भूपतेरिष्टसिद्धिदम् ५
स च त्रिविध उद्दिष्टो निम्नो नैमित्तिकस्तथा
कामिश्च तत्र नित्याख्य नित्यपूजां समाचरेत् ६
प्रत्यब्दं मानसक्षत्रे तिथिन्वापिषुपायिने
ग्रहणं प्रतिमासं वा नक्षत्रमथवा तिथिम्
निमित्तीकृत्य यः कार्य स नैमित्तिक उच्यते ७
यथेष्टकाले काम्याख्या स्वानुकूलदिने मतः
नैमित्तिकश्च काम्यश्च नवधा परिकल्पितः ८
एकत्रिपञ्चसप्ताहनवाहैकादशाहकैः
द्वादशाहचतुर्युक्ते दशपञ्च दशाहकैः ९
एकाहश्चैव इत्युक्तस्त्र्याहो गौण उच्यते
पञ्चाहे भौतिको नाम सप्ताहो भौवनस्मृतः १०
नवाहः शात्तानामा स्याद्रौद्र एकादशाहकः
द्वादशाहस्तु सौराख्यो मानस्यात्ततः परम् ११
पत्वापत्वदशाहस्यादेवं नवविधो भवेत्
आदित्रयेर्ध्वजारोह हित्वा भेरी प्रहारतः १२

तीर्थान्तं क्रियते कर्म तदन्त्ये ध्वजसंयुताम्
त्रिविधं चैव कथ्यन्ते क्रमादङ्कुरपूर्वकः १३
निर्दिष्टदिवसात्पूर्वे रात्रे कृत्वाङ्कुरार्पणम्
भेर्यादि कुर्यान्नवभृतान्तकम् १४
ध्वजारोहणपूर्वस्यादेव त्रिविध निर्णयः
अथ वै तत्र येकः र्योर्ध्वजारोहणपूर्वकः १५
द्विगुणे त्रिगुणे वापि ध्वजारोहो विधीयते
इत्यनेन प्रकारेषु यः पुरा कल्पितो महः १६
स एव पश्चात्कर्तव्यो राजराष्ट्रहितेषिणा
ध्वजाङ्कुरार्पणं पूर्व द्वितीयें ध्वजरोहणम् १७
भेरी सन्ताडनं पश्चाल्लोकपामन्त्रणं ततः
उत्सवाङ्कुरकर्माथ दष्टतीर्थाङ्कुरं भरेत् १८
सप्तमं सूत्रबन्धस्योदष्टमं मण्डपाच्चाम्
यागेशाराधनं कुर्यान्नवमं दशमं पुनः १९
उत्सवे चार्चनं होमकार्यमेवं दश उच्यते
द्वादशबलिदानं स्यादैव यानं त्रयोदशम् २०
स्नपनं चोत्सवेशस्य विशेषयानत्ततः
नृत्तादिदशनं पश्चात्तैलाभ्यङ्गसमन्वितम् २१
स मुद्गभिन्नं नैवेद्यं नृत्तमूत्तुत्सवं ततः
मृगायात्रां ततः पश्चात्तीर्थ पूर्वदिने पुनः २२
रक्षाबन्धनकर्तव्यं ततः कौतुकतीर्थकम्
चूर्णोत्सवक्रियापश्चान्महातीर्थमनन्तरम् २३
पूर्णाहुतिरथ प्रोक्ता दक्षिणं तदनन्तरम्
मूलदेवस्य यागेशकुम्भस्नानं महार्चनम् २४
ध्वजावरोहणं पश्चाल्लोकपालविसर्जनम्
इत्युत्सवाहाः न्येकोनत्रिंशत्प्रोक्तानि साप्रतम् २५

एतानि क्रमशो वक्ष्ये पधावति धनेश ते
नवाहे वाथ सप्ताहे पञ्चाहे त्रिदिनेऽथवा २६
सद्योङ्कुरं तु वा कार्यध्वजारोहदिनात्पुरा
तदर्धं मूलदेवस्य कृत्वा वैशेषिकार्चनम् २७
भगवन्देवदेवेश समस्तफलसाधक
महोत्सवं करिष्येह तत्र सन्निहितो भव २८
इति विज्ञाप्य देवेश लब्धानुज्ञस्ततो गुरुः
चण्डनाभमलङ्कृत्य संपूज्य यथाविधिः २९
अस्त्रेण स्नाप्य कुन्दालीं शूलं चाभ्यर्चतैः सह
आरामादिस्थलं प्र+++ स्य तत्र संस्थाप्य तान्पुनः ३०
पादप्रक्षाल्य वाचम्य कृत भसूत्रपुत्रकः
सकलीकृत्य समान्यमर्घ्यं संस्थाप्य देशिकः ३१
तोषयित्वा गणाधीशं नालिकेरफलादिभिः
संकल्प्य पुण्याहं तत्र वाचयित्वा तदम्भसा ३२
संप्रोक्ष तत्प्रदेशं तु परिस्तीर्य कुशैः क्रमात्
तन्मध्यमे हृदा भूमिं संपूज्यास्त्रेण तन्मृतम् ३३
कृन्दाल्या हृत्य हैमादिपात्रे क्षिप्त्वा वटं मुद्रा
आपूर्यपटवस्त्राद्यैः पात्रमाच्छाद्य तत्पुनः ३४
नववस्त्रधरः शुद्धोदमत्कृम्यारूढकुञ्जरः
शिवसाधारयन्ग्रामप्रदक्षिणमथाचरेत् ३५
प्रविश्य विनन्तस्थन्यै शान्त्यामुत्तरेऽपि वा
अन्यत्र वा शुभदेशे वितानाद्युपशोभिते ३६
स वारिगोमयालिप्ते स्थण्डिलं परिकल्पयेत्
प्रागुदक्पञ्चसूत्रैस्तु कुर्यात्षोडशकोष्ठकम् ३७
दशसूत्रैस्तथाभूतैरेकाशीतिपदानि च
ईशानादिषु कोणेषु स्थाप्य कोष्ठचतुष्टयम् ३८

दिक्षु द्वे द्वे चतुष्कोष्ठं मध्ये शेषाणि लोपयेत्
तत्र द्वादशपक्षे तु पालिकां घटिकां तथा ३९
शरावं च क्रमच्छम्भुकोणमारभ्य विन्यसेत्
चतुर्विं शति पक्षे ++++ ष्वन्यन्तरेष्टसु ४०
घटिकां पालिकादिक्षु बाह्येन्यत्र शरावकान्
पुण्याहवाचनं कृत्वा संप्रोक्ष्यास्त्रेण बुद्धिमान् ४१
तन्मध्ये विन्यसेत्कुम्भं ससूत्रं वारिपूरितम्
विधानकूर्चवस्त्राढ्यं हेमखण्डेन्दुसंयुतम् ४२
सासनं च समूर्तिश्च सजीवश्चन्द्रमुच्चरन्
श्वेतपङ्कजमध्यस्थं श्वेतवर्णद्विलोचनम् ४३
श्वेतमाल्याम्बराकल्पं ज्योत्स्नानमलमध्यगम्
एकास्यं माससंसक्तसनालकरकैरवम् ४४
तदङ्गानि च विन्यस्य दत्वा पाद्याचमादियुक्
पायसान्नं सपानीयमाचाम्भस्य मन्ततः ४५
पालिकादिष्वधातारः हरिं रुद्रं च पूजयेत्
मुद्गमाषकुलस्थं च माषं सर्षपमाढकम् ४६
सप्त वा पञ्च वा त्रीणि पयसा प्लाविताद्यधः
बीजानिर्बीजसोमबीजेन सप्तकृवोभिमन्त्रि च ४७
निर्वतप्य हृदयेनेन्दुमाकान्तं प्रदर्शये जयेत्
अङ्कुरार्पणमित्युक्तं ध्वजारोहमुच्यते ४८
तदर्धं ध्वजदण्डस्य प्रमाणं प्रथमं शृणु
क्षुद्रं चेद्धामविस्मारद्विगुणं वा तदन्यते ४९
समाना शिखरान्तं वा गलान्तं दण्डदैर्ध्यकम्
महच्चेत्तारसदृशं एकं द्वि त्रितलान्तकम् ५०
नव हस्तं समारभ्य यावत्सप्तदशावधि
कन्यसादिविभेदेन नवधा दण्डमानकम् ५१

कलाङ्गुलसमारभ्य चतुरङ्गुलवृद्धतः
कला त्रयाङ्गुलं यावत्तावद्दराडसनाहकम् ५२
तन्नाहमष्टधा कृत्वा दराडाग्रं भागहीनकम्
स्वभागनाहसंयुक्तं क्रमुकं च श्वत्रणध्वजः ५३
नालिकेरवन्द्रमूर्ध्वे दारु तृणध्वजाः
चम्बकासनमाधूकतालसालपलाशकाः ५४
जम्बुजानि शमीबिल्वखदिराश्वत्थपादपाः
अवत्रा सुषिरा भिन्ना कोटरान्परिग्रहेत् ५५
दराडलक्षरणमित्युक्तं यक्षिलक्षरणमुच्यते
दराडोत्तवृक्षजं वापि वेणुं वा संग्रहेद्बुधः ५६
तद्दराडपञ्चभागैकभागेनैनोपदराडकम्
तालमात्रेण तन्नाहं तदग्रं दराडवद्भवेत् ५७
पञ्चपर्वाभयं लोके षट्पर्वाच्छ्रयावहः
सप्तक्षयं गवां चाष्टपर्वसस्य विवर्धनम् ५८
नव पर्वाकुलं हन्ति दश वै सर्वकामदा
एकाशी पुत्रकदा स्याद्द्वादशमी पुष्टिकामदा ५९
इत ऊर्ध्वं न कर्तव्यं वेणुदराडे विशेषतः
षडङ्गुलादधः कुर्यादधः पट्टं तदग्रके ६०
कषिकासमं पट्टे वलयं योजयेद्दृढम्
दराडोपदराडयोगाय स्कन्दानां त्रयमाहरेत् ६१
रव्यङ्गुलं समारभ्य विंशत्यङ्गुलकावधि
स्कन्धायामः समुद्दिष्टस्तदर्धं मूलविस्मृतः ६२
पञ्चांशे त्र्यंशविस्तारं त्र्यंशे वा द्व्यंशविस्तरम्
स्कन्धाग्रं कारयेत्तेषां सनविंशङ्गुलं भवेत् ६३
दर्व्याकारं विधातव्यं मूलाग्रं सुषिरान्वितम्
तत्वाङ्गुलं समारभ्य वह्न्यङ्गुलविवृद्धितः ६४

पञ्चादशाङ्गुलं तावद्भूममानमिचीषितम्
त्विगवे सति तद्दराडं स्वर्णेन रजतेन वा ६५
ताम्रेण वाथ कासेन त्रपुणा गोलका बलिम्
कारयित्वा विशेषेण भूषयेन्मणिभूः सह ६६
तदग्रे वृषभस्थाप्य तद्द्रव्यैस्थ लक्षणैः
कुर्याध्वजपटं पञ्चसप्तानन्दकरेस्ततः ६७
पञ्च षट्सप्त भागैकविस्तारं नूपुरस्थितम्
कार्पासतन्तुजं तस्य ताराद्धं शिखरं भवेत् ६८
शिखरद्विगुणं पुच्छयुगलं ब्राह्मणादितः
श्वेतं रक्तं तथा पीतं श्यामं सर्वत्र वासितम् ६९
पट पञ्चमभागेन मध्ये वृषभमालिखेत्
अधोभागप्रधो पद्मपीठं पूर्णघटद्वयम् ७०
दीपाधारद्वयं कुर्यात्तदूर्ध्वे छत्रचामरे
कार्पासतन्तुसंसिद्धं सुखारोहणयोग्यकम् ७१
अङ्गुष्ठानाहं रकं चक्षुष्टघराटासमन्वितम्
एवं समस्तं संपाद्य कुर्याद्द्रेषाधिवासनम् ७२
ततो गुरुकृतः स्नानः सकलीकृतविग्रहः
सामान्यार्घ्यकरो भूत्वा मराडपे कलशावृते ७३
सौरकुम्भं समभ्यर्च्य द्वाराणि द्वारपानपि
पश्चिमे द्वारपानिष्ट्वा विघ्नानुच्चाटय्य सर्वशः ७४
अन्तः प्रविश्यं देहल्यां अस्त्रं संपूज्य नैर्ऋते
वास्तुब्रह्माणमिष्ट्वाथ वेदी दक्षिणसंस्थितः ७५
वृषस्य ब्रह्ममूलाङ्गैर्भूतशुध्यादिकं क्रमात्
कर्मकृत्वानुशुध्यन्ते वृषभस्मं च कल्पयेत् ७६
पञ्चगव्यं च संस्थाप्य कृत्वा पाराडच्पसंकृतिम्
पञ्चगव्येन संप्रोक्ष्य विकीर्य विकिरानथ ७७

स्माहृत्यादसने कुम्भवर्धन्यो ईशदिक्स्थयोः
चलासनं ततो कृत्वा मूर्तिमूलान्तसंयुतम् ७८
पाद्यादिगन्धपुष्पान्तमष्टदिक्पालकानपि
शिवाज्ञां श्रावयित्वैषां वर्धनी पाकायायः सह ७९
भ्रामयित्वा पुनः कुम्भं स्वस्थाने स्थाप्य पूर्ववत्
स्थिरासनं च संपूज्य ज्ञानखड्गं समर्पयेत् ८०
मण्डपे प्राचिवेदी स्यामैशान्यामपरत्र वा
स्थण्डिलोपरि विन्यस्य विद्धमभ्युक्षये तु ना ८१
संपूज्य पञ्चगव्येन प्रोक्ष्य मृत्युञ्जयेन तु
हेमतूलिकया कुर्युन्नयनोन्मीलनं कुरु ८२
गव्येनास्त्रेण संप्रोक्ष्य शाययेद्वेदिकोपरि
आधारशक्तिं चानन्तधर्मादीनां चतुष्टयम् ८३
तीष्णशृङ्गाय विद्महे वेदापादाय धीमहि
तन्नोः वृषः प्रचोदयादिति गन्धादिभिर्यजेत् ८४
त्रिखण्डकल्पनां कृत्वा जानुकण्ठशिरोन्तकम्
वृषात्मविद्यातत्वाख्यशिवतत्वत्रयं क्रमात् ८५
वां वीं वूं बीजसंयुक्तमेकाराद्यं नमोन्तकम्
चतुर्थ्यन्तं तथा ब्रह्मविष्णु रुद्राधिपानपि ८६
जान्वन्ते च गलान्ते च शिरोन्ते च निवेशयेत्
तदग्रे स्थण्डिलं कृत्वा साष्टपत्रं सकर्णिकम् ८७
तन्मध्ये स्थापयेन्निद्राकुम्भं वृषभदैवतम्
हेमाब्जकूर्चवस्त्राढ्यं तथा संपूज तद्बहिः ८८
वृषदिक्पालकुम्भानामष्टकं स्थाप्य पूजयेत्
इक्षुश्च गोपादि शृङ्गि नन्दीति वृषपदिंस्तथा ८९
विषाणी शकुकर्णश्च महोदस् इति क्रमात्
वृषदिक्पालकां पूज्यास्ततो होमसमारभेत् ९०

तत्पूर्वकल्पिते कुण्डे स्थण्डिले वा तदिन्दितः
कुण्डानि सृक्स्रवाज्यानाम कृत्वा संस्कारमुक्तवत् ९१
शिवाग्निं हृदये ध्यात्वा वृषमावाह्य पूजयेत्
वृषेणाष्टोत्तरशतं हुत्वाङ्गैश्च दशांशतः ९२
पूर्णां दत्वा वृषास्त्राभितं त्रिशतान्त्रिकुम्भके
संपात होमकृत्वाथ वह्नावाधारशक्तिकाम् ९३
न्यस्त्वात्मतत्व सेशं च हुनेद्दशशताहुतिः
तच्छुध्यर्थं तु मूलेन पञ्चविंशाहुतिर्यथा ९४
दत्वा वृषान्तिकं गत्वा होमसङ्ख्या जपं नयेत्
कुशमूलेन मूलेन स्पृष्ट्वा जानुप्रदेशकम् ९५
शान्तिकुम्भाम्भसा प्रोक्ष्य पुनः संप्राप्य पावकम्
वृषात्मविद्यातत्वाभ्यां नन्त्यन्तं हृच्छिरोच्छितम् ९६
उच्चार्य विद्यातत्वेरस्त्रत्वेत्यन्तदनन्तरम्
विद्यातत्वं सहायीशमुपस्थाप्य वनोत्तरः ९७
दत्वाहुतिर्दशदशच्चुत्यै पञ्चविंशतिः
मूलेन होमं कृत्वाथ वृषमूलजपं तथा ९८
विधाय कुशमध्येन स्पृष्ट्वा मूलेन कन्धरम्
संप्रोक्ष्य शान्तितोयेन यायात्कुण्डान्तिकं पुनः ९९
विद्याशिवाख्यतत्वाभ्यां शिरोबीजं शिखान्वितम्
मन्त्रमुच्चार्यात्यन्तमेकीभूतं शिवे स्मरेत् १००
सेश्वरम् शिवतत्वं तदुपस्थाप्य पृथक्पृथक्
दिशदशाडुतिस्तस्य ऋृद्धये मूलमन्त्रतः १०१
पञ्चविंशाहुतिः कृत्वा कुशाग्रैर्वृषमूलतः
शिरः प्रदेशं संस्पृश्य शान्त्यम्भः प्रोक्षणं नयेत् १०२
वृषमूलजपं कुर्यात्पूर्ववध्योदसङ्ख्यया
पूर्णां दत्वाथ शास्त्रेण रक्षां कुशतिलादिभिः १०३

कृत्वा निष्कृति होमं च निवृत्याग्नि स्थितं वृषम्
सन्निरुद्ध्य बलिं दद्याद्रात्रिशेषं व्यपोहयेत् १०४
ततो नित्यकृतस्नानसन्ध्योपासनतर्पणः
द्वारपूजादिकं कर्ममन्त्रप्यावसानकम् १०५
कृत्वा बलिं च निक्षिप्य बलिभिर्गत्य देशिकः
दण्डोपदण्डस्कन्धानां योगं कृत्वास्त्राणुना १०६
प्रक्षाल्यां भ्युक्ष्य तद्दर्भमायया ज्येष्ट्य मर्मणा
अस्त्रमन्त्रेण संपूज्य त्रिधा दण्डं विसृज्य च १०७
शिवतत्वादितत्वं च त्रयं साधिपति न्यसेत्
उपदण्डे तथा स्कन्धत्रयोप्युग्रात्क्रमेण तु १०८
वलयेर्यमणे रेजौ शक्तिदण्डे सदाशिवम्
प्रत्येकमाहुतिस्तिस्त्र सन्निधानाय तर्पयेत् १०९
प्रायश्चित्ताहुतिं हुत्वा वह्निस्थं वृषभं पुनः
वृषकुम्भे समायोज्य विसृकेच्छिवपावकम् ११०
प्रासादपुरतो भूतपीठाग्रे वा वृषाग्रके
पीठगोपुरमध्ये वा गर्त्तं कृत्वा यथोचितम् १११
अस्त्रेणाभ्युक्ष्य कुञ्जादिनिष्कान्तं हेमकच्छपम्
वृषवाभिमुखं न्यस्त्वा तत्र सुस्थकमासनम् ११२
कृत्वोर्ध्वे मूर्तिभूतं तदण्डसंस्थाप्ययेत्स्थितम्
रसबाणचतुस्तालैस्तन्मूले वेदिका मता ११३
विस्तारस्य त्रिभागेन तदुत्सेध उदाहृतः
चतुरङ्गुलमानं तु व्योममात्रविवृद्धितः ११४
स्त्यत्र्यङ्गुलावधिः कुर्यात्पद्मोत्सेधं तदग्रके
पद्मविस्तारमानं तु वेदिकासदृशं भवेत् ११५
पादपादप्रवृध्येकमात्रदग्न्यंङ्गुलावधिः
कर्णिकोत्सेधमस्तारौ दण्डाद्वाह्ये तु कीर्तितौ ११६

चतुर्भिरष्टभिर्वाथ दलैर्युक्तं तु वृत्तकम्
पुण्याहवारिणा प्रोक्ष्य दण्डे घोरास्त्रमूर्तिके ११७
अघोरास्त्रमथावाह्य डीगं विन्यस्य पूजयेत्
देवेन सहिता वाथ केवलं वा वृषध्वजम् ११८
ग्रामप्रदक्षिणं नीत्वा दण्डाग्रे स्थापयेत्पुनः
कुम्भाद्बीजं समुद्धृत्य वृषे भू हृदये न्यसेत् ११९
रज्जुयन्त्रेण संयोज्य वृषास्त्रेणाधिरोपयेत्
प्रदक्षिणक्रमेणैव रज्जुं मूले तु बन्धयेत् १२०
वृषकुम्भस्थतोयेन दण्डमूलेऽभिषेचयेत्
अष्टकुम्भजलैस्तत्र दलाग्रेष्वभिषेचनम् १२१
कृत्वा वृषेन्द्रं संपूज्य गन्धाद्यैरुपचारकैः
मुद्गान्नं विनिवेद्यास्मै लोकपालबलिं ततः १२२
दलाग्रेष्वनिक्षिप्य धूपदीपादिकं ददेत्
देवस्य स्नपनं कृत्वा संपूज्य वा विशेषतः १२३
सन्तोष्य नृत्तगीताद्यैः प्रासादं च प्रवेशयेत्
ध्वजारोहणमाख्यातं भेरीताडनमुच्यते १२४
ततो रजन्या देवाग्रे गोमयालिप्तभूतले
स्थण्डिलद्वितयं कृत्वा शूलमेकत्र विन्यसेत् १२५
अन्यत्र भेरीं विन्यस्य पुण्याहं वाचयेत्ततः
त्रिशूलायासनं दत्वा मूर्तिं तदुपरिन्यसेत् १२६
तत्पत्रमध्यमे रुद्रं दक्षे वामे विधिं हरिः
पालिकायारमां दक्षपत्रमूले सरस्वतीम् १२७
वामपत्रस्य मूले तु श्रियं कुम्भे विनायकम्
दण्डाग्रमध्यमूलेषु स्कन्दसूर्यं च चण्डकम् १२८
लक्ष्मीमातृगणज्येष्ठा दुर्गाः पूर्वादिपत्रगाः
दलान्तरे रुद्रार्कवसुदसृगणानपि १२९

विन्यस्याभ्यर्च्य शूलास्त्रमावाह्याखिलदैवतम्
निवेद्य नैवेद्यादीनि भेरी संप्रोक्ष्य शस्त्रतः १३०
प्रणवेनासनं दत्वा स्मृत्वा मूर्तिं च तन्नधीम्
ह्रींकारं प्रथमं शब्दतत्वायाममधिक्यतः १३१
शब्दग+ समावाह्य तद्भेर्या दक्षिणानने
ब्रह्मणाधिष्ठितं सूर्यमण्डलं वामपत्रके १३२
विष्णुनाधिष्ठितं सोममण्डलं वह्निमण्डलम्
रुद्रेणाधिष्ठितं मध्ये संपूज्य च हविर्ददेत् १३३
शूलाङ्गस्थितरुद्रादीन्शूर्पयित्वा पदानतः
आविष्कुर्याद्विशेषेण शिवास्त्रं सर्वशासकम् १३४
कोणमन्त्रेण संप्रोक्ष्य शिवं शक्तिं च भावयेत्
तत्संपर्केण तच्छब्दं जयमानं तदा स्मरन् १३५
एकद्वित्रिक्रमाद्भेरीं प्रणवेनैव ताडयेत्
आहूय वादकं पश्चात्संप्रोक्ष्यास्त्रं +++ १३६
पुष्पाञ्जलिं च तेनैव कारयित्वा गुरूत्तमः
अने भेदनपाद्यं च वादयेत्तेन तत्र तु १३७
भेरीताडनमित्युक्तदिक्पाला मन्त्रितं शृणु
पूर्ववद्बलिपात्रे तु कृत्वा लिङ्गं हविर्मयम् १३८
तत्र पाशुपतं यष्ट्वा ग्रामाद्यं संप्रविश्यति
चचोत्सवस्य तत्काले परिपालनहेतवे १३९
ब्रह्मादीशानवालोकपालानामन्त्रयेत्सुधीः
लोकपान्मन्त्रिणं प्रोक्तमुत्सवाङ्कुरमुच्यते १४०
पूर्ववत्तन्नकर्तव्यं तीर्थाङ्कुरमथोच्यते
दशमे तीर्थनक्षत्रादष्टमे दिवसेधवा १४१
सायाह्नसमये प्राग्वन्मृदं संगृह्य वापयेत्
तीर्थाङ्कुरमिति प्रोक्तं शृणु कौतुकबन्धनम् १४२

विघ्नराजं समभ्यर्च्य तस्मै दत्वोपहारकम्
अविघ्नमस्त्विति प्रार्थ्य कौतुकं परिकल्पयेत् १४३
सोमास्कन्देश्वरं तत्र केवलं सोममेव वा
उमार्धविग्रहं वापि चन्द्रशेखरमेव वा १४४
पञ्चविंशतिबेरेषु यानि बेष्टानि तानि च
अभावे सर्वबेराणामेकमेवोत्सवेश्वरम् १४५
संस्नाप्य देवदेवेशमलङ्कृत्याथ पूजयेत्
तदग्रे स्थण्डिलं कृत्वा यन्त्रिकां तन्त्रविन्यसेत् १४६
तदूर्ध्वे शुद्धपात्रे तु सिततण्डुलपूरिते
अखण्डायुग्मसङ्ख्याक पूगीफलसमन्वितम् १४७
अच्छिन्नमूलाग्रैर्नाग वल्लीपात्रः समन्विते
भस्माधारयुते न्यस्त्वा रक्षसूत्रं हिरण्मयम् १४८
पुण्याहं वाचयित्वाथ संप्रोक्ष्य तदम्भसा
आधारशक्तिं संपूज्य स्थण्डिले यान्त्रिकोपरि १४९
तत्वत्रयं ततः पात्रैः प्रकृतितण्डुलेष्वणून्
भस्माधारान्यसोत्राया लकुलीशं तु भस्मनि १५०
सूत्रेऽनन्तश्च गन्धाद्यैरर्चयित्वास्त्रमन्त्रतः
पट्टाद्यैः पात्रमाच्छाद्य मालां तदुपरि न्यसेत् १५१
सर्वालङ्कारसंयुक्तं सर्वातोद्यसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा सह महेश्वरे द्विजैः १५२
त्र्यम्बकं समुच्चार्य हृदा वास्त्रेण सूत्रकम्
देवस्य दक्षिणे हस्ते देव्या वामे तु बन्धयेत् १५३
शूलस्य मध्यपत्रे तु हस्तिं तत्र विनिक्षिपेत्
भगवन्तु मया सार्धमुत्सवार्थं जगत्प्रभो १५४
आमन्त्रतोऽसि स्थातव्यं यावद्यागावसानकम्
इति विज्ञाप्य देवेश पतिवाक्यपरिग्रहेत् १५५

बन्धनं कौतुकस्योक्तवक्ष्ये मराडपसंस्तृतिम्
देवस्याग्रेथ वैशान्ये आग्न्येयां दक्ष वामयोः १५६
पञ्चप्राकारमध्येऽष्टदेशे वा मध्यहारके
उक्तप्रमाणासंयुक्तं पश्चिमे द्वारसंयुतम् १५७
मध्ये वेदिकया युक्तं नव पञ्चैककुराडयुक्
वितानदर्भमालाढ्यं चतुस्तोरणसंयुतम् १५८
मङ्गलाष्टकसंयुक्तं यागमराटपमाश्रयेत्
नित्यवत्सूर्यमाभ्यर्च्य सकलीकृतविग्रहः १५९
सामान्यार्घ्यकरो भूत्वा पूर्वादिद्वारसंयुतम्
शान्तिभूति बलारोग्य चतुस्तोरणसंयुतम् १६०
शान्तिविद्यानिवृत्याख्य प्रतिष्ठा द्वारपूजनम्
कृत्वा तच्छानयो नन्दि कालौ भृङ्गिविनायकौ १६१
वृषस्कन्धौ तदा देवी चराडौ द्वौ द्वौ यजेत्क्रमात्
नित्यवत्पश्चिमद्वारे द्वारपालार्चनं नयेत् १६२
दिव्यान्तरिक्षभूमिष्ठान्विघ्नानुस्सार्य तद्गतान्
अन्तः प्रविश्य देहल्यो मन्त्रराजं समर्चयेत् १६३
नैर्ऋतेऽभ्यर्च्य वास्त्वीशं यागमराडपकम्पिषु
संपूज्य पृथिवीतत्वं बन्धेष्वप्स्वत्वमर्चयेत् १६४
तृणे च तेजस्तत्वं तु वायुं वंशेषु संयजेत्
आकाशतत्वस्थूणासु वितानेे चन्द्रमर्चयेत् १६५
वासं किं दर्भमालादै महेलाष्टकमर्चयेत्
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम् १६६
श्रीवत्सं स्वस्तिकं शङ्खं दीपं ग्रामादितः क्रमात्
वेदि दक्षासने स्थित्वा गुरुरुत्तरदिङ्मुखः १६७
भूतशोधनपर्यन्तं यजनं स्थानशोधनम्
अर्घ्यं संस्थापनद्रव्यशुध्यमात्माचनं ततः १६८

मन्त्रशुद्धिं च कृत्वाथ दक्षहस्ततले सुके
आलिप्ति चन्दने धर्मज्ञानवैराग्यभूतियुक् १६९
स पद्मकर्णिकं न्यस्त्वा शिवासनमनन्तरम्
मूर्तिं तत्वाथ मूलेन शिवमावाह्य निष्कलम् १७०
साङ्गसंपूज्य तद्धस्तं स्वकीये मस्तके न्यसेत्
तालप्रमाणं षट्त्रिंशद्दर्भज सप्तधा स्मृतः १७१
जप्तं ज्ञानाधिमादाय स्थापयेत्पञ्चगव्यकम्
शालीनामाढकेनैव स्थण्डिलं परिकल्प्य च १७२
नव कोष्ठानि संलिख्य मध्यकोष्ठे शिवं न्यसेत्
पूर्वे सदाशिवं तत्वं विद्यातत्वं तु दक्षिणे १७३
उतरे कालतत्वं तु पश्चिमे पुरुषाख्यकम्
ऐशे प्रकृतितत्वं तु मध्यादीशान्तकं पुनः १७४
सुप्रतिष्ठः सुशान्तश्च तेजोवदमृतान्तकम्
रत्नोदकमथा व्यक्तपात्रमेतानि पूजयेत् १७५
क्षीरं दधि घृतं चाथ गोमूत्रं गोमयं तथा
कुशोदकं च संपूज्य ब्रह्मभिर्मूलमन्त्रत १७६
एकद्वित्रिचतुष्पञ्चषडध्वामभिमन्त्रयेत्
गोमयं गोजलं क्षिप्य गोजलं तु घृते घृतम् १७७
दघ्नो दधि पुनः क्षीरयोजयेच्च कुशोदकम्
संहिता मन्त्रितं हेतिरक्षितं धेनुमुद्रया १७८
अमृतीकृत्य गव्येनास्त्रेण संप्रोक्ष्य मण्डपम्
स्वदेहे तत्वतत्वेशमूर्तिमूर्तीश्वरान्न्यसेत् १७९
ध्यात्वा द्वैतं शिवस्याथ नैर्ऋतं देशमाश्रितः
वीक्षणं प्रोक्षणं पश्चात्ताडनाभ्युक्षणे ततः १८०
खननोद्धारणे भूयः पूरणं समा ततः
सेचनं कुट्टनं संमार्जनालेपनकर्मणि १८१

कलां कल्पनासूत्रवेष्टनं पूजनं ततः
रेखापिचरनं वत्तिकरणं च चतुष्पथम्  १८२
इत्याष्टादशसंस्कारं कृत्वात्र विकिरान्पुनः
विक्षिप्य कुम्भवर्धन्यो रासनाय समाहरेत्  १८३
तत्रेशदिशि विन्यस्तस्थण्डिलोपरि कल्पितम्
स सूत्रवस्त्रं स स्वर्णरत्नलोहौषधी व्रकम्  १८४
कुम्भं तदक्षिणे पश्चान्नालं च करकं यजेत्
कुम्भादधस्तद्वृषभासनं हृत्तारकादिमम्  १८५
चतुर्थ्यन्तं नमस्कारप्रदं तवा चलासनम्
मूर्तिं न्यस्त्वा शिवं साङ्गं संपूज्य कारकादयः  १८६
ओं हां स्यालासन येनेत्यन्तं पञ्चलमासनम्
नत्वा पाशुपतास्त्रस्य मूर्तिं च करके न्यसेत्  १८७
चतुर्बाहुं त्रिणेत्रं च क्ष्लक्षणं पिङ्गोर्ध्वकेशकम्
अष्टाभयकरं दक्षे वामे वा शवराञ्छितम्  १८८
एवं पाशुपतास्त्रं तध्यात्वा श्लीमुच्चरत्पशून्
हुंफट् पाशुपतास्त्रायेत्यावात्य तमसान्वितम्  १८९
षडङ्गानि च विन्यस्य हां श्लीं पशुक्षं हुदित्यथ
फट्कारमङ्गबीजानि प्रणवाद्यानि कल्पयेत्  १९०
पाद्यादिकं ततो दत्वा प्रागादिकलशेष्वथ
दिक्पालानपि संपूज्य ब्रह्मविष्णुसमन्वितान्  १९१
कुम्भं तदग्रभूतामि सावन्त्याधारया सह
परिहासदिगीशानां शिवाज्ञां श्रावयन्पुनः  १९२
स्वस्थाने स्थाप्य कुम्भं च वर्धनीं च स्थिरासनम्
स देहावरणं पूज्य वर्धनीं च तथा यजेत्  १९३
भुक्तये पूर्वमङ्गुष्ठाग्रेण त्रिद्धवमुद्रया
कुम्भं संस्पृश्य तत्पश्चाद्वर्धनी मर्तयेन्यथा  १९४

कुम्भे तु तत्वतत्वेशमूर्तिमूर्तिश्वरान्यसेत्
ज्ञानखड्गं समर्प्याथ यागरक्षा जगत्प्रभो १९५
इति प्रार्थ्य निरोधार्घ्यं कृत्वा तस्मै तदर्पयेत्
उक्तं मण्डपसंस्कारं यागेशाराधनं शृणु १९६
वायव्यकुम्भे विघ्नेशमैशकुम्भे गुरूनपि
संपूज्य वेद्यं सच्छालि तण्डुलैस्तिललाजयुक् १९७
सदर्भं स्थण्डिलं कृत्वा कुम्भमध्ये तदुत्तरे
वर्धनीमभितः कुम्भानष्टौ च स्थाप्य पूर्ववत् १९८
अलङ्कृत्य यथायोग्य कुम्भे साधनविग्रहम्
साङ्गं शिवं च वर्धन्यामेवं देवीं मनोन्मनीम् १९९
कुम्भाष्टकेप्यनन्तादीन्गन्धाद्यैः क्रमशोर्चयेत्
दशायुधानि तद्बाह्ये वज्रादीन्यभिपूज्य च २००
नैवेद्यादिनि वेद्याल्पजपं कृत्वा समर्पयेत्
यागेशाराधनं ह्येवमुत्सवे चार्चनं शृणु २०१
ततः कुण्डसमीपस्थमण्डपादौ मनोहरे
भद्रापीठस्थितं सालङ्कारमुत्सवनायकम् २०२
इष्ट्वा पाद्यादिभिद्रव्यैरुपहारं समर्पयेत्
यागेशाराधनं ह्येष उत्सवेशार्चनं पुण्यम् २०३
प्रे ++++++ ओ हामं वक्ष्ये शृणुष्वतः
कुम्भलिङ्गस्थयोरेनमुत्सवेशमभेदतः २०४
स्मृत्वा तदाज्ञा लब्धा यायात्कुण्डान्तिकं गुरुः
कुण्डस्य कृत्वा संस्कारं वीक्षणाद्या चतुष्पथम् २०५
आसनं तत्र विन्यस्य वागीशीमपि वाक्पतिम्
आवाह्य गन्धपुष्पाद्यैरभ्यर्च्यारणिसंभवम् २०६
सूर्यकान्तोद्भवं वाग्निं श्रोत्रियाकारजं तु वा
शरावादौ समाहृत्य राक्षसांशं परित्यजेत् २०७

औदर्य बैन्दवाग्निभ्यां एकीभूयाथ भौतिकम्
वह्निबीजेन पात्राग्नौ न्यस्त्वा संहितया लभेत् २०८
अमृतीकृत्य योस्तन्या कवचेनावकुण्ठयेत्
कुण्डोर्ध्वे त्रिः परिभ्राम्य शिखिबीजमनुस्मरन् २०९
वागीशी गर्भनाड्यां तु वागीशं तप्यमाणकम्
ध्यात्वा ताभिमुखं जानुद्वयावष्टब्धभूतलः २१०
आस्थाय कुण्डमध्ये तु समूत्यार्घ्यकणं ददेत्
सदिन्धनैस्तं प्रज्वाल्य गर्भाग्निं पूजयेत्ततः २११
गर्भाधानार्थमावाह्य सद्योजातहृदार्चनम्
कृत्वा तेनाहुतिं पञ्चकुर्यात्पुंसवनार्थकम् २१२
वामदेवमुपस्थाप्य शिरसाभ्यर्च्य तेन तु
आहुतिः पञ्चदत्वाथ सीमन्तोन्नयनार्थकम् २१३
अघोरशिखयाभ्यर्च्य तथा पञ्चाहुतिर्ददेत्
सद्यादिवक्त्राण्यङ्गानि तथा दर्भेण कल्पयेत् २१४
पुरुषं जातकर्मार्थमावाह्याभ्यर्चकर्मणा
कृत्वा पञ्चाहुतिस्तेन सूतकस्यापनुत्तये २१५
कुण्डमस्त्रेण संप्रोक्ष लालापथ धनार्थकम्
इध्मपञ्चकमस्त्रे हुत्वा भर्भैः परिस्तरेत् २१६
संस्थाप्य परिधीन्सूत्रविष्टरानपि तेष्वधः
प्राच्यादि दिक्षु ब्रह्माणं रुद्रं विष्णुमथेश्वरम् २१७
इन्द्रानीन्परितः सास्त्रान्मेखलासु समर्पयेत्
बालपालनमावेद्य स्त्रुक्स्त्रुवावस्त्रमन्त्रतः २१८
प्रक्षाल्य तापयित्वाग्नौ परिभ्राम्य त्रिवारकम्
कुशमूलेन तन्मूलमुल्लिख्याध्या भ्राम्य तौ पुनः २१९
कुशाग्र्येणाथ कल्प्याग्र्य परिभ्राम्य च म्यमम्
कुशमध्येन संपूज्य सव्यभागे कुशोपरि २२०

ऊर्ध्वाधौपदनौ स्थाप्य क्रमात्तत्वत्रयं न्यसेत्
विन्यस्य स्रुचि वागीशं स्रुवे वागीश्वरं यजेत्  २२१
इध्मपात्रस्थितं गव्यं घृतमभ्यर्च्य शास्त्रतः
प्रताप्य वह्निकोणे तदधिश्रत्ये च गोचरेत्  २२२
प्रादेशमात्रदर्भाग्रा द्वय क्लुप्तं पवित्रकम्
दर्भयूग्मकृतं मध्यग्रन्धिप्रादेशमात्रकम्  २२३
प्रणवेन घृते न्यस्त्वा वामदक्षक्रमेण तु
पक्षद्वयं च संकल्प्य तत्र नाडीत्रयं स्मरेत्  २२४
आग्नेयेप्यध सोपाग्न षोमाभ्यामथ नयेत्
पुनस्विष्टकृतान्ताय शुक्लपक्षे क्रमा हुनेत्  २२५
कृष्णे सो तप्तं त्यक्त्वा सूर्यं संयोजयेत्पदम्
हृदयेनाभिमन्त्र्याथ मूलमन्त्रा मृषीकृतम्  २२६
कवचेनावकुण्ठ्याथ तद्बिन्दुक्षेपयोगतः
अन्याज्य शोधनं कुर्यात्ततो वस्त्राभिघारणम्  २२७
सद्योजातादिभिः कार्यं स्वाहान्तैर्ब्रह्मभिः क्रमात्
अजातवामाभ्यां वामघोराभ्यां तदनन्तरम्  २२८
अघोरपुरुषाभ्यां च पुरुषेशानस्तथा
कृत्वा वक्त्रानुसन्धानं वक्त्रे कीकरणं ततः  २२९
सद्योजातानि बीजानि समुच्चार्य ततः परम्
स्वाहान्तैकपदं ब्रह्ममन्त्रैरच्छिन्नधारया  २३०
अग्निकोणमरुत्कोणापधिराक्षस कोणतः
ईशानकोणपर्यन्तमेकीकरणमाचरेत्  २३१
नामधेयार्थमीशान वामाद्यभ्यर्च्य शस्त्रतम्
तेन कृत्वा हुतीः पञ्च सर्वानां समुच्चरन्  २३२
हुताशनशिवाग्निस्त्वमिति नाम चरेत्
पञ्चसंस्कारपूर्त्यर्थं वौषडन्तशिवाणुना  २३३

पूर्णां हुत्वा विभज्याग्निं नवधा पञ्चधाधवा
स्वस्वकुण्डेषु निक्षिप्य होतृभिः सह होमयेत् २३४
गुरुः प्रधानकुण्डे तु सब्रह्माङ्गं शिवं यजेत्
पुरुषं पूर्वकुण्डं तु दक्षिणे घोरमुत्तरे २३५
वामदेवं ततः पश्चात्सद्योजातमथानले
हृदयं शाङ्करे कुण्डे शिरः कुण्डे तु नैर्ऋते २३६
शिखां वायव्यकुण्डे तु यजेयुः कवचं क्रमात्
प्रधानार्धाहुतीः कुर्युः मूर्तिपा स्वस्वमन्त्रकै २३७
पृथक्पृथक् समित्सर्पिस्तिललाजयवोदनैः
शतमर्धं तदर्धं वा हुनेत्ताम्बूलपश्चिमम् २३८
पूर्णाहुतिं ततो हुत्वा दत्वार्घ्यं च परान्मुखम्
कुम्भस्थिते शिवे मन्त्रान्संयोज्या व्याहृतीं हुनेत् २३९
पावकं च निरुद्धां च बलिं दत्वा सकुम्भकम्
शिवं संपूज्य विहितं क्रमतस्मे समर्पयेत् २४०
इति होमं समाख्यातं दिनदेवांस्तत शृणु
पूर्वं तु विघ्नरात्रं स्याद्द्वितीयं ब्रह्मरात्रकम् २४१
तृतीयं भूतरात्रं तु गान्धर्वं स्याच्चतुर्थकम्
पञ्चमंत्रमित्युक्तं षष्ठं तु मुनिरात्रकम् २४२
सप्तमं विष्णुरात्रं स्यादष्टमं वसुरात्रकम्
नवमं मरुतं प्रोक्तं दशमं चन्द्ररात्रकम् २४३
एकादशं रुद्ररात्रं द्वादशं रविरात्रकम्
ततस्तु पितृरात्रं स्याद्राक्षसं स्याच्चतुर्दशम् २४४
शिवरात्रं ततः प्रोक्तमिति प्रोक्ता दिनेश्वराम्
विघ्नराजस्य शुद्धान्नं हारिद्रं ब्रह्मण स्मृतः २४५
मरीची तिलचूर्णान्तं भूतानां बलिरुच्यते
मुद्गमाषकुलुस्थान्नं गन्धर्वाणां प्रकीर्तितम् २४६

वेणुनिष्पाययुक्तान्नं शक्रस्य तदनन्तरम्
अपूपतिलगोधूमयवाज्य गुलसंयुतम् २४७
मुनीनां तु बलिद्रव्यं विष्णोराढयुग्भवेत्
वन्धूनां संप्रियं शुध्या मरुतां वरकान्नकम् २४८
चन्द्रस्य तु गुलान्नं स्याद्रुद्रे नीवारजं भवेत्
सत्वं न चन्दशाकाणां पितृणां पनसान्नकम् २४९
राक्षसानां तु लाजान्तं शिवस्यान्तं पयः प्लुतम्
बलिद्रव्यमिति प्रोक्तं शृणु वास्तुबलिक्रमम् २५०
समस्तविघ्नशान्त्यर्थमन्नलिङ्गं पुरोक्तवत्
कृत्वा पाशुपतास्त्रं तु तत्र संपूजयेद्गुरुः २५१
शिवास्त्रशूलमभ्यर्च्य ताभ्यां साध्वजादिकम्
परिवारबलिं दत्वा संप्रविश्य पुरादिकम् २५२
पूर्वाकृतप्रदेशेषु मध्यं नैराजमिश्रितम्
गन्धपुष्पादिसहितं स्वाहान्तं स्वस्वनामभिः २५३
बलिं दत्वा यथान्यायं प्रासादं संप्रविश्य च
कर्णिकाया महापीठे नीलरुद्रदलाष्टके २५४
दिक्पालानपिसंपूज्य क्रमात्तेभ्यो बलिं ददेत्
बलिदानमिति प्रोक्तं वक्ष्ये ग्रामप्रदक्षिणम् २५५
भेरीताडनमारभ्य बल्यन्तक्रमेदेशिकः
मूर्तिस्वह कृत्वाथ यामान्ते यानमाचरेत् २५६
दिनं प्रत्युत्ससेशस्य वाहना निशामया
अष्टानां द्रुतं वृत्तं मध्ये नालसमन्वितम् २५७
अनन्तासनमाद्येह्नि चतुः सिंहाङ्घ्रि संयुतम्
सिह्मासनं चतुष्कोण द्वितीयेध त्रितीर्यके २५८
भूतरूप चतुष्पाद युक्तं मध्याङ्घ्रिमाधवम्
अष्टकोणसमायुक्तं योगासनमुदाहृतम् २५९

चतुर्थे पद्मपीठं स्याच्चतुष्पादं च वर्त्तुलम्
षट्पादयुक्तं षट्कोणं विमलाख्यं तु पञ्चमे  २६०
चतुष्पादयुतं भद्रपीठे षष्ठे प्रकीर्तितम्
सप्तमे रङ्गमाख्यातमष्टमे पुष्पमण्डपम्  २६१
नवमे शिबिका प्रोक्ता दशमे मौक्तिकप्रवा
एकादशे विमानस्याद्द्वादशे सिंहवाहनम्  २६२
त्रयोदशे रथः प्रोक्तो वृषभस्याच्चतुर्दशे
ततः पञ्चदशाहे तु गजवाहनमुच्यते  २६३
पक्षाहोत्सवयानानि कीर्तितानि क्रमेण तु
एत मुनदिनानां तु पूर्वं त्यक्त्वा परं मतम्  २६४
प्र्यहं रथ यानं वा रात्रौ तु नरवाहनम्
तद्दिने कृष्णसारस्तु देव्या वाहनमुच्यते  २६५
देवी कोपप्रसादौतपश्चाद्भक्तेन कारयेत्
मातङ्गवाहनं षष्ठे मेषयुद्धं तु सप्तमे  २६६
अष्टमे मल्लयुद्धं स्यादश्ववाहनसंयुतम्
नवमे रथयात्रं स्याद्देवं कुर्यान्नवाहके  २६७
वृषभस्याग्रमातङ्गरथानामुत्सवेश्वरम्
अघन्नविनायकप्रोक्तो मयूरो षण्मुखो भवेत्  २६८
भक्तबेराणि शेषेषु यानेषु परिकल्पयेत्
वाहनानामभावे तु केवलं पीठमुच्यते  २६९
अभ्यन्तरचतुष्कोण स्थापिताय सलीलकम्
वेणुदण्डद्वयदेन योजयित्वा सुबन्धयेत्  २७०
निवेश्य देवं तन्मध्ये किलरन्ध्रेषु बुद्धिमान्
अनुलोमविलोमौ च नानाराचौ योजयेदृढम्  २७१
विचित्रवस्त्रैराच्छाद्य वाहयेत्परिचारकैः
दीक्षाविरहितेर्विप्रैः सामान्यैर्वाह्यते यदि  २७२

विशेषस्नपनोपेतं शान्तिहोमं समाचरेत्
क्षत्रियैश्चेद्दिशाहोमं वैश्यैश्चेन्मूर्तिहोमकम् २७३
प्रमादाद्याभिते शूद्रैर्हानिस्याद्राजराष्ट्रयोः
संप्रोक्षणं तदा कृत्वा महापूजां समाचरेत् २७४
वाहने ह्याहने योग्या वृषनाश्वानुलोमकाः
भस्मरुद्राक्षसंयुक्ता दीक्षिता यदि ते पुनः २७५
रथाकर्षणयोग्यास्युः प्रतिलोमा विनाज्यजाः
आकृष्टो यदि चण्डालैस्तदा तद्दोषशान्तये २७६
संप्रोक्षणान्ते स्नपनं कुर्यादष्टाधिकं शतम्
ग्रामाद्बाह्येथवा ग्रामे मण्डपस्थे महेश्वरे २७७
नित्यनैमित्तिकं काले कर्तव्यमुभयत्र च
मण्डपे देवदेवेशं समाराध्य विशेषतः २७८
ग्रामप्रदक्षिणं पूर्वं कृतं चेत्तु तदन्वितम्
धामप्रवेशयेदह्नि रात्रौ वायकाठके २७९
आतपा निशयो वृष्टिरथवा चण्डमारुतः
वर्तते यदि मध्याह्नः यजमानेन्तरं मतम् २८०
बलिदाननिरस्तान्तराय ग्रामादिकं पुनः
यानक्रमेण देवेशं भ्रामयेदुत्सवेश्वरम् २८१
पितृवस्त्रं च संयुक्तसुगन्धालेपनान्वितम्
नानालङ्कारसंयुक्तं नामा माला मनोहरम् २८२
पुष्पतोरणमध्यस्थमुत्सवेशं महेश्वरम्
रथं वा शिबिकाद्यं वा प्रोक्षितं कल्पितासनम् २८३
अधिरोप्य ध्वजछत्रपिञ्छचामारसंयुतम्
नानावाद्यसमायुक्तं नृत्तगीतसमन्वितम् २८४
ग्रामप्रदक्षिणं कृत्वा प्रवेश्यास्थानमण्डपम्
पाद्यादि त्रितयं दत्वा चाष्टपुष्पिकयार्चयेत् २८५

लौकिकेनोपचारेण श्रवण निहीरणार्थकम्
नालिकेरादिना देवमपहारणतोषयेत् २८६
ग्रामप्रदक्षिणं प्रोक्तं यात्रार्थं स्नपनं शृणु
महोत्सवे तथा मासोत्सत्वे वारादिकोत्सवे २८७
एतेन पञ्चभिर्वापि नवभिः कलशेस्तु वा
यात्रार्थस्नपनं कुर्यादुत्सवेशस्य नित्यशः २८८
आद्यस्य प्रस्थमन्यस्य द्विप्रस्थं नवकस्य तु
चतुप्रस्थमिति प्रोक्तं यागेशस्थण्डिलं शृणु २८९
शिवं प्रस्थद्वयोपेत द्विगुणं त्रिगुणं तथा
अथमादिविभेदेन शालिमानं प्रकीर्तितम् २९०
द्वारादिकलशानां तु प्रत्येकं प्रस्थमात्रकम्
प्रस्थद्वयं तु कुम्भस्य वर्धन्यां प्रस्थमुच्यते २९१
द्रोणं वास्तुपदं प्रोक्तं तत्कुम्भे प्रस्थमीरितम्
शिवद्वादशपक्षे तु चतुर्विं शतिके पुनः २९२
द्रोणमुत्तमथै तेषामर्धतण्डुलमुच्यते
तदर्धतिलमित्युक्तं तस्यार्धं लाजमानकम् २९३
एवं स्थण्डिलमाख्यातं स्वर्णमानमथोच्यते
शतं षष्ट्यधिकं माषानिष्कमित्यभिधीयते २९४
विंशति द्विशतं माषा निष्कपादं प्रधानकम्
तदर्धं दशमाषं वा वसुमाषमथापि वा २९५
पञ्चमाषं चतुर्माषद्विमाषं माषमन्त्रकम्
तदर्धं वा यथाशक्ति कुम्भं वा करके भवेत् २९६
सहस्रादेककुम्भान्ते स्नपनेन च भेदके
स्वर्णप्रमाणमित्युक्तं वस्त्रलक्षणमुच्यते २९७
द्विहस्तं शिवकुम्भस्य वर्धन्यां हस्तमानकम्
घृतं प्रधानकुण्डे तु कुडुबद्वयमानकम् २९८

कुण्डेष्वन्येषकुडुबं वास्तुहोमे तथा मतम्
यात्रान्ते त्रिविधेष्वेकस्नपने तोत्सवेश्वरम् २९९
स्नापयेत्कृतयात्राणां बेराणां चैव मीरितम्
एवं स्नपनमाख्यातं प्रतियानमहिंशम् ३००
अतः परं समासेन वक्ष्ये नैमित्तिकार्चनम्
गन्धपुष्पादिकं नित्यनैवेद्यान्तं यदर्चनम् ३०१
तत्रव्या द्विगुणं कार्यमेतन्नैमित्तिकार्चनम्
अनेन विधिना देवं संभूष्य परिभूष्य च ३०२
नैवेद्यादिकमावेद्यवनिकां ततः
धूपदीपादिकं दत्वावसितं वस्त्रशोभितम् ३०३
कर्पूरकेतकी कृष्णगन्धाद्यमतिभाण्डुरम्
अस्त्रेण प्रोक्ष हृन्मन्त्रं मन्त्रितं वदये तथा ३०४
निर्मूलदर्पणं छत्रचामरं व्यजनानि च
दत्वा राजोपचाराणि ताम्बूलं च समर्पयेत् ३०५
विशेषयजनं प्रोक्तं शृणु ताण्डवदर्शनम्
रक्तसिंहासनस्थस्य देवदेवस्य दक्षिणे ३०६
आस्तां शिष्यैः सहाचार्यो वामभागे महीपतिः
परिवारजनैः सार्धं मृगं वाद्या महारवाः ३०७
वाद्यास्तिष्ठन्तु देवाग्रे सव्ये नर्तकमादिकौ
भागकौ वंशाकौ वामे पार्श्वयोरुभयोरपि ३०८
रूपयौवनसंपन्ना रुद्रस्य गणिकास्तदा
तिष्ठन्तु शैवा विप्राश्च दक्षे भक्तास्तु वामतः ३०९
देवस्य सन्निधौ नृत्तं कारयेद्गानसंयुतम्
कर्पूरावर्तिसंयुक्तं नीराजनमथाचरेत् ३१०
तत्काले गणिका दीपपात्रहस्ता द्विपार्श्वगाः
सर्ववाद्यरवोपेत तिष्ठन्तु सकलामपि ३११

देवप्रसादताम्बूलं भूपालाय समर्पयेत्
ग्रास्थानमराडपैर्देव देवमन्तः प्रवेशयेत् ३१२
नृत्तावलोकनं प्रोक्तमेवं रात्रावह्यन्यपि
पूजां होमबलिभ्रामया नान्यतीर्थमाचरेत् ३१३
देवस्योत्सवनाथा नित्योऽनुष्ठेमेव यमुत्सवे ३१४
क्रियाकलापम्
क्रियाकलापं वक्ष्यामि प्रथमं प्रातरर्चनम्
यागप्रवेशनं पश्चात्स्यदनाद्यधिरोहरणम् ३१५
ग्रामप्रदक्षिरणं मध्यदिन पूजनमन्तके
यानार्थस्नपनं पूजा महती नित्त++ नम् ३१६
प्रदोषपूजनं यागप्रावरणं ते वनायकम्
पूर्ववत्स्नपनं भूयो विशेषयजनं ततः ३१७
विनोदवीक्षरणं हर्म्यप्रवेशनमनन्तरम्
शक्त्या सह स्थितिं चाह्निशोधनं च द्विरष्टकम् ३१८
कर्मकुर्याद्यथाकालमेकैकस्याद्ययामकम्
एतानि स्वस्वकालेषु तु निषादानि वै ३१९
पूर्वतः पुष्टिदान्याहुः पृष्ठतो शुभदारिभिः
पृष्ठकालविधाने तु शान्तिहोमं समाचरेत् ३२०
दीपान्तं वा निवेद्यान्तनित्यनैमित्तिकोदये
तस्मादत्र त्रिसन्ध्यासु नित्वान्ताद्बोधनार्थकम् ३२१
तयोः पर्याय ह्वने विहितेर्चनपूजने
एवं ज्ञात्वा तु मतिमान्सर्वकर्मसमारभेत् ३२२
रथ सङ्कटमुद्दिश्य पूर्वपूर्वरिभेर्चया
प्रातदीपान्तमित्युक्तदभावे तु पूजनम् ३२३
उत्सवे मूलदेवस्य सायं प्रात दिने दिने
नित्यान्ते सर्वकर्मार्थं विशेषाराधनम् मतम् ३२४

तस्य मध्याह्नपूजां तु दीपान्ताद्यनपेक्षया
उत्सवान्तेषु सर्वेषु यथा पूर्वं समाचरेत् ३२५
परस्पराविरोधेन मूलदेवोत्सवे शयेत्
नित्यार्चनादितं तत्तत्कालेष्वेव समाचरेत् ३२६
अज्ञानाद्दैविकान्मोहात्कृतं चेदस्ति निष्कृतिः
बुद्धिपूर्वस्यष्टोषस्य प्रायश्चित्तं न कथ्यते ३२७
तस्मात्सर्वप्रयत्नेन काले काले समर्चयेत्
तेन राज्ञो भवेद्वृद्धि नद्यदाह्लादि दधृवम् ३२८
न ययान दिवा कार्यं क्षपायह्न कथञ्चन
रथाक्षाभ्यङ्गभङ्गे तु संप्रोक्ते यानकालके ३२९
राष्ट्रस्य जायते भङ्गः सन्धानार्हं तु पूर्ववत्
सन्ध्याय शान्तिः कर्तव्याः शैथिल्यपथनादिभिः ३३०
संकटे सति देवेशमवरुह्य रथान्तरे
शिबिकादिषु वारोप्य शेषयानं नयेत्सुधीः ३३१
निम्नस्थानेथवा पङ्के गत्तादौ पतिते रथे
इति सन्धानकाष्टयानमित्युभके सति ३३२
मध्याह्नपूजनं किन्तु रथे दीपावसानकम्
यानशेषं च तत्काले नीत्वा शेषं समाचरेत् ३३३
इति पञ्चमयामार्धे तन्नित्यं यानशेषकम्
साध्यत्वाच्चेष्टवन्ते च रथे दीपान्तरिमितम् ३३४
यानाद्यं द्विरसाध्यं चेन्नैवेद्यान्तं पुरोक्तवत्
तत्र कृत्वा विशेषार्चां विनोदालोकनं ततः ३३५
यानसेषावसाने तु यानान्तं स्नपनं नयेत्
यानं देवावरोहं वा दुत्साध्यं चेत्प्रदोषके ३३६
पूजनं पूर्ववत्कृत्वा देवदेवं रथे स्थितम्
संप्राप्य यजनं तत्र विनोदालोकनं नयेत् ३३७

अन्ये दुरुभयः प्रातः कृत्वा नित्यार्चनादिकम्
स्वस्थाने रथमाकृष्य शिबिकादितं पुनः ३३८
आरोप्य तद्दिने यानं कुर्याच्चेषं पुरोक्तवत्
तैलाभ्यङ्गविधिं कुर्यात्पञ्चमे सप्तमेऽह्नि वा ३३९
अन्यस्मिन्नवधा देवप्रवेशानन्तरं पुनः
नालिकेरादिकं दत्वा देवाग्रे स्थण्डिलोपरि ३४०
संस्थाप्य यन्त्रिकां तत्र सुगन्धं सुमनोहरम्
स्वर्णादिपात्रविन्यस्तं गन्धतैलं विशोधितम् ३४१
संस्थाप्यास्त्रेण संप्रोक्ष्य हृदा गन्धादिभिर्यजेत्
शिवतत्वादिभिस्तत्वे मूलयुक्तेर्णमोन्तकैः ३४२
तैलं स पुष्पं निक्षिप्य देवदेवस्य मूर्धनि
पालादा वामबाह्वन्तं देव्या त्वाकर्णमाचरेत् ३४३
तत्काले कुर्युरभ्यङ्गं देश्यकप्रमुखाचनाः
राजापुरोहितमात्यप्रमुखा गणिकाजना ३४४
देवं संस्नाप्य देवीं च स्नपनाद्यैर्विशेषतः
अलङ्कृत्य च संपूज्य मुद्गान्नं च समर्पयेत् ३४५
आचार्यप्रमुखान्कर्तामुद्गान्नं भोजयेत्ततः
तैलाभ्यङ्गविधिः प्रोक्तं नृत्तमूर्तुत्सवं शृणु ३४६
अथ तीर्थदिनात्पूर्वे तत्पूर्वदिवसेथवा
नटेश्वरोत्सवं कुर्यात्तदर्थं पूर्वरात्रके ३४७
कृतकौतुकबन्धं सालङ्कारनटेश्वरम्
धामप्रदक्षिणोपेतं प्रवेश्यास्थानमण्डपम् ३४८
गीतनृत्तादिना तत्र रात्रिशेषं व्यपोहयेत्
प्रातः संस्नाप्य संपूज्य भगवन्तं नटेश्वरम् ३४९
तदग्रे स्थण्डिलं कृत्वा गोमयालिप्तमण्डले
अनेकगन्धसंसिद्ध सुगन्धसुमनैरपि ३५०

वासितं तत्र विन्यस्यागरु धूपप्रधूपितम्
अर्घ्याम्बुनास्त्रमन्त्रेणाभ्युक्ष्य संहितया लभेत् ३५१
संपूज्य हृदये नान्थाच्छाद्य कृषा हृदये नृत्तमूर्तिमावाह्य पूजयेत्
शतं तन्मूलमन्त्रेण समिधा सर्पिषा ततः ३५२
चरुणा च क्रमाद्युक्त्या प्रायश्चित्तमघोरतः
कृत्वा पूर्णां समोपेतं भगवन्तं नटेश्वरम् ३५३
स्वमूर्तेसौ योजयित्वाग्निं विसृज्याथ मन्त्रतः
जप्तेन तेन गन्धेन एलेनालेपयेद्धरम् ३५४
धूपदीपनिवेद्यादीन्दत्वा देवप्रियार्थकम्
गुरवे तण्डुलं स्वर्णवस्त्रं गवां च वत्सकम् ३५५
दद्यान्माहेश्वरेभ्यश्च कर्त्ता वित्तानुसारतः
कारयित्वा ततो देवं प्रासादादिप्रदक्षिणम्
अन्तः प्रवेशयित्वान्तनालिकेरादिकं नयेत् ३५६
स्नापयित्वाथ संपूज्य नैवेद्यं महदर्पयेत्
विनोददर्शनं कृत्वा प्रदोषार्चनमारभेत् ३५७
तत्र किञ्चिद्विशेषोस्ति मूलदेवार्चनं यथा
तथासनादिदीपान्तं नित्यपूजां समाचरेत् ३५८
सायरक्षां ततः कृत्वा नैवेद्यादिसमर्पयेत्
नित्यनैमित्तकोप्येव सन्ध्याकालेर्चने विधिः ३५९
उत्सवेशादिबेराणां शान्तीनामप्यधः क्रमः
तदन्ते पूर्ववद्देवं कारयित्वा प्रदक्षिणम् ३६०
स्वस्थाने स्थापयित्वात नृत्तादिकक्रमथाचरेत्
अरुणोदयकालार्चां मूलदेवस्य कल्पयेत् ३६१
प्रातः कालार्चनं पश्चान्नृत्तमूर्तेश्च कारयेत्
सर्वालङ्कारसंयुक्तं ग्रामादीनां प्रदक्षिणम् ३६२

कारयित्वा ततः पश्चात्स्नपनादिकमाचरेत्
नृत्तमूर्त्युत्सवप्रोक्ता मृगयात्राविधिं शृणु ३६३
अथ तीर्थदिनदिवसात्पूर्वे दिवसे त्रिपुरान्तकम्
तदन्त्यमुत्सवे शावा पूर्ववत्कृतकौतुकम् ३६४
मृगयात्राचितो कल्पं कृत्वा तरङ्गवाहनम्
नानाप्रहरणोपेतैः सुभगैरपि संयुतम् ३६५
ग्रामादिभ्रमणं कृत्वा नव मध्यं प्रविश्य च
तत्र दुष्टमृगाधित्वा प्रवेश्य भवनं पुनः ३६६
विशेषस्नपनोपेतविदध्यादर्चनादिकम्
मृगयानमिति प्रोक्तं शृणु कौतुकतीर्थकम् ३६७
तस्यां रजन्यां तीर्थान्तमुत्सवेशत्रिशूलयोः
प्राग्वत्प्रतिसरं बध्वा प्रागोचतपनोदयात् ३६८
तीर्थाधिवासनार्थं तु तीर्थं संप्राप्य तत्तटे
मण्डले गोमयालिप्ते कुर्वीत स्थण्डिलद्वयम् ३६९
एकत्रिशूलं संस्थाप्य तदग्रे नवकुम्भगान्
सूत्रवस्त्रादिसंयुक्तान्विन्यस्यास्त्रं पुरोक्तवत् ३७०
संपूज्य मध्यकुम्भे तु यष्ट्वा देवीं मनोन्मनीम्
पूर्वादीशान्तकुम्भेषु गङ्गां च यमुनामपि ३७१
नर्मदान्तसरस्वत्यां सिन्धुं गोदावरीमपि
कावेरीं ताम्रपर्णीं च प्रणवाद्यै स्वनामभिः ३७२
नमोस्तेरर्चयित्वाथ स्नापयेत्तत्र त्रिशूलकम्
तीर्थान्तेन सहाविश्यपूजयेत्तीर्थदेवताः ३७३
तास्तत्र सन्निधीकृत्य स्नात्वा शूलाञ्छितं गुरुः
प्रासादमानयेदस्त्रं चूर्णोत्सवविधिं शृणु ३७४
अथ तीर्थदिने कृत्वा पूजाहोमावलिभ्रमात्
यानानन्तरमास्थानमण्डपे स्थण्डिलद्वयम् ३७५

निष्पाद्य परितः कुर्यात्पालिकाद्यैरलङ्कृतम्
एकत्र शूलमन्यत्रोलूखलं मुसलान्वितम् ३७६
स्थापयित्वा त्रिशूलास्त्रं संपूज्योलूखलं ततः
अस्त्रेण प्रोक्ष्य तत्रैव रात्रिचूर्णं विनिक्षिपेत् ३७७
षडुत्थमासनं दत्वा तस्मिन्दत्वात्रयं न्यसेत्
मुसले च तथाभ्यर्च्य वस्त्रेणावेष्ट्य लूखलम् ३७८
मुसलाग्रे तु विन्यस्य लम्बकूर्चमुभावथ
संवेष्ट्य पुष्पमालातिभिर्वागीशीं लूखलेर्चयेत् ३७९
वागीश्वरं च मुसले धूपदीपं ददेत्ततः
आचार्यो मुसलेनैव त्रिधा त्र्यास्त्रमन्त्रतः ३८०
स्त्रीभिर्मङ्गलगानानि कुर्वन्तिभिः प्रहारयेत्
स्वर्णादिपात्रे संग्राह्य मूलदेवान्तिकं व्रजेत् ३८१
दूर्वापुष्पाक्षतं तैलचूर्णं त्वाथ समर्पयेत्
उत्सवेश त्रिशूलाभ्यां भक्तेभ्यश्च क्रमाद्ददेत् ३८२
ग्रामप्रदक्षिणं कुर्याच्छूलेन सह देशिकः
तत्काले भूपतिर्मन्त्रि प्रधानादिभिरञ्चितः ३८३
स्थाणिभिर्गणिकाभिश्च शृङ्गवंशादियन्त्रकैः
चन्दनागरुकर्पूरहरिद्रा सुरभीकृतः ३८४
जमाध बहुशः केलीं कुर्यात्समन्ततः
चूर्णमुष्टिभिरन्योन्यं विहिरं तु जनास्तदा ३८५
शुर्थ विहृत्य देवेन सह तीर्थान्तिकव्रजेत्
चूर्णोत्सवविधिः प्रोक्तो महातीर्थं तत शृणु ३८६
तीर्थनक्षत्रयुग्मे तु मास्येकस्मिन्समागते
पूर्वं त्यक्त्वा परं ग्राह्यं पूर्वं योगयुतं यदि ३८७
तत्र तीर्थं विधातव्यं वारद्वय गले सति
दिवाधिकं तत्कर्तव्यमलं पर्वयुतं यदि ३८८

तदेव भवत्तीर्थे श्रेष्ठं मध्याह्नकालगम्
पूर्वाह्नगं तु मध्यं स्यादधमं ह्यपराह्नकम् ३८९
कालत्रये यदा पर्वयोगस्तत्र विधीयताम्
यदृक्ष मन्दसयं व्यापि तद्ग्राह्यमुपवासके ३९०
सर्वव्रतेषु तीर्थेषु मध्याह्नव्यापि शंसितम्
नन्तेसायनन्तनं व्यापि तिथिरप्येवमुच्यते ३९१
कृष्णाष्टमी चतुर्दश्यामुपवासे तथार्चने
निशाद्वयेधिकाग्राह्य तूल्यावेदपराङ् यजेत् ३९२
कृष्णपक्षेष्टमीं चैव कृष्णपक्षे चतुर्दशीम्
पूर्वविद्धामकुर्वाणोनकं प्रतिपद्यते ३९३
अर्धरात्रविहीना चेदष्टमी च चतुर्दशि
तत्रारब्धं व्रतं पुंसामायुरैश्वर्यभानिकान् ३९४
शिवरात्रव्रतेप्येवं कृत्तिकां विधिरुच्यते
कार्तिके पूर्णिकायासां नक्षत्रं प्रवर्तते ३९५
तत्रैव कृत्तिकादीपं विदध्यादिद सिद्धये
तत्पर्वकृत्तिकायुक्तं यदि श्रेष्ठमिति स्मृतः ३९६
मध्यमं रोहिणीयुक्तमधमं हरिणीयुतम्
कृत्तिका सहिता पूर्णा सुखदा राजराष्ट्रयोः ३९७
भरणीसहिता रोहहारिणीयुता
सर्वं सौख्यकरं ज्ञेया चन्द्रदैवत्यसंयुता ३९८
सुभक्षकारिणि प्रोक्ता फलमेवं प्रकीर्तितम्
तस्मात्सर्वप्रधानं स्यात्पर्वयुक्ते निशामुखे ३९९
दीपोत्सवं विधातव्यं पर्वहीने तु तो यदि
राजराष्ट्राभिचाराय तस्मात्पर्वणि कारयेत् ४००
तत्र क्लुप्ते वितानाद्यैर्मण्डिते मण्डपे शुभे
देवं संस्थाप्य तत्पूर्वे स्थण्डिलद्वयमाचरेत् ४०१

तत्रैक शास्त्रराजं तु तत्पुरो नवकुम्भगान्
संस्थाप्य देवदेवेशं पाद्याद्यैरर्चयेत्ततः ४०२
समस्तदेवताकार त्रिशूलास्त्रं च पूर्ववत्
इष्ट्वा कुम्भेषु तीर्थानि गङ्गादीनि क्रमाद्यजेत् ४०३
भेरीताडनवत्सर्वदेवानाहूय तत्र तु
तीर्थार्थमिह सान्निध्यं भवद्भिः त्रियतामिति ४०४
अभिषाया चोषि चश्चोत्वा त्रिशूलं स्नाप्य कुम्भकैः
अवगाह्य ततस्तीर्थं सर्वेभ्यः प्रतिपादयेत् ४०५
त्रिशूलेन सह स्नानं तत्र कुर्वन्ति यो नरः
ब्रह्महत्यादिभिः पापैत्युक्त्वा श्रद्धा भवन्ति ते ४०६
तत्तीर्थसलिलै मूलदेवं संस्नाप्य पूजयेत्
मध्या यजनोपेतमुत्सवेशं यथाविधिः ४०७
अभिषिच्य समभ्यर्च्य नैवेद्यं तु निवेदयेत्
विनोददर्शनं तत्र कृत्वा धामप्रवेशयेत् ४०८
महातीर्थमिति प्रोक्तं शृणु पूर्णाहुतिक्रमम्
यागधामस्थितान्देवान्संपूज्याथ हुताशनम् ४०९
सन्तर्प्य पूर्णां हुत्वाग्निं स्थितिं कुम्भे तु योजयेत्
शिवाग्निं च विसृज्याथ कुम्भमप्यस्त्रवर्धनीः ४१०
लोकेशद्वारपालादीन्विसृजेत्सकलानपि
पूर्णाहुतिरिति प्रोक्त दक्षिणा दानमुच्यते ४११
दक्षिणां त्रिविधा प्रोक्ता पञ्चनिष्काधमा भवेत्
द्विगुणा मध्यमा श्रेष्ठा त्रिगुणा देशिकस्य तु ४१२
वित्तानुसारतः कर्ता वस्त्रहेमाङ्गुलीयकैः
आचार्यमूर्तिपादींश्च संपूज्य पान भोषयेत् ४१३
आचार्यं दक्षिणा प्रोक्ता शृणु कुम्भाभिषेचनम्
इति यागेशकुम्भं च वर्धनीमष्टकुम्भकान् ४१४

उत्थाप्य मूलदेवाग्रे स्थापयित्वाथ तम्मकृत्
लिङ्गे पीठे च वामे च योजयेदष्टदिक्षु च ४१५
यागेशकुम्भतोयं चाभिषेकं शृणु महार्चनम्
अष्टोत्तरशताद्यैकमत स्नपनसंयुतम् ४१६
पञ्चामृतादिभिः कृत्वा पूजा वैशेषिकार्चनम्
ध्वजमूलं ततो गत्वा ध्वजेषु ध्वजावरोहणम् ४१७
कृत्वा तन्मन्त्रं वृषभे न्यसेत्
ततश्चण्डग्रहं प्राप्य तदङ्गन्यासपूर्वकम् ४१८
तैरेवार्घ्यं च संकल्प्य द्रव्याण्यभुक्षमन्त्रवित्
अपनीय निर्माल्यं मूर्ति संशोध्य शस्त्रतः ४१९
चण्डासनं च मूर्तिं च कृत्वा तन्मूले मन्त्रतः
सन्निधीकृत्य विन्यस्तविद्याङ्गं पाद्यपूर्वकम् ४२०
आचार्यमर्घ्यं दत्वा तं स्नाप्याभ्यङ्गमन्त्रकैः
विपरीतं विधायाथ हविर्दत्वा जपं नयेत् ४२१
वह्नावपि यथाशक्ति हुत्वा निर्माल्यमर्पयेत्
महोत्सवोध मोहेन कृतन्यूनाधिको यदि ४२२
भव प्रसादात्संपूर्णश्चण्डनाथस्तु संप्रति
इति विज्ञाप्य चण्डेशं चण्डाहमिति भावयेत् ४२३
ध्वजदण्डादिकं तस्माद्देशादपनयेद्गुरुः
ध्वजावरोहणं प्रोक्त दिक्पालोद्वाहनं शृणु ४२४
देशिको मौनमास्थाय ग्रामाद्यंशं प्रविश्य तु
शकटाख्यं बलिं तत्तत्स्थाने निक्षिप्य निध्वनिम् ४२५
विसृज्य दिक्पतीनन्तर्महापीठे बलिं क्षिपेत्
विसर्जनमिति प्रोक्तं दिक्पालानामतः परम् ४२६
इति यः कारयेद्भक्त्या शिवस्योत्सममुत्तमम्
सर्वान्भोगान्भुक्तान्ते शिवलोके चिरं वसेत् ४२७

इति स्वायम्भुवे शिवोत्सवविधिपटलः

## वसन्तोत्सवम्

कौशिकत्रोत्तु बोधायनसूत्रं तु +++
लिपि करकृतं पराधं क्षन्तुमर्हन्ति सन्तः १
अथातः संप्रवक्ष्यामि वसन्ताख्यं तमुत्सवम्
मधुमाधवमासे तु फाल्गुने तु विचक्षणः २
वसन्तमुत्सवं कार्यं पञ्चसप्तदिनेऽपि च
त्रिदिनं एक कर्तव्यं तत्तन्मासर्क्षकोऽपि वा ३
वसन्तमण्डपं कुर्यादारामो मध्यमे ततः
त्रिसस्तादिसमारभ्य द्विद्विहस्तविवर्धनात् ४
यावद्विंशतिहस्तान्तं यथाभुक्ति यथा रुचिः
आयामं पूर्ववत्कृत्वा सर्वालङ्कारशोभितम् ५
मण्डपे पश्चिमे भागे वेदीं तत्र प्रकल्पयेत्
पन्तिमानं तु तिस्या तु तदर्धोत्सेधमाचरेत् ६
कुर्यादावृतमेवं स्यात्पूर्वभागे तु वर्जयेत्
दक्षिणे पश्चिमे सौम्ये जालकं विधिना कुरु
नन्दः सप्त च पञ्चैव त्रितयं एकजालकम् ७
तत्तद्दिशासु कर्तव्यं जालकोक्तविधानतः
वितानध्वजैश्च सर्वाङ्गं पताकैश्च तरङ्गकम् ८
मुक्ताः सुददाम संयुक्तदिव्यपुष्पैः सुशोभितम्
नानाविधविचित्राणि नानादिव्यविभूषितम् ९
कदलीपूगस्तम्भैश्च दीपैश्चैव विभूषितम्
एवं मण्डपमाख्यातं इतराण्यपि कल्पयेत् १०
तत्स्थानं शोधयित्वा तु आलेपं च क्रमेण तु
मण्डपाद्बाह्य परितो सुसूक्ष्मसिकतेन च ११

निम्नोन्नतं न कर्तव्यं गन्धतोयेन सेचयेत्
तस्य दक्षिणभागे वा वामे वाथ प्रकल्पयेत् १२
स्नानमण्डपमेवोक्तं नदी मध्ये विशेषतः
प्रपां कृत्वा विशेषेण सर्वालङ्कारसंयुतम् १३
अग्रे वापि समायुक्तं सर्वपुष्पसमृद्धिदम्
युगद्वारसमायुक्तं वक्षतिरंसमन्वितम् १४
मध्यतीरश्च बाह्ये तु सुगत्र सुनिमेः सह
सुशुध्वसेञ्चित स्तिर्यजि जलेनापूर्य बुद्धिमान् १५
एवं संकल्प्य कर्तव्यं तदोसौ भषिण्डकं नयेत्
ततो पूजा प्रकर्तव्यं पूजाविधिरिहोच्यते १६
निश्चित्यदिवसात्पूर्वे महेशं पूजयेद्बुधः
पूजावसाने तत्काले पूजां विज्ञाप्य देशिकः १७
सायरक्षावसाने वा स्नाना वा निवेद्यके
कौतुकं बन्धयित्वा तु पाद्यादीनि क्रमेण तु १८
वसन्तयानं विज्ञाप्य महेशस्य तदर्धके
पुष्पाधिवासनं कुर्यात्पूर्वमेव सुभाषितम् १९
रात्रिचूर्णं समानीय मत्पटे च प्रपूजयेत्
शुद्धजालं समानीय घटस्थं चैव बुद्धिमान् २०
कुम्भपार्श्वे तु संस्थाप्य वस्त्रेणाच्छाद्य मन्त्रवित्
इति मन्त्रजपेद्धीमान्रात्रिशेषं व्यपोह्य च २१
प्रातस्नानादिकं कृत्वा प्रातः सन्ध्यावसानके
सर्वालङ्कारसंयुक्तं महेशं संप्रविश्यति २२
रथे वा शिबिकायां वा समारोप्य महेश्वरम्
नानावाद्यसमायुक्तं नानाभक्तजनैः सह २३
गणिका रुद्रगणिका भूसुराश्च समावृतम्
रजनी राजचूर्णं च बाह्यवीथि प्रदक्षिणम् २४

रात्रिचूर्णं विशेषेण विनोदार्थं विसृज्य च
लाजं संगृह्य कर्तव्यं देवाग्रे तु विकीर्य च २५
रजनी तोयमिश्रं तु कलशेषु घटेषु च
तज्जलैः पूरयित्वा तु पद्मरेखाय पार्श्वतः २६
पुरुषो वा स्त्रियो वापि +++ लनैव सेचयेत्
सर्पान्विनोदशित्वा तु शनैः शनैः प्रदक्षिणम् २७
स्नानमण्डपमावेश्य स्नानवेद्युपरि न्यसेत्
राजोपचारवत्स्नाप्य निवेद्यादि ददेत्क्रमात् २८
वसन्तमण्डपमावेश्य चन्दहैमतोयकैः
वेदिकायां समालिप्य संहासनं तदूर्ध्वतः २९
तस्य मध्ये तु संस्थाप्य नर्तनं सम्यगाचरेत्
वसन्त दक्षिणे पूज्य मन्मथं चोत्तरे यजेत् ३०
स्वस्वमन्त्रैः समभ्यर्च्य पश्चिमे मन्दमारितम्
तस्याग्रे स्थापयेत्कुम्भं शुद्धतोयेन पूरयेत् ३१
चन्द्रचन्दनकाश्मीर रात्रिचूर्णं हिमाम्भसा
सौगन्धिकसुपुष्पं च पूरयेत्तज्जलेन च ३२
वंशषट्कं तु सुस्थाप्य भूतिषट्कं तु विन्यसेत्
गङ्गाकुम्भे समभ्यर्च्य पतिमन्त्रं समुच्चरन् ३३
तज्जलै बृतिपूर्वं च देवदेवं विशेषतः
देवी देवमुखाम्भोजे तज्जलेन च सेचयेत् ३४
तद्वंशं संगृहीत्वा तु शक्तिबीजेन पूरयेत्
महेशलीलां कुर्वीत गौरीशमुखमण्डले ३५
नारीणां दूतिसंग्राह्य पुरुषाणांशहस्तयोः
वसन्तलास्य तद्गानं सन्तोष्य परमेश्वरम् ३६
सुगन्धरजनीमाद्रां विनोदार्थं प्रकल्पयेत्
नानाभक्तजनैः सर्वैति +++ लांसमाचरेत् ३७

शिबिकोर्ध्वे तु संस्थाप्य प्रपामपसमाविशेत्
पुष्पवाटिकयामध्ये तीर्थतोयेन सेचयेत् ३८
विकिरं रजनीचूर्णं विसृजेत्तज्जलेन तु
गन्धनीं च रजनै दैवदेवीं च दापयेत् ३९
तैलं रजनीमाद्रां सर्वभक्ताश्च दापयेत्
नाकोनस्थापयेच्छम्भुं जलक्रीडां समाचरेत् ४०
स्नपनं कारयित्वा तु विभवान्यनुकारयेत्
ददामं च गृहीत्वा तु पतिमन्त्रेण योजयेत् ४१
नैवेद्यं च यथा कुर्याद्धूपदीपादिकं ददेत्
शनैः प्रदक्षिणं कृत्वा पूर्वस्थाने निवेशयेत् ४२
मूललिङ्गे विशेषेण निस्सन्धावसानके
वसन्तं कल्प्य मतिमान्विघ्नेशं पूजयेत्ततः ४३
पुण्याहं वाचयित्वा तु पञ्चगव्यं च साधयेत्
पञ्चामृतं च संस्थाप्य स्नपनं कारयेद्बुधः ४४
द्वारपूजां ततः कृत्वा लिङ्गशुद्धिं समाचरेत्
गन्धतैलाभिषेकं च रजनी पिष्टचूर्णकम् ४५
पुरो वाच्यजलैस्नाप्य पञ्चगव्याभिषेचयेत्
पञ्चामृतेन संस्नाप्य शुद्धतोयाभिषेचयेत् ४६
लिङ्गस्योद्वर्तनं कुर्याच्छुद्धवस्त्रेण वेष्टयेत्
सुगन्धकुसुमं चैव गन्धमालेपयेत्क्रमात् ४७
पायसान्नं निवेद्याथ ताम्बूलं च निवेदयेत्
हिमतोयाभिषेकान्ते स्नपनं सेचयेत्क्रमात् ४८
मन्त्रपुष्पं तदन्ते तु मन्त्रान्नं च निवेदयेत्
गर्भावरणमभ्यर्च्य अलङ्कृत्य विचक्षणः ४९
ऋगाध्ययनं कुर्याद्भूसुरान्युग्मसङ्ख्यया
परिवाराणि सर्वाणि पूर्ववत्स्नानमाचरेत् ५०

महाहविं निवेद्याथ तत्क्रमेणैव बुद्धिमान्
परिवाराणि सर्वाणि पूर्ववत्स्नानमाचरेत्
नित्यहोमसमायुक्तं शान्तिहोमं प्रकल्पयेत् ५१
अन्तर्बलिसमारभ्य चण्डपूजावसानकम्
यथापूर्वं प्रकर्तव्यं कारयेत्तु विचक्षणः ५२
वसन्तोत्सवमेवोक्तं सर्वसम्पत्सुखावहम् ५३
इत्युत्तरस्वायम्भुवसूत्रे वसन्तोत्सवविधिपटलः

## वारार्चनै

अतः परं प्रवक्ष्यामि वारार्चनमभीष्टकम्
नृपतेरायुरारोग्यसुखदं राष्ट्रवृद्धिदम् १
अपमृत्युहरं पुंसामापदुद्धरणं परम्
ग्रहपीडाप्रशमनं ग्रहपीतिविवर्धनम्
रविचारं समारभ्य मन्दवारे समापयेत् २
प्रातः सन्ध्यावसाने तु प्रारभे द्वारपूजनम्
पञ्चगव्येन देवेशं स्नापयित्वाथ पञ्चभिः ३
अमृतैः पञ्चविंशत्या स्नपनेनाप्यनन्तरम्
गन्धोदकैश्च संस्नाप्य खण्डवस्त्रेण मार्जयेत् ४
लोहिताम्बरमाणिक्कपूर्वा शुक्लाब्दचन्दनैः
संपूज्य पायसं दत्वा भानुवारे विरुद्धवेत् ५
विशदापरमुक्तेन बिल्वपुन्नागदायिकैः
सोमवारे समाराध्य दीर्घमायुरवाप्नुयात् ६
प्रवालरक्तवस्त्राब्जधातकी मौक्तकुङ्कमैः
भौमवारे जयत्कीर्तिमतुलां लभते नरः ७
श्यामवस्त्राश्मतुलसी हारिद्रागरुपाटलैः
बुधवारे समाराध्य श्रियं प्राप्नोत्य पञ्चालनम् ८

स पीतवस्त्रं सत्पुष्यरागं कृष्णागरुज्वलम्
दान्तचम्बकगौलान्नैरिष्ट्वा जीवै जयं भवेत् ९
शुक्ले शुक्लाम्बरं वस्त्रज्ञकस्तुरिजातिडाडिमैः
शुद्धान्नयुक्तं संपूज्य लभते सद्गुणान्सुतान् १०
भिमातीलवस्त्राढ्यं विष्णुक्रान्त्या सुतोत्पलै
स तिलान्नं समभ्यर्च्य मन्दे सौन्दर्यमाप्नुयात् ११
पूजान्ते पूजयेच्चण्डं विशेषात्प्रतिवासरम्
अर्कवारेथवा सप्तवारपूजनमाचरेत् १२
त्यक्त्वादिप्रहरं सप्तप्रहरेषु ++ दान्तकम्
अत्र किञ्चिद्विशेषोस्ति रात्रौ यामे द्वितीयके १३
भोगस्थाने तु भोगाङ्गपूजानन्तरमालयम्
देवं प्रावर्ध्यतातीर्य चतुर्थप्रहराञ्चनम् १४
विधायारुणसन्ध्यार्चां पूर्ववत्परिकल्पयेत्
शिवरात्र्यर्चनेप्येवं विधिरेष विधीयताम् १५
निवेदनीयं यद्रव्यं देवदेवाय तत्र तु
अष्टमांशं प्रदातव्यं गुरवे प्रतिवासरम् १६
निवेदितं समादाय यदि भुञ्जीत देशिकः
तत्कृतं यजनं होमकर्माद्यमखिलान्ततः १७
राजराष्टाभिचारा +++++++ य
++++++++++++++++ भदेवेव न शंसयः १८

इति वेरार्चनविधि पूजाविधि पटलः

अन्नाभिषेकविधिः

अभिषेकं प्रवक्ष्यामि कर्तुरायुष्कराय च
महेशप्रतिमै चैव राजाभिषेकमुत्तमम् १
यशाभिषेकं कर्तव्यमत देवजयमादिशेत्

तदेव कर्तुः कर्तव्यं परसंहारकारणम्
तस्मात्सर्वप्रयत्नेन राजाभिषेकमाचरेत् २
स्वर्णसङ्ख्याकृतं पूर्वं संस्कारं पूर्ववद्भवेत्
तद्रूपं पूर्ववत्प्रोक्तमयिमयि देवाश्च पूर्ववत् ३
प्रथमं द्रव्यसंपात द्वितीयं स्वर्णसंग्रहः
त्रितीयं कालनिर्देशं चतुर्थं कर्तृनिर्णयम् ४
पञ्चमं मण्डपं प्रोक्तं सिंहासनं तु षष्ठमम्
सप्तमं चायुधं प्रोक्तं अष्टमं वाहनं भवेत् ५
राज्ञानं व्रतं प्रोक्तं वृध्यादीनि ततः परम्
सङ्गीतादि ततः प्रोक्तं पौराणिकमतः परम् ६
शुद्धनृत्तादिनीलान्तं राजरक्षामतः परम्
आमाय चित्तमास्यं चेदाश्री ब्रह्मादिदानकम् ७
एवं षोडशभेदेन तत्तद्भेदनिवेच्यते
शालितण्डूलरक्तं च वस्त्रमाभरणानि च ८
नालिकेरफलं चैव तिललाजादिसंग्रहम्
गुलं च पल्लवं चैव खण्डवस्त्रं च संग्रहेत् ९
कौपीनं शुद्धतैलादिं स्नानद्रव्याणि संग्रहेत्
पूजोपकरणद्रव्यं होमद्रव्यं च संग्रहेत् १०
तन्तुदर्भसमित्प्रोक्तं रसवस्तूनि संग्रहेत्
इतराण्यपि सर्वाणि संग्रहेत्तु विचक्षणः ११
द्रव्यसम्पतमेवोक्तं द्रव्यग्रहणपूर्वकम्
मेषादिमीनपर्यन्तं संग्रहेत्तु विशेषतः १२
धनुर्कटकश्चैवापि कन्निकुम्भविवर्जयेत्
कर्ता शुभानुकूलं च दिनवारादिसंयुतम् १३
त्रिपञ्चसप्तादिहे वापि कारयेन्निधनेश्वरम्
ब्राह्मणक्षत्रिया वापि वैश्यो वा शूद्र एव च १४

अन्यजातिं न कर्तव्यं चातुर्वर्णे न योग्यकम्
मण्डपानि ततो वक्ष्ये मानं पूर्ववदेव हि १५
यागाधिवासनं पूर्वं मण्डपं चतुरश्रकम्
कूटं वापि प्रपां वापि कुण्डवेदिसमन्वितम् १६
सर्वाङ्गानि समायुक्तं यागमण्डपमुच्यते
अभिषेकमण्डपं कृत्वा चतुर्दिग्भद्रसंयुतम् १७
चतुर्द्वारसमायुक्तं सोपानेन समन्वितम्
तदूर्ध्वे कूटशालादीन्शिखरं पूर्ववद्भवेत् १८
इष्टिका दारुजं वापि मण्डपं शोभयेत्ततः
दुकूलपट्टदेवाङ्गैरस्ताभान्वां वेष्टयेत्सुधीः १९
कदलीपूगस्तम्भाद्यैस्तोरणं द्वौरपार्श्वयोः
मण्डपाभ्यन्तरे चैव सर्वालङ्कारशोभितम् २०
दर्भमालासमायुक्तं मुक्तादामावलम्बना
नालिकेरफलोपेता सर्वाङ्गं भूषयेत्क्रमात् २१
तन्मध्ये वेदिकोपेतं तदूर्ध्वे सिंहासनं भवेत्
दिव्यकम्बलमाच्छाद्य पार्श्वयोज्वलदीपकैः २२
आस्थानमण्डपे सौम्ये आयामा चतुरश्रकम्
सभद्रं वापि भद्रं वा मुखभद्रसमन्वितम् २३
नानालङ्कारसंयुक्तं सर्वलक्षणसंयुतम्
पञ्चप्राकारबाह्ये तु नरं युद्धस्य मण्डपम् २४
एवं मण्डपमाख्यातं वेदिं सिंहासनं भवेत्
सिंहासनं पुरा प्रोक्तं कल्पयेत्कल्पवित्तमः २५
होमे च जगती चैव कण्ठे चैव कपोतकम्
विस्तारे च तथोत्सेध आयादिशुभसंयुतम् २६
राजाभायुधसर्वाणि मानं पूर्ववदेव हि
चतुरागं च रथं चैव गजं च नरवाहनम् २७

मराडपामृतसिंकल्प्य यथा मुक्तिवशान्तयेत्
समत्कर्मभिलकर्तव्यं समुद्दिश्य नियोगतः २८
कर्तारं सम्यगानीय यथाशक्ति नियोगतः
करणकारणकर्तुश्च तत्तद्योग्या क्रमेण तु २९
एवमन्त्रक्रमेणैव ज्ञतकादिसमाचरेत्
जूतकं प्रथमं युद्धं द्वितीयं चतुरङ्गकम् ३०
मेषयुद्धं तदन्ते तु रेयुत्यन्तं ततो भवेत्
वीणावेणुमृदङ्गादिझल्लिकादिक्रमेण तु ३१
तदन्ते पौराणिकाख्यातं रुर्यबृन्दे सहैव तु
शुद्धनृत्तादिलीलान्तं नानाजातिसमाकुलम् ३२
राजरक्षाविधानेन राजरक्षां समाचरेत्
देशिकादिसमरभ्य काष्ठभारान्तमेव च ३३
गोभूमिस्वर्णवस्त्रादि शिवाज्ञा चैव दापयेत्
एवमेव क्रमेणैव कल्पयेत्कल्पवित्तमः ३४
निश्चित्यदिवसात्पूर्वे रभूसुरभोजनम्
तैलाभ्यङ्गसमायुक्तमादराद्भोजनं नयेत् ३५
तद्दिने चैव कर्तव्यं मङ्गलाङ्कुरमेव च
भद्रं क्षुद्रं च कर्तव्यं क्षुद्रं चेत्तु विशेषतः ३६
वासूपालिसमायुक्तं वामादिदेवतां न्यसेत्
पूर्वोक्तद्रव्यमेवं तु शरावघटिकाञ्चिता ३७
पूर्वोक्तेन विधानेन नयेदङ्कुरमुत्तमम्
राक्षोघ्नं होमकर्तव्यं वास्तुपूजां पुरोक्तवत् ३८
पर्यग्निकरणं कृत्वा गोमयालेपनं कुरु
कृशामराडपमावेश्य पुनः पुरायाहमाचरेत् ३९
आचार्यमूर्तिपैः सार्धन्नित्यकर्माणिकं नयेत्
उत्तराभिमुखस्थित्वा सकलीकृतविग्रहः ४०

संकल्पं च यथापूर्वं सर्वद्रव्यं च संग्रहेत्
पाद्यमाचमनं चार्घ्यं पञ्चगव्याधि साधयेत् ४१
वेद्यूर्ध्वे स्थण्डिलं कल्प्य अष्टद्रोणैश्च शालिभिः
तत्तदद्यसमायुक्तदर्भाणां च विधानकम् ४२
तन्तुना वेष्टयेत्कुम्भान्वस्त्रादिभिरलङ्कृतान्
विभद्रव्यादिदशकं पाद्यं तथा भवेत् ४३
लोहदृश्यं तु दशकं अम्बुदं वा रसान्तकम्
षट्त्रिंशद्द्रव्यमेवोक्तं तत्तत्कुम्भे सयोजयेत् ४४
तत्तन्मन्त्रसमायुक्तं गुरुणोक्तविधानतः
तत्वतत्वाधिदेवांश्च तत्तत्कुम्भे सुपूजयेत् ४५
वारिरङ्गारकाद्यैश्च न्याससाधारणं बुधः
वीरं रसावेदिकं च धनु त्रिगौलमेव च ४६
शुष्कं त्रीणि पगोधर्म रससालापि मेव च
ऋषि धारं च नक्षत्रं केसरी गोपुरीं तथा ४७
भूमि भूमिपतिं चैव सावित्रिं च सरस्वतीम्
ज्येष्ठा दुर्गा च कौबेरी पञ्चवक्त्रीमुखोद्भवी ४८
परे परा च वर्णी च मेरुपातालवर्णिनी
नागदुन्दुभिरेवत्या पशु सारङ्गमेव च ४९
एवं मन्त्रक्रमेणैव जयमन्त्रसमन्वितम्
मण्डपं पूजयेत्पूर्वप्रागुक्तविधिना सह ५०
आत्वाहार्षमित्यादि पश्चिमे तु जपेत्सह
कन्दं पुरुषसूक्तं च उत्तरे तु जपेत्क्रमात् ५१
श्रीसूक्तं पञ्चशान्तिं च पूर्वभागे जपेत्सह
शुचिवाहादिस्युक्तं च दक्षिणे तु विशेषतः ५२
बीजमुख्यन्तिं च जयवीरं च कौणके
नवाग्निं वाथ पञ्चाग्निं एकाग्निमथवा चरेत् ५३

अग्निधानादिकं सर्वमग्निकार्योक्तमाचरेत्
तत्वमङ्गादिहोमं च क्षणहोममथाचरेत् ५४
सर्वमन्त्रेण हुत्वा तु रक्षोघ्नविधिना चरेत्
वस्त्रमाभरणं चैव मकुटं सूत्रमेव च ५५
मूलबेरे तु कर्तव्यं मकुटारोपणं कुरु
मकुटारोपणं कर्तव्यं महेशं तु प्रयत्नतः ५६
शिवमेवक्रमेणैव नाममित्यभिधीयते
सर्वकर्माणि कर्तव्यं महेशं राजवद्गुरुः ५७
यथाकालक्रमेणैव सकलार्चनवन्नयेत्
सायाह्नसमये काले यानं पूर्ववदुच्यते ५८
निश्चित्य काले कर्तव्यं गणेशं पूजयेत्पुरा
शुक्रं बृहस्पतिं पूज्य गरिं संपूजयेत्ततः ५९
वीरशक्तिं समभ्यर्च्य दीपदुर्गां प्रपूजयेत्
तत्वकुम्भानि तत्वेशमुपदेशक्रमं नयेत् ६०
तत्तत्स्थाने न्यसेद्धीमानभिषेकं क्रमान्यसेत्
पूर्वस्थाने तु तद्देवान्तत्तन्मन्त्रक्रमान्यसेत् ६१
सर्वदिन्मत्रजालैश्च हुतबीजं तु संग्रहेत्
नाराचमुद्रया दापन्यसेन्मध्यादयः क्रमात् ६२
एवं संपाद्य मन्त्रां तत्काले वाद्यघोषयेत्
वेदध्वनिसमायुक्तं मयशब्दसमाकुलम् ६३
देवाग्रे जयमारनं च देशिकं वाचयेत्ततः
धृत चा +++++ रुद्रकन्याद्ययोरपि ६४
आस्थानमण्डपे मध्ये सिंहासनं प्रकल्पयेत्
महेशं मध्यमे स्थाप्य सर्वालङ्कारशोभितम् ६५
परिवेषक्रमेणैव सर्वान्संस्थाप्य यत्नतः
जयमन्त्रं समुच्चार्य मकुटारोपणं कुरु ६६

तदन्ते वत्सरं लेख्यं च कारयेन्निधनेश्वरम्
मकुटारोपणान्ते तु आशीर्वादं च कल्पयेत् ६७
तत्काले शुद्धनृत्तं च वादित्रिलयसंयुतम्
सङ्गीतदर्शनं पश्चाद्राजोपचारपूर्ववत् ६८
विशेषपूजाकर्ताख्यदिनं प्रति विशेषतः
नित्यपूजावसानान्ते जूतकादिनं प्रति ६९
राजाङ्गसमये काले तत्तदङ्गानि पूर्ववत्
पञ्च सप्त दिनादेव निरयुद्धं तु दर्शयेत् ७०
स्नपनं शान्तिहोमं च दिनं प्रति समाचरेत्
दीर्घायुरे च कर्ता च सर्वत्र विजयी भवेत् ७१
तद्देवमधिराजं च तद्राजा सार्वमौमकम्
यथादेशे प्रकुर्वीत निर्दोषसहिता भवेत् ७२
अभिषेकफलं प्रोक्तं चक्रप्रस्तारमुच्यते
इति पूर्वस्वायम्भुवे अभिषेकविधिपटलः

## सकलपूजै

सन्धिं प्रति समभ्यर्च्य स्नानं नैवेद्यकान्तकम्
ततः सन्ध्यावसाने तु महेशस्याग्रदेशके १
संशोध्य बहुरूपेण प्रोक्षयेत्पुरुषेण तु
शङ्खं च जलभाण्डं च पात्राधारां च पादुके २
गन्धं पुष्पं च धूपं च दीपछत्रं च दर्पणम्
खण्डवस्त्रं च खड्गं च खेटकं चाञ्चथां तता ३
कौपीनं चित्रवस्त्रं च भूषणं चोपवीतकम्
अन्यद्राजोपचारस्य चिह्नानि विविधानि च ४
बिम्बाग्रे विन्यसेद्धीमान्प्रोक्षयेदस्त्रवारिणा
पाद्यमाचमनं चार्घ्यं कल्पयेद्विधिपूर्णकम् ५

स्नानार्थमुदकस्याभ्यशुचिं कृत्वा तु देशिकम्
प्रोक्षयेद्बीजमुख्येन शुद्धतोयेन देशिकाः ६
आवाहयेत्ततो देवं हृन्मन्त्रेण समर्पयेत्
पाद्यमाचमनं चार्घ्यं दापयेत्तु महेश्वरे ७
पूर्वसन्धार्चितं पुष्पमीशानेन विसर्जयेत्
दर्पणं दर्शयेद्धीमान्स्नानवेद्युपरि न्यसेत् ८
रुद्रसूक्तमनुज्ञप्ता दर्पणे स्नानमाचरेत्
गौरीमिमाय मन्त्रेण देव्या स्नानं च पूर्ववत् ९
प्रोक्षयेद्बीजमुख्येन शुद्धतोयेन देशिकः
खण्डवस्त्रेण संमृज्य वस्त्रपुष्पसृगादिभिः १०
भूषणाद्यैरलङ्कृत्य कलामन्त्रैः समर्चयेत्
अङ्गमन्त्रेणाभ्यर्च्य नैवेद्यं दापयेन्मूलमन्त्रतः ११
सर्वोपचारसंयुक्तं पूजयेत्तु महेश्वरम्
एककालं द्विकालं वा चार्चयेत्सन्धिपूर्वके १२
इति सकलपूजाविधिपटलः

## जीर्णोद्धारणम्

जीर्णोद्धारविधिं वक्ष्ये शृणुष्वेकमनाधुना
लिङ्गस्य प्रतिमायाश्च पिण्डिकां यस्तथैव च १
समानस्य च जीर्णस्य नवीकरणकर्म च
परिवारालयस्यैवं भक्तानविशेषतः
अन्येपि जीर्णानां बल्यर्चा विष्टरादिषु २
छिन्नेषु चोरैरष्टभिन्न शिते मरुताग्निना
एवमादिविशिर्णे तु देव तन्नवसन्तिभिः ३
जीर्णमुत्सृज्य वियति तिष्ठन्त्यब्द त्रिधा विधिः
गतागतं च कृत्वा तु स्नानादादित्यमण्डलात् ४

आमिनग्रहणार्थाय चरैस्तैत्तिर्यपक्षिवत्
तग्रत्या यजमानं चेस्थानेनेन मन्त्रवित्तमात् ५
मद्भक्तान्पीतरागांश्च सदाकाङ्क्षन्ति देवता
ततो मण्डलं प्राप्य शपत्येताहसंशयम् ६
तस्माच्छीघ्रं प्रकर्तव्यं न विकरणकर्म च
मूलालयप्रमाणेन कर्तव्यं तरुणालयम् ७
अर्धं वाथ त्रिभागं वा तरुणोक्तविधानतः
मूलालये यथा द्वारं प्रतिद्वारं विशेषतः ८
बालालयस्य द्वारं स्यात्पूर्ववत्पूजनं नहि
चतुर्द्वारार्चने यत्तु तथा द्वारादिपूजनम् ९
प्रतीच्यां च यदा द्वारं तत्रेशं पुरुषं स्मरेत्
तस्मात्सर्वप्रयत्नेन नित्यपूजादिपूजनम् १०
ततो मूलालये प्राप्ते पूर्वमेव क्रमेण तु
एवं बालालयं प्रोक्तं बालालिङ्गस्य कथ्यते ११
यथा शूलोक्तवृक्षेण बाललिङ्गं प्रकल्पयेत्
मूललिङ्गस्य पूजांशे त्रिभागैकांशनिर्मितम् १२
तन्नाहं सममेवं स्यात्सुवृत्तं सूत्रवर्जितम्
तस्मिन्नावाह्य देवेशं दारुलिङ्गैथ लोहजे १३
घटे चिरे घटे वापि दर्पणादौ यथाविधिः
घटे किञ्चिशेषोस्ति सप्ताहमुत्तमं स्मृतम् १४
पञ्चाहं मध्यमं प्रोक्तं मासं कन्यसमुच्यते
नित्यं नवजलं योज्य पूजयेत्तु विचक्षणः १५
सन्निवेश्याथ देवेशं सायसं च सवाहनम्
अप्रतीशां परीवांस्ततथा तत्रैव योजयेत् १६
विमानस्थान्तथादेवान्स्तद्विमाने नियोजयेत्
प्रतिष्ठादीनि सर्वाणि बालस्थानोक्तवन्नयेत् १७

यात्राहोमादिकं सन्तुत्तर्युक्ता निवेशयेत्
तदालये तु कर्तव्या पूजा नित्यं प्रयत्नतः १८
यावन्नवीकृतं लिङ्गं प्रासादाद्यं यथाविधिः
तावत्पूजादिकं सर्वं कारयेत्तरुणालये १९
क +++ द्याख्यहीनं तु अर्थमाषविहीनकम्
ब्रह्म +++ तं माषं विष्णुभागे त्रिमाषकम् २०
एवं हीनं गृहीत्वा तु तमूर्ध्वं न प्रशस्यते
बाललिङ्गे समायोज्या नवीकरणकर्म च २१
गाणापेतविशेषेण माषादिदशमाषकम्
हीनं चेत्तु गृहीत्वा तु तदूर्ध्वं न विशस्यते २२
आषे तु विशेषेण अङ्गुलादित्रयङ्गुलम्
एवं हीन गृहीत्वा तु तदूर्ध्वं तु विशेषतः २३
गाणवे दैविके चैव आर्षे संप्रकल्पयेत्
पूर्वस्थाने खनित्वा तु तल्लिङ्गं च निधापयेत् २४
अथवाङ्गिहेन्त च स्थोटने चैव चिते चैवाग्निदग्धके
एवं न्यस्त्वा विशेषेण तस्मान्न प्रगृह्यताम् २५
भुक्तिमुक्त्यर्थिभिश्चैव मानं व स्थापनं क्रमात्
मानुषादिषु लिङ्गेषु पीठे पिष्टै समाचरेत् २६
दृष्ट्वा पीठक्षयं लिङ्गं कृत्वा लिङ्गं पुरोक्तवत्
यथा लिङ्गं तथा पीठे योजयेत्तु विचक्षणः २७
दृष्ट्वा लिङ्गं क्षयं पीठं तत्क्रमेणैव बुद्धिमान्
स्वायम्भुवे विशेषेण जीर्णं छिन्नं च संग्रहम् २८
भिन्नां चेत्पट्टबन्धं च संप्रोक्षणमथाचरेत्
शिवसादाख्यकर्तव्यं मूलसङ्कोचमेव च २९
अन्यशादाख्यकर्तव्यं बालसंकोचमाचरेत्
स्थूप्याद्यवयवछेदे एकाङ्गुलं च संग्रहेत् ३०

तदूर्ध्वं न प्रशस्तं स्याद्व्यङ्गुलं पद्महीनकम्
तदूर्ध्वं नेष्टवेवं स्यान्महानासित्रियङ्गुलम् ३१
इत ऊर्ध्वं न कर्तव्यं शिखरे दशाङ्गुले भवेत्
पश्चान्नेष्टं प्रकर्तव्यं कण्ठे त्र्यङ्गुलं मतम् ३२
लाजनादीनि कर्तव्य द्व्यङ्गुलं सम्मतं भवेत्
शक्तिध्वजमिति प्रोक्तमेमे पञ्च संग्रहेत् ३३
होमादिप्रस्तरान्तं च सप्ताङ्गुलसमावधिः
एवं गृहीत्वा कर्तव्यमूर्ध्वं न्यस्त्वा प्रयत्नतः ३४
प्रकारं परिवारं च यथा योग्यं प्रयत्नतः
बालहर्म्यादिहर्म्याणां बिम्बानां बाललिङ्गकम् ३५
अल्पनासी च शाला च कपोतं कूटपञ्चमम्
विष्टरं बलिपीठं च यद्द्रव्येण कृतं तथा ३६
देवाश्च तद्विमानस्थात्पीठाग्रे वा नियोजयेत्
देविके मानुषे वापि पदे संयोजयेत्सुधीः ३७
पैशाचेनपि कर्तव्यं मण्डपस्यान्तरालके
अष्टदिक्षु च कर्तव्यं भद्रपीठेथवा पुनः ३८
धिष्ण्यं विमानं संकल्प्यं तस्मिन्नावाह्य रक्षयेत्
यात्राहोमादिकं सर्वं गुरुणोक्तविधानतः ३९
कुम्भादिके समादाय तस्मिन्धिष्ण्ये नियोजयेत्
पीठाग्रे वाथ लिङ्गे वा यथागुप्त यथा रुचि ४०
विमानस्थापनाकाले यथा पूर्वनियोजयेत्
मानुषादिषु लिङ्गेषु विमानेल्वेपनाचरेत् ४१
सकलादिषु जीर्णेषु कुम्भे वा मण्डलादिके
षोडशप्रतिमादीनि दारुलिङ्गेषु योजयेत् ४२
मानुषादिगाणवञ्चादि बिम्बे वा स्थूप्यं द्वा वा सुयोजयेत्
एवमुद्धारणं प्रोक्तं शेषं पूर्ववदाचरेत् ४३

मूलालयप्रवेशान्तै दारुलिङ्गं च दाहयेत्
अथवा सद्य एवं तु जले वापि स्थलेऽपि वा ४४
विज्ञाप्य विधिवद्देवं प्रभूतहविषं वदेत्
व्योमव्यापिविधानेन पञ्चब्रह्म षडङ्गकैः ४५
पूजयित्वाथ देवेशं षडध्वन्यासमार्गतः
तत्संहृतिं तथा कुर्याद्रक्षाबलिमथाचरेत् ४६
प्रवेशबलिमार्गेण बलिं सम्यक्समाचरेत्
एवमादीनि कार्याणि तत्तत्काले समापयेत् ४७
अकृतत्वेन्निगत्याशु तत्र स्थात्मानुषा धृवम्
शान्तिहोमं तथा होमं राक्षोघ्नं च तथैव च ४८
कृत्वा भोजयेद्विप्रान्मद्भक्तांश्च प्रपूजयेत्
वेदाध्ययसंयुक्तं विशेषात्पञ्चशान्तिकम् ४९
दक्षिणां तु गुरोर्दत्वा यथ शक्ति विशेषतः
अष्टबन्धानि कर्मे तु तुलास्थल नवीकृतौ ५०
पञ्चाहं सप्तहा दर्वामासं कुम्भे तु पूजयेत्
तदूर्ध्वं नेष्टमित्युक्तत्रिदिनैकदिनेऽपि वा ५१
सप्तानाध्यवसाने वा पुनरोजनमाचरेत्
स्नपनं शान्तिहोमं च प्रोक्षणं च यथाविधिः ५२
अथवान्यप्रकारेण गृहार्चनादिषु कथ्यते
बाणलिङ्गादिलिङ्गेषु पीठे च्छिन्ने तथैव च ५३
आत्मन्युद्यास्य विधिवत्कुम्भदौ वा यथाविधिः
शकलानिपरित्यज्य यथा स्वर्णेन कारयेत् ५४
रजतेनाथ ताम्रेण शिलायां दारुणाथवा ५५

लिंगलक्षणम्

सर्वेषां लिंगमानेन शिरो युक्तन्तु मानुषम्

पुजांशोच्चं समं वापि त्रिपादं अर्ककन्वसम्  १
तयोर्मध्ये भागे तु मूर्ति तुंगन्तु ट्तिर्न्नवम्
नाहविस्तारतुल्यं वा अथवा मानमेव वा  २
पूजांशोच्चन्तु मानं वा मूर्तितुंगं तथा भवेत्
लिंगमानांश तुंगे तु आयाद्यंशस्य संयुतम्
आयाद्यंशं विशेषेण आयादि विधियोगतः
पूजाभगं समं हीनं मध्यमं द्विगुणं मतम्
पूजांशं त्रिगुणं श्रेष्ठं अन्तरेरष्टधा भजेत्
पूजांशोदयतारबाहसदृशं अष्टद्वयांशं भजेत्
तद्भागेन गुणेरिषुधाव् नवधा रुद्राधिकांशोदयम्
हीनं वापि समेन मानमुदितं संख्यात्रयत्रिंशति
बेराणाञ्च शिवांशमानमुदितं स्वायंभुवे मान
तन्मूलबेरांगुलमानमात्रं प्रमाणमुत्तमम् प्रतिमाति तुंगकम्  ।
षट्संख्ययादि शुभादि योगम् विधेयमन्यत् विधेयमा
स्यात् मिढकलस्य शिवभागदुश्चये तस्य नाहचतुर्विं शकम्
।
शतं तत्तदंगुलसहस्रकान्तकं तत्तदंगुलबेरोदयं क्रमात्  ।
मूलादिबिंब तत्तन्मूलविभागभाजिते गकांशवृद्धि
चतुर्विं शसहस्रमानं देवांगुल परिवार परात् सर्वं  गृहीत्वा
कर्तानुभर्तानृपल वस्तु च मानरीक्षः यन्मूलबेरोदय तारनाहं
द्विरष्टौ परेषां तस्य शकं वात्रगुणादि वृद्धिं बेरोदयं षरणव
तेन तुंगम्  ।
बेरादिबिंबं वृषभज्य देव्या बल्यर्चनं तत् तदुमानयुक्तम्  ।
आदाद्यंशं भजेत्  ।  धीमान् तत द्याद्यंश संयुतम्  ।
युग्मायुग्मान्तु तन्न्यूनं आयाद्यंशं प्रयोजयेत्
षट्सप्तजाष्ट यवतार विहीन मध्यं चोत्कृष्टकं त्रिविध

मंगुलमानमन्यत् । शाल्यायतं तत् त्रिचतुर्गुणान्तं बेरोदयं
षरणवत्येन तुंगं यतुरश्रस्य पीठं स्यात् ।
स्थितत्वाल्लिंगमुच्यते । युव्रतमासनं प्रोक्तं अष्टास्त्रंशयनं
भवेत् । त्रिकोणं धनदं प्रोक्तं लिंगपीठं समाचरेत् ।
पादबन्ध पक्षबन्ध पुढकलश्रियं उपानजगति
कुमुदखराडपरिडका मनोरमं वृत्तरूपवेदकोण अष्टकोण
एव वा पद्मकर्ण गोमुखस्य भद्रलिंगरूपकम् ।
तत्तत्पीठस्य तुंगेन नन्दभागविभाजिते ।
उपान तुंगे तु भागेन पद्मं तत्वमुच्यते ।
अर्धां शं कंकवमुत्सेधं त्रियर्धं कंकणमानतम् ।
तदूर्ध्वे कंपमर्धां शं पक्षतुंगे शिवांकुरम्
तदूर्ध्वे च त्रिषट्टीनां पद्मतुंगे समं भवेत्
अर्धां शं कृतवारीणां तत्पीठं सर्वशोभितम्
तत्तल्लिंगस्य विस्तारे त्रिभागं पीठनिस्तृतम्
सर्वमान समाख्यातं नालतारायमेव वा
पीठतारे त्रिभागेकं नालविस्तारसंयुतम्
तत्समं नीप्रकञ्चैव तदर्धं घनमुच्यते
नालविस्तारपद्मांशं देवांशमग्रतः क्रमात्
गर्भग्रह अष्टद्वय भागं भागद्वयवह्नि चतुर्थक्रमेण
मानुष देवीक ब्रह्मं रसाधिक्य शतोपेत शतार्धं
क्षुपातनम् । गर्भागारे सप्तसप्तांशगंशं मध्यं ब्रह्मदेविकं
चाष्टभागं मानुष्यन्तत् षोडशांशं बहिष्टात् ।
पैशाचांशाख्या चतुर्विं शदंशं शैवं ब्रह्म
वैष्णव दैविकांशे सर्वदेव मानुषस्थापनीया ।
पैशाचांशे मातरश्च सुराद्य रक्षो गन्धर्वादि
यक्षाश्च शेषं गर्गार्धं दशदं कृत्वा भागमध्येन

शंकरं नवांशं सवाश्चायामि जगमं प्रतिमानतम् ।
स्नपनं बलिबेरञ्च तीर्थो यासनार्चया
उक्तवाश्चात् समोत्तुंगं त्रिविधा प्रतिभागिकम् ।
पादाघ्रिकमर्धं वा त्रिपादं उत्सवार्चना
उत्सवे पादमर्धं वा बलिबिंबं यथाक्रमम्
कर्माधोत्सवांशं वा प्रतिमान्यञ्च कारयेत्
आमिके +मुखलिंगं ततो वक्ष्ये सर्वकर्मार्थसाधनम्
पूजाभागं समस्तन्तु षष्ठांशं विभजेत्क्रमात्
मृग्य भागदधस्तान्तु मूललिंगं न शोधयेत्
मोहादज्ञानतो वापि रुद्रं खात्वा निरीक्षते
नाहस्य विस्तृत समं बेरोत्सेधञ्च उत्तमम्
नाहस्य विस्तृतार्धञ्च बेरोत्सेधञ्च मध्यमम्
जिंगोन्नत प्रमाणन्तु गेरोत्सेधञ्च मध्यमम्

प्रतिष्ठा कालनियमम्

मेषे प्रतापवान् भूपात् वृषभे तु सुखी भवेत् ।
मिथुने रिक्तहस्तः स्यात् करके दुःखवान् भवेत्
सिंहे सर्वसमृद्धिः स्यात् कन्यायां तत्क्षणं लभेत्
तुलायां लाभवान् भूयात् वृश्चिके विकटं भवेत्
धनुर्मासे तु सौभाग्यं मकरे धनवान् भवेत्
कुंभे स्यादायुषो वृद्धिः मीने स्याद्राजवल्लभाम्
एवं मेषादिमासानां भालान्याहुर्मनीषिणः
असिद्धिभूतिसंपत्ति मरणं बन्धनाशनम्
आयुवृद्धि प्रजानाशः संपदोक्षरसंपदः
शुभप्राप्तिस्थाननाराह्यमो घार्थो वशीकृती
एवं मेषादिमासानां फलानाहर्मनीषिणः
मेषांगना मृगाषाढा मिथुना सिद्धिवर्जिताः

अवशिष्टास्सप्तमासास्सिद्धिदास्सर्वकामसु
लिंगतारत्रयामानमन्तमुदाहृतम्
लिंगतारन्तु पञ्चांशं मध्यमं तमुदाहृतम्
नवधा लिंगतारन्तु उत्तमञ्चैव कथ्यते
अधमोत्तमयोर्मध्ये अष्टभाग विभाजिते
लिंगतार राशक्त्यश्च नवधागानमुच्यते
अर्चनोदय सप्तांशं+नाहमानं समाहीनमर्धात्यन्तु मध्यमम् ।
द्विगुणं श्रेष्ठमानन्तु तरवन्नाहमानकम्
पूजांशोश्च गुणांशन्तु अधमन्तु मुदाहृतम्
तदूर्ध्वे द्व्यंशमाधिक्यं मध्यमं तु विधीयते
अर्चनोदय सप्तांशमुत्तमन्तु मुदाहृतम्
अधमोत्तमयोर्मध्ये अष्टभागविभाजिते
अर्चनोदयसप्तांशं + नाहमानं समाहीनमर्धात्यन्तु मध्यम्
द्विगुणं श्रेष्ठमानन्तु तरवन्नाहमानकम्
पूजांशोश्च गुणांशन्तु अधमन्तुमुदाहृतम्
तदूर्ध्वे द्व्यंशमाधिक्यं मध्यमं तु विधीयते
अर्चनोदय सप्तांशमुत्तमन्तु मुदाहृतम्
अधमोत्तमयोर्मध्ये अष्टभागविभाजिते
अर्चनोदयशक्त्यश्च तत्सामानमुच्यते
इत्येवं मूलशक्त्यश्च उष्णीषापादसमकम्
तत्तुंग दशतालात्तु पादात्युढणीषरावधि
इत्येवं ध्रुवशक्रश्च मुत्सवोश्च विधिं शृणु

भवानी शंकरविवाहम्

अथ वक्ष्ये विशेषेण वैवाह्य विधिरुच्यते
केवलं सहजं पौन्यं शक्तिभेदं त्रिधा भवेत्

पौन्यं मनोन्मनी क्लीक्तं गौरी च सहजं भवेत्
शान्तिभेदं समाख्यातं केवलं शम्भुना विना
वैवाह्यस्य प्रकर्तव्यं शक्तीनां केवलं विना
गौरी मनोन्मनीश्चैव कर्माणश्च प्रचक्ष्यते
ग्रामप्रदक्षिणं कृत्वा पूरकर्ममथाचरेत्
देवाग्रे तु विशेषेण देशुकानुज्ञया सह
माघप्रोष्ठपदातिरिक्तमाखिलमासाः
सर्वमासे विवाहं स्यात् माघप्रोष्ठविवर्जित इति
अन्यवारे विशेषोस्ति भृगुरिन्दुविशेषतः
भृगुरिन्दुवारे अल्पयोगेपि ग्राह्यम्
पुना रोहिणी पौढणाव्युत्तरचैत्र सौम्य पवनानूराधा
शुद्धे सप्तधाम्नीति सिंह मृगो कन्या तुलाकर्कटाः
कोदण्डं घट इत्यधोर्ध्व वदनाश्शास्ताः घिवाहे बुधैः
श्रेष्ठस्तौलि यमांगना घटधनुगोकर्किकण्ठीरवाः
मध्ये सौम्ययुता स्तयोर्ध्व वदनाः सर्वे विवाहे
विहिताः । ऊर्ध्वानलग्रन्तुसूर्याधिष्ठितशश्युपक्रमतया
तिर्यगूर्ध्वाननमिति ।

इति स्वायंभुवागमे वैवाह्यकालनिर्णयः

Reference:
*Svayambhuvasutrasangraha, published ....*
*Svāyambhuvāgama* manuscripts T0626, T0040, T0136, and T1019 from the Muktabodha on-line digital library, based on the paper transcripts of the French Institute of Indology at Pondicherry, India:
http://muktabodha.org/
http://muktalib5.org/digital_library.htm
http://muktalib7.org/IFP_ROOT/access_page.htm